॥ श्रीः ॥



# श्रीमद्भगवद्गीता

श्रीमत्पदवाक्यप्रमाणयोगिवर्यविप्रराजेन्द्रविरचितेन

तदात्मजविरचितभाष्यप्रदीपाख्यतिलक-

संवलितेन तत्त्वैकदर्शननामकेन

भाष्येण विभूषिता

काशीस्थविद्वद्वरैः संशोध्य



काश्यां

राजराजेश्वरीनाम्नि यन्त्रे

आस्तिक जनोपकाराय

संमुद्रिता ॥

का. सु. १ गुरौ

संवत् १९४७



## ॥ श्रीगणेशायनमः ॥

### श्रीमद्भगवद्गीता

### सटिप्पणभाष्यसहिता प्रारभ्यते ॥

---

**श्रीगणेशाय नमः । पार्थाय प्रतिबोधिता भगवता नारायणेन स्वयं व्यासेन ग्रथिता पुराणमुनिना मध्ये महाभारते । अद्वैतामृतवर्षिणीं भगवतीमष्टादशाध्यायिनीमम्ब**

श्रीगणेशाय नमः । यत्कृष्णार्ज्जुनतः ख्यानं शिवयोस्तत्समीर्य्यते । सञ्जयो धृतराष्ट्राय भाष्यन्तत्वैकदर्शनम् ॥ १ ॥ गायत्रयर्थोक्तितो गीता तत्राद्ये बन्धुनाशतः । न योत्स्येहं विषादेन त्वर्ज्जुनोक्तिर्न्निरूप्यते ॥ २ ॥ अथोपक्रमोपसंहारादिषड्विधशास्त्रसिद्धान्तार्थप्रत्यायकलिङ्गैरवधारितं स्वरूपलक्षणं तावद्ध्यानविषयत्वेनाह । पार्थायेति । तत्र तावद्भगवता नारायणेन तत्स्वरूपेण कृष्णेन स्वयमेव पार्थायार्ज्जुनाय प्रतिबोधिता भगवतश्शिवस्य गीतियङ्कथितेत्यर्थः । एवं मध्ये महाभारते पुराणमुनिना ऽष्टादशपुराणकर्त्त्रा मुनिना वेदव्यासेन ग्रथिता

---

श्रीगणेशाय नमः । यस्य किञ्चेति यत्प्रोक्तं यो वेदेत्यत्र दर्शितम् । यन्नातमेति स्तुत्युक्तन्तत्सर्व्वन्त्विह दर्श्यते ॥ १ ॥ नन्विह गीतामात्रेण किम्वर्ण्यं तद्दत्याह । शिवयोरिति । यस्य सा परमा देवी शक्तिराकाशसञ्ज्ञिका । अनन्तैश्वर्य्ययोगात्मा महेशो दृश्यते किलेतिश्रुत्यन्तराज्ञानोः प्रमेव तत्साहित्यदर्शनादिति भावः ॥ १ ॥ नन्विह सञ्जयो धृतराष्ट्राय यद्गीतामात्रेणोक्तवांस्तत्किमित्याह । गायत्र्यर्थेति । तथा च गायन्तं त्रायते या सा गायत्री तत्र च शिवशक्त्योः कीर्त्तनादिहापि तत्कीर्तनस्यावश्यकत्वमित्याशयः ॥ २ ॥ षड्विधेति । तद्यथा । उपक्रमोपसंहारावभ्यासापूर्व्वताफलम् । अर्थवादोपपत्तिश्च लिङ्गं शास्त्रार्थनिर्णय इत्याद्यर्थविशेषेणाष्टादशे वक्ष्यते । पुराणेति । तत्र तावन्मद्वयं भद्वयञ्चैव वत्रयं

त्वा मनसा दधामि भगवद्गीते भवद्वेषिणीम् ॥ १ ॥ सर्व्वोपनिषदो गावो दोग्धा गोपालनन्दनः । पार्थो वत्सस्सुधीर्भोक्ता दुग्धं गीतामृतं महत् ॥ २ ॥ व्यासो ऽस्या ऋषिराख्यातश्छन्दोनुष्टुप्प्रकीर्त्तितः । परात्मा देवता चात्राशोकत्वे विनियोजनम् ॥ ३ ॥

चतुर्व्विधवेदार्थवत्वेन शृङ्खलया रचितेत्यर्थः । एवं सजातीयादित्रिविधभेदवर्ज्जितं शिवमद्वैतन्तुरीयं मन्यन्तइत्यादिश्रुतिवेद्याद्वैतामृतवर्षिणीमित्यर्थः । एवम्भवस्य जन्ममरणादिलक्षणस्य संसारस्य द्वेषिणीं निवर्त्तिनीञ्च, हे अम्ब चिदम्बरशक्तिरुपे त्वां सवितुर्व्वरेण्यमिव सदाशिवार्द्धशरीरिणीं मनसा दधामि धारयाम इत्यर्थः ॥ १ ॥ नन्विदमद्वितीयं शिवतत्त्वममृताख्यं कथं लभ्यमित्यतस्तान्निर्म्मथनप्रकारमप्याह । सर्व्व इति । तत्र तावत्सर्व्वोपनिषदो गावो नाम गोसदृशास्तथा गोपालनन्दनः कृष्णो दोग्धा तत्सदृशः पार्थस्तु वत्सो वत्ससदृश इत्यर्थः । एवं शमदमादिषट्सम्पत्त्या यमनियमादिना च शोभना निर्म्मला बुद्धिर्य्यस्य स सुधीर्भोक्तेत्येवं साधनसंघातैः पर्य्यवसिते वेदचतुष्टयार्थानुगृहीतगायत्र्यर्थगर्भितत्वाद् दुग्धं गीतामृतं शिवमद्वैतं महदिति तत्सर्व्वैरपि मुमुक्षुभिः पेयमित्यर्थः ॥ २ ॥ नन्वसंकीर्त्य यदा मन्त्रीत्यादिस्मृत्या ऋष्यादेः कीर्त्तनस्यावश्यकत्वादाह । व्यास इति । तत्र तावदस्य शास्त्रस्य प्रवर्त्तकत्वादृषिर्व्वेदव्यासस्तथोक्तात्युक्तेत्यादिचतुर्व्वि-

---

वचतुष्टयम् । अनया लिङ्गकुस्कन्दपुराणान्यष्टादशैव हीत्याद्यधिकमुपपुराणान्यप्यष्टादशधावधार्य्यम् ॥ १ ॥ शिवमद्वैतमिति । नन्विह शिवयोस्तत्त्वं समीर्य्यतइत्युक्तन्तत्कथं सजातीयादित्रिविधभेदविवर्ज्जिताद्वैतसिद्धिरिति चेच्छृणु । तद्यथा, नहि विज्ञातुर्व्विज्ञातेर्विपरिलोपो विद्यते ऽविनाशित्वान्न तत्त्वद्वितीयमस्ति यतोन्यद्विभक्तं विजानीयादिति बृहदारण्यकश्रुतेर्व्वन्ध्यायुष्मावदभेदप्रतीतेरिति भावः ॥२॥ असंकीर्त्येति । तद्यथा, असङ्कीर्त्य यदा मन्त्री ऋषिश्छन्दश्च दैवतं, न सम्यक्फलदस्तस्य निगदोप्यर्थपूर्व्वक इत्याद्यवधार्य्यम् । का देवतेति । तत्र सर्व्वे वेदाः सर्व्वाणि च शास्त्राणि समाप्यन्ते पश्चाच्च तदुपदेशा-

**धृतराष्ट्र उवाच। धर्म्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः। मामकाः पाण्डवाश्चैव किमकुर्व्वत सञ्जय॥ १॥ सञ्जय उवाच। दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्य्योधनस्तथा।**

शतिच्छन्दसां मध्ये ऽनुष्टुभो गरिष्ठत्वेनानुष्टुप्छन्दस्तथानया गीतया प्रतिपाद्या का देवता यया शिवरूपामृतत्वोपलब्धिरित्यस्यावश्यम्वक्तव्यत्वेन परात्मा चिदम्बरशक्तिर्द्देवतेत्यर्थः। एवमिहार्ज्जुनस्य तथान्येषाञ्च जन्ममरणादिसंसृतिसंकटानिवृत्तिप्रयोजकत्वेनाशोच्यत्वे च विनियोजनं विनियोग इत्यर्थः॥ ३॥ अथ खल्वखिलपरमार्थमूलेषु धर्म्म एव सकलमूलभूतस्तज्जन्यार्थकाममोक्षान्ता भवन्तीत्यभिप्रेत्य गीतामृतं वक्तुं प्रतिजानीते। धर्म्मक्षेत्रइति। तथा च यदनुकुरुक्षेत्रं देवयजनं सर्व्वेषां भूतानां ब्रह्मसदनमित्यादिश्रुत्या लङ्केश्वरात्समारभ्य सुमेर्व्ववधिमावहन्मध्ये नेमिस्समाख्याता कुरूणां यत्र चाहव इत्यादि स्मृत्या च धर्म्मक्षेत्रे कुरुक्षेत्रे मामका दुर्य्योधनादयः पाण्डवाश्च समवेता एकत्रीभूतास्सन्तो योद्धुमिच्छवः किमकुर्व्वतेति सञ्जयम्प्रत्युवाचेत्यर्थः॥ १॥ एवन्तर्हि सञ्जयस्तु महाभागस्तपसा ज्ञानमाप्तवांस्ततस्तस्मै समं वृत्तं प्रोक्तुं योग्यो ब्रवीद्धच इत्यादिस्मृत्या तु सर्व्वज्ञस्सञ्जयोप्याह। दृष्ट्वेति। तत्र तावच्चित्राङ्गदस्य पुत्रार्थं द्वे स्त्रियौ तत्पराशराद्दृष्टयवरोधतश्चान्धश्चन्दनैः पाण्डुरो ह्यभूदित्यादिस्मृत्या पाण्डवानामनीकं सैन्यं व्यूढं व्यूहरचनया धृष्टद्युम्नादिभिस्स्थापितं दुर्य्योधनो दृष्ट्वा धनुर्व्विद्याप्रवर्त्तकं द्रोणाचार्य्यमुपसङ्गम्येदानीं नीतिकौशल्येन राजाब्रवीदिति परमार्थः॥ २॥

---

निष्कलपरिज्ञानमपीति सर्व्वमत्र तत्रतत्राध्याये निरूपयिष्यामः॥ ३॥ धर्म्म एवेति। तद्यथा। धर्म्मात्प्रवर्त्तते लोको धर्म्मात्स्वर्गः प्रपद्यते। धर्म्मात्कैवल्यमाप्नोति धर्म्ममूला व्यवस्थितिरित्यादिस्मृत्यन्तरादिति भावः। एवं कपूयचरणाः कपूयां योनिमापद्यन्ते पुण्यचरणाः पुण्यां योनिमापद्यन्तइत्यादिश्रुत्यन्तराच्चेत्यवधेयम्। दुर्य्योधन इति। इह दुःखेन जयो दुर्ज्जयस्तदेव धनमुत्कर्षेण यस्य स दुर्य्योधन इत्यर्थः॥१॥ नीतिकौशल्येनेति। एतदप्युक्तमिहैव भारते। तद्यथा। कालस्य कारणं राजा राज्ञो वा कालकारणन्तदेतत्प्रश्नबाहुल्ये राजा कालस्य कारणमित्यतो लोकरक्षणार्थमपि राजनीतिरेव गरीयसीत्यवधेयम्॥ २॥

आचार्य्यमुपसङ्गम्य राजा वचनमब्रवीत् ॥२॥
पश्यैतां पाण्डुपुत्राणामाचार्य्य महतीञ्चमूम्।
व्यूढान्द्रुपदपुत्रेण तव शिष्येण धीमता ॥३॥
अत्र शूरा महेष्वासा भीमार्ज्जुनसमा युधि।
युयुधानो विराटश्च द्रुपदश्च महारथः ॥ ४ ॥
धृष्टकेतुश्चेकितानः काशिराजश्च वीर्य्यवान्।
पुरुजित्कुन्तिभोजश्च शैब्यश्च नरपुङ्गवः ॥ ५ ॥
युधामन्युश्च विक्रान्त उत्तमोजाश्च वीर्य्य-

अथ तदेव वाक्यविशेषरूपम्वचनमुदाहरति । पश्यैतामिति । तत्रैवंसति पाण्डुपुत्राणाञ्चमूं महतीमनेकाक्षौहिणीसहितत्वेन दुर्न्निवाराम्पश्यापरोक्षीकुर्व्वित्यर्थः । अहं शिष्यत्वात्त्वामाचार्य्यम्प्रार्थयामीत्याह । आचार्य्येति । हे पाण्डुपुत्राणामाचार्य्य द्रुपदपुत्रेण तव शिष्येण त्वद्विद्याबलेन धीमता त्वद्वधार्थमुत्पन्नेन त्वया स्थापितेन ममानर्थकारित्वमपि सूचितमित्याशयः ॥ ३ ॥ नन्वेकेन द्रुपदपुत्रेण किम्भविष्यतीत्याह। अत्रेति। तत्र शूरानेव विशिनष्टि। महेष्वासा इति। तत्र तावन्महान्त इषवः क्षिप्यन्ते यैस्ते महेष्वासा धनुर्व्विशेषवन्त इत्यर्थः। एवमिह, सहस्रान्योधयेद्यस्तु येन चैकेन धन्विना। महारथस्स विज्ञेयस्ततोप्यतिरथोऽधिक इत्याद्युक्त्या युयुधानादयस्त्रयः प्रत्येकं महारथा बोध्याः ॥ ४ ॥ एवमन्यानपि गणयन्नाह । धृष्टकेतुरिति । तत्र तावद् धृष्टश्शत्रुभिर्द्दुर्द्धर्षः केतुः पताका यस्येत्यर्थः । एवमिह शिबिनोऽपत्यं शैब्यस्सच नराणां मध्ये पुङ्गवश्श्रेष्ठ इत्यर्थः ॥ ५ ॥ अथ शुक्लतरोपि शुक्लो भवत्येवेति न्यायेनातिरथानपि महारथित्वेनाह । युधा-

---

आचार्य्येति । तत्र त्वमेतत् सैन्यम्पश्येत्युक्त्या निगूढं द्वेषं द्योतयति। एवन्तर्हि यस्य धर्म्मद्वेषम्प्राप्यापीदृशी दुष्टबुद्धिस्तस्य का ऽनुतापशङ्का सर्व्वाभिशङ्कितत्वे नातिदुष्टाशयत्वादिति भावः । अक्षौहिणीति । तत्र शतलक्षहस्तीनवलक्षयोद्धालक्षौहियत्र तुरङ्गमाः पृथगित्यादिना याक्षौहिणी तत्सहितत्वेन नेत्यर्थः ॥ ३ ॥ ४ ॥ ५ ॥ युधेति । तत्र युधं यो द्रुमेवाससन्ता-

वान् । सौभद्रो द्रौपदेयाश्च सर्व्वएव महा-
रथाः ॥ ६ ॥ अस्माकन्तु विशिष्टा ये तान्नि-
बोध द्विजोत्तम । नायका मम सैन्यस्य सं-
ज्ञार्थन्तान् ब्रवीमि ते ॥ ७ ॥ भवान्भीष्मश्च
कर्णश्च कृपश्च समितिञ्जयः । अश्वत्थामा
विकर्णश्च सौमदत्तिस्तथैव च ॥ ८ ॥ अन्ये
च बहवश्शूरा मदर्थे त्यक्तजीविताः ।
नानाशस्त्रप्रहरणास्सर्व्वे युद्धविशारदाः ॥ ९ ॥

मन्यु श्चेति । एवन्तर्हि सर्व्वएवैते महारथा इत्यनेनातिरथानामप्युपलक्षणम्बोध्यम् । तल्लक्षणन्तु, एको दशसहस्राणि योधयेद्यस्तु धन्विनाम् । शस्त्रशास्त्रप्रवीणाश्च महारथ इति स्मृतः । अमितान्योधयेद्यस्तु स प्रोक्तोऽतिरथस्तु सः । रथीत्वेकेन यो योद्धा तन्न्यूनोऽर्द्धरथस्स्मृत इत्यादि द्रष्टव्यम् ॥ ६ ॥ अथात्मनोपि प्राबल्यं द्योतयन्नाह । अस्माकन्त्विति । तत्रैवंसत्यस्माकं सर्व्वेषां मध्ये ये विशिष्टा विशेषबलवन्तस्तान्निबोध निश्चयेन मद्वचनादवधारयेत्यर्थः । एवमिह द्विजोत्तमेत्यनेनास्य ब्राह्मणत्वेन युद्धानुकल्परहितत्वेपि क्षुद्रेपि नूनं शरणम्प्रपन्ने ममत्वमुच्चैश्शिरसां सती वेति स्मृतिन्यायेन मद्धेतवे भक्तवात्सल्येन युद्धन्त्वमपि कुर्व्विति द्योतयन्संज्ञार्थन्तान्ब्रवीमितइति स्फुटीकृतम् ॥ ७ ॥ तत्र तावत्के तर्ह्यस्मदीया इति तानापि गणयति । भवानिति । एवमिह शत्रुजयम्विना नस्वस्थश्चेतो यस्य स चाश्वत्थामा द्रोणाचार्य्यस्य पुत्र इत्यर्थः ॥ ८ ॥ एवमपरानापि स्ववर्गस्थानाह ।

---

म्मन्यतइत्यर्थंको युधामन्यु श्चे त्यर्थः ॥६॥ क्षुद्रे पीति । सोप्याचार्य्यस्स्वधर्म्मं रचयन्भक्तवात्सल्येन स्ववचसैव शरीरात्ययं मन्वानो नरो वा कुञ्जरो वेति छलोक्त्या भविष्यतीति द्रष्टव्यम् ॥७॥ अश्वत्थामेति । तत्र पुत्रसंकटाद् द्रोणाचार्य्यो मरिष्यतीति कृत्वा युद्धारम्भएवाश्वत्थामा ब्रह्मलोके गतवानिति तथाप्यागत्य विं करिष्यतीति ततोपि भीतिरिति तमपि गणयतीत्याशयः ॥ ८ ॥ एवंसतीति । यस्य त्वन्यस्त्रियै चित्तं नीतिर्यो नाभिनन्दति । मृषोक्तिश्च छलेोक्तिश्च तस्य राज्य-

**अपर्य्याप्तन्तदस्माकम्बलम्भीष्माभिरक्षितम् ।**
**पर्य्याप्तं त्विदमेतेषां बलं भीमाभिरक्षित-**
**म्॥१०॥ अयनेषु च सर्व्वेषु यथाभागमवस्थि-**
**ताः । भीष्ममेवाभिरक्षन्तु भवन्तस्सर्व्व-**
**एव हि ॥ ११ ॥ तस्य सञ्जनयन्हर्षङ्कुरुवृद्धः**
**पितामहः । सिंहनादं विनद्योच्चैश्शङ्खं दध्मौ**
**प्रतापवान् ॥ १२ ॥ ततश्शङ्खाश्च भेर्य्यश्च पण-**
**वानकगोमुखाः । सहसैवाभ्यहन्यन्त सश-**

अन्ये चेति । तत्र तावन्मदर्थे त्यक्तं जीवितं यैस्ते तथाभूता इत्यर्थः । एवमिह स्वस्य सैन्यस्य प्राबल्यं द्योतयन्सर्व्वे युद्धविशारदा इत्यप्युक्तमवधार्य्यम् ॥ ९ ॥ अथ तेभ्यस्स्वसैन्यस्याल्पत्वेन शैथिल्यं दर्शयन्नाह । अपर्य्याप्तमिति । एवंसत्यस्माकम्बलं सैन्यं भीष्मेण वृद्धेन यतो रक्षितमतो ऽपर्य्याप्तमित्यर्थः ॥ १० ॥ अथ च ततः किङ्करणीयमस्तीत्याह । अयनेष्विति । तत्र तावत्समरसमये युद्धभूमौ यथाभागं स्वसैन्यदलम्प्रत्यवस्थितास्सन्तस्सर्व्वेपि यूयम्पृष्ठतः पार्श्वतश्च भीष्ममेव स्वसेनाधिपतिं रक्षन्त्वित्यर्थः । तत्र रक्षिते च सेनापतौ सर्व्वं सुरक्षितम्भविष्यतीत्यभिप्रायः ॥ ११ ॥ अथ तद्वाक्यं श्रुत्वा भीष्मेण किङ्कृतमित्याह । तस्येति । एवंसति तस्य राज्ञो भयनिवर्त्तकं स्वविजयसूचकञ्च हर्षं जनयन्नुच्चैर्म्महान्तं सिंहनादम्विनद्य प्रतापवान्कुरुषु वृद्धश्शङ्खं दध्मावित्यन्वयः ॥ १२ ॥ अथानन्तरं किमभवदित्याह । तत इति । तत्र तावत्पणवाश्चानकाश्च गोमुखाद्याश्च वाद्यवि-

---

म्रपश्यतीति धर्म्मतत्त्वमजानता केवलसैन्यबलेनैव जयइत्येवमेव जानता च दुर्योधनेन मम सैन्यमपर्य्याप्तमित्येवमुक्तमित्यर्थः ॥ १० ॥ पृष्ठत इति । तद्यथा कैवर्त्तेन विना नौका रथस्सारथिना विना । सैन्याधिपम्विना सैन्यं नष्टमेतन्न संशय इत्यतोपि सैन्याधिपतिमेव सर्व्वतो रक्षन्त्वित्याशयः ॥ ११ ॥ भयनिवर्त्तकमिति । तदेतच्च दलद्वये समारूढे युध्यमाने रणोत्सुकैः । प्रथमम्वाद्यशास्त्रादीन्प्रहरेत्तस्य नो जय इत्यादिनीतिप्रबन्धमजानन्दध्मावित्यर्थः ॥१२॥१३॥

ब्दस्तुमुलोऽभवत् ॥ १३ ॥ ततश्श्वेतैर्हयैर्युक्ते
महति स्यन्दने स्थितौ । माधवः पाण्डव-
श्चैव दिव्यौ शङ्खौ प्रदध्मतुः ॥ १४ ॥ पाञ्च-
जन्यं हृषीकेशो देवदत्तं धनञ्जयः । पौण्ड्रं
दध्मौ महाशङ्खं भीमकर्म्मा वृकोदरः ॥ १५ ॥
अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः ।
नकुलस्सहदेवश्च सुघोषमणिपुष्पकौ ॥ १६ ॥

शेपास्सहसा तत्क्षणमेवाभ्यहन्यन्त वादिता इत्यर्थः । स चशब्दस्तुमुलो महानासीत्तथापि पाण्डवानां क्षोभो न जात इत्याशयः ॥ १३ ॥ अथातः परङ्किम्वृत्तमित्याह । तत इति । एवन्तर्ह्यग्निदत्ते श्वेतैर्हयैर्युक्ते रथे स्थितौ यौ तयोरेकस्य माधवत्वन्तु लक्ष्मीनारायणाख्योयं योगोयम्विहितो मयेत्यादिना पाद्मे सदाशिवेनैवाभिहितन्तथा तेषाम्पाण्डवत्वन्तु शिवाज्ञया पराशरेणाभिहितमित्येतयोर्दुर्ज्जयत्वं स्फुटीकृतम् ॥ १४ ॥ अथ किं नाम कौ तौ शङ्खावित्याह । पाञ्चजन्यमिति । तत्र तावद्धृषीकाणीन्द्रियाणि तेषां शिवज्ञानार्चनध्यानैरीशो नियन्ता श्रीकृष्णः पाञ्चजन्यं देवदत्तञ्च तत्प्रसादे वेहामुत्र धनानि जयतीति धनञ्जयोपि परसैन्यजयार्थं दध्मावित्यर्थः ॥ १५ ॥ एवमपरैरपि किङ्कृतमित्याह । अनन्तेति । तत्र तावत्कुन्त्या महातपसा धर्म्ममाराध्य लब्धपुत्रेति तस्याः पुत्रास्स च जयभागित्वेन युध्यन्स्वयमेव विशेषतास्स्थिरो भवतीति भावः ॥ १६ ॥ एवमेतत्पक्षाश्रितानपरानप्याह । काश्यश्चेति । ततश्चेह सङ्ग्रामय-

---

पाण्डवत्वमिति । तत्र तावत्पुरा चित्राङ्गदस्येत्थं हे स्त्रियौ तद्द्वयोरिह । नेत्रे पिधाय चैका स्त्री द्वितीया चन्दनाङ्किता । गते समचतस्तस्मादन्धस्त्वं कोथ पाण्डुर इत्यादिपुराणोक्त्या पाण्डवत्वन्त्वेतेषां शिवाज्ञया पराशरेण सम्पादितमित्यधिकमन्यत्र विस्तरः ॥ १४ ॥ ॥ १५ ॥ धर्म्ममाराध्येति । तत्र चातुर्व्वर्ण्यप्रयो नन्दीधर्म्मो गोत्वादिलक्षणः । स एवायं शिवसाक्षादन्तिमोऽनन्तलक्षण इत्याद्युक्त्या यस्य कस्यापि धर्म्मस्याराधनेन जातोयमित्याशयः ॥ १६ ॥ १७ ॥ १८ ॥ व्यदारयदिति । इदमप्यागामिपराजयजनकं

काश्यश्च परमेष्वासश्शिखण्डी च महारथः ।
धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजि-
तः ॥ १७ ॥ द्रुपदो द्रौपदेयाश्च सर्व्वशः
पृथिवीपते । सौभद्रश्च महाबाहुश्शङ्खान्द-
ध्मुः पृथक्पृथक् ॥ १८ ॥ स घोषो धार्त्तरा-
ष्ट्राणां हृदयानि व्यदारयत् । नभश्च पृथि-
वीञ्चैव तुमुलो व्यनुनादयन् ॥ १९ ॥ अथ
व्यवस्थितान्दृष्ट्वा धार्त्तराष्ट्रान्कपिध्वजः ।

ञ्चेष्वपराजितस्सात्यकिश्चान्ये च ये ते सर्व्वेपि शङ्खन्दध्मुः पृथक्पृथ-गिति हे पृथिवीपते धृतराष्ट्र स्थिरो भूत्वा शृण्विति द्वयोरर्थः ॥ १७ ॥ १८ ॥ अथ ततः परं किमत्यन्तं सद्यः समरप्रयोजकमभूदित्याह । सघोष इति । एवंसति स शङ्खोद्घोषो धार्त्तराष्ट्राणां धृतराष्ट्रसम्बन्धिनां सर्व्वेषां भीष्मद्रोणादीनामपि हृदयानि व्यदारयंत्तत्तुल्याम्व्यथां जनितवानित्यर्थः । यतस्तुमुलस्तीव्रो नभश्च पृथिवीञ्च । अतिध्वनिभिश्चापूरयन्निति यावदर्थः ॥ १९ ॥ अथानन्तरं धार्त्तराष्ट्राणाम्भयं प्रदर्श्य पाण्डवानान्तद्वैपरीत्यं दर्शयितुमाह । अथेति । तत्र तावद्युद्धोद्योगेन व्यवस्थितानेव तान्धार्त्तराष्ट्रान्दृष्ट्वा कपिध्वजो ऽर्ज्जुनो हनूमता वीरेण ध्वजस्थितेनानुगृहीतश्शस्त्रसम्पातेपि निर्भयत्त्वेन धनुरुद्यम्य हृषीकेशम्प्रति सेनयोरित्यादि वाक्यं महीपतिं धृतराष्ट्रं सम्बोद्ध्याहेत्यन्वयः । एवन्तर्ह्यष्टावक्रमुनेश्शापं श्रुत्वा, विष्णुः पुरा तपद्वदर्य्याश्रममासाद्य तद्दूरादच्युतो

---

लक्षणं, यत्तेषां महोद्घोषो हृदयानि व्यदारयदिति वेद्यम् ॥ १९ ॥ अच्युतेति । ननु षोडशसहस्रास्त्रवलिप्तस्य कृष्णस्य कथमच्युतत्त्वं कथञ्च तासाङ्गोपीमण्डलानाञ्चौरैर्ह्रतत्वमित्यष्टावक्रकथयान्यतोवधार्य्यम् । ननु सारथिरूपेण रथस्थे कृष्णे सति ततो लघुरूपस्य मम क्षतिरेवेति चेन्नैवमित्याह । का क्षतिरिति । तथया, सङ्कटे समनुप्राप्ते वयस्ये सहकारिणस्त्वा-

प्रवृत्ते शस्त्रसम्पाते धनुरुद्यम्य पाण्डवः ॥२०॥
हृषीकेशन्तदा वाक्यमिदमाह महीपते। सेन-
योरुभयोर्म्मध्ये रथं स्थापय मेच्युत ॥ २१ ॥
यावदेतान्निरीक्षेहं योद्धुकामानवस्थितान्।
कैर्म्मया सह योद्धव्यमस्मिन्रणसमुद्यमे ॥ २२ ॥
योत्स्यमानानवेक्षेहं यएतेत्र समागताः।
धार्त्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः ॥२३॥
सञ्जय उवाच ॥ एवमुक्तो हृषीकेशो गुडाके-

ह्यभूदित्यादिस्कान्दोक्तया तास्मिन्रथस्थे मम का क्षतिरिति द्वयोरर्थः ॥२०॥२१॥ ननु किमर्थं स्थापयसीत्याह। यावदिति। एवन्तर्हि नाधमैर्व्विषमैर्य्युक्तन्नान्तरायेण वा पुनः। बलेन वयसा शस्त्रैर्द्धर्म्मयुद्धम्प्रचक्षतइत्यादिस्मृत्या कैर्म्मया सह योद्धव्यमित्यादि योग्यायोग्यं विवेचयितुं मे रथं स्थापयेति पूर्व्वेणान्वयः॥ २२ ॥ नन्विह धर्म्मयुद्धे प्रथमतः किङ्करणीयमस्तीत्याह। योत्स्यमानानिति। तत्र तावद्धार्त्तराष्ट्रस्य दुर्योधनस्य प्रियचिकीर्षवो ऽधर्म्मतोपि युद्धात्प्रियङ्कर्त्तुमिच्छवो येत्र समागतास्तानेतान्योत्स्यमानानहमवेक्षे तावन्मे रथं स्थापयेति पुनः पूर्व्वेणान्वयः॥ २३ ॥ अथ भारतोक्तम्वृत्तन्धृतराष्ट्रम्प्रति सञ्जयेन यदुक्तन्तदुपसंहरति। एवमिति। तत्रैवंसति हे भारत भरतवंशोद्भव प्रज्ञाचक्षुर्धृतराष्ट्र गुडाका या निद्रा तदीशोऽर्ज्जुनो जितेन्द्रियस्तथा हृषीकेशोपि तत्समकक्ष एवेति तत्र भीष्मद्रो-

---

-मिनस्तवकाशेव सखायवेति नान्यथेत्यवधारिते, मयि का चतिरित्याशयः॥ २० ॥ २१ ॥ धर्म्मयुद्धमिति। तद्यथा, वेदप्रणिहितो धर्म्मो ह्यधर्मस्तद्विपर्य्ययः। वेदस्य चेश्वरात्मत्वात्तत्र मुह्यन्ति चेश्वर इति स्मृत्यन्तरादपीति भावः॥ २२ ॥ अधर्म्मतोपीति। ननु ते श्रुतिस्मृतिप्रसिद्धं धर्मं जानन्तोपि कथमधर्म्मतापि प्रवृत्ता इतिचेत्, शृणु, तद्यथा,- यथैधस्तेजसमुत्थेन नाशमृच्छति वह्निना। तथा ऽज्ञातात्मा लोभेन सहजेन विनश्यतीति स्मृत्यन्तराद्विमोहेन ते कुर्व्वन्तीत्याशयः॥ २३ ॥ तत्समकक्ष एवेति। तत्र हृषीकापी-

शेन भारत । सेनयोरुभयोर्म्मध्ये स्थाप-
यित्वा रथोत्तमम् ॥ २४ ॥ भीष्मद्रोणप्रमुख-
तस्सर्व्वेषाञ्च महीक्षिताम् । उवाच पार्त्थ
पश्यैतान्समवेतान्कुरूनिति ॥ २५ ॥ तत्रा-
पश्यत् स्थितान्पार्थः पितॄनथ पितामहान् ।
आचार्य्यान्मातुलान्भ्रातॄन्पुत्रान्पौत्रान्सखीं-
स्तथा ॥ २६ ॥ श्वशुरान्सुहृदश्चैव सेनयोरु-
भयोरपि । तान्समीक्ष्य स कौन्तेयस्सर्वान्ब-
न्धूनवस्थितान् ॥ २७ ॥ कृपया परयाविष्टो

णप्रमुखतो रथं स्थापयित्वा पश्यैतान्युद्धे समवेतान्कुरूनित्यर्ज्जुनम्प्रति हृषीकेश
उवाचेति द्वयोरर्थः ॥ २४ ॥ २५ ॥ अथ ततो धर्म्मयुद्धे सोर्ज्जुनः किमपश्य-
दित्याह । तत्रापश्यदिति । तत्र तावत्पृथ्व्याः स्त्रीस्वभावेन शोकमोहाक्रान्ततया
तत्सम्बन्धिनस्तस्यापि तद्वत्ता समुपस्थितेति सूचयंस्तादृशः पार्त्थः पितॄनथेत्याद्य-
पश्यत्तथा लक्षणया पुत्रान्पौत्रानेवमेवं सखीनश्वत्थामजयद्रथप्रभृतींश्चापश्यदित्य-
र्थः ॥२६॥ अथैवमपरानपि ददर्शेत्याह । श्वशुरानिति । एवमिह सुहृदो मित्रा-
णि कृतवर्म्मभगदत्तप्रभृतीन्सर्व्वान्बन्धून्सेनयोरुभयोरप्यवस्थितान्समीक्ष्येत्यर्थः ॥२७॥
ननु ततस्तान्समीक्ष्य कस्मात्स्त्रीप्रभवत्वेन कौन्तेयत्वम्प्राप्त इत्याभिप्रेत्याह । कृपये-
ति । एवन्तर्हि, दया दैन्यन्तदेवास्ति यत्र धर्म्मः प्रवर्द्धते । तस्मात्स्वर्गापवर्गाय

---

न्द्रियाणि तेषामीशो नियन्तेति तद्गोपीनां भ्रात्रोके तत्पतित्वेनेदानीम-
पि तत्त्वेन सपत्न्या ब्रह्मचर्य्यत्वमेवेत्यप्यवधार्य्यम् ॥ २४ ॥ २५ ॥
साहस इति । तत्र यद्यपि पृथिव्या ईश्वरस्त्वत्र विदितो वेत्यर्थे तथेश्वरस्त्वत्र
विदितइतिचेत्यनेनापि क्षते पार्त्थ इत्युक्त्या भूपतित्वं न शूरत्वमेव स्फुटोक्त-
स्तथापीदानीं युद्धे शैथिल्यं मन्वानो ऽयंभेदेनाप्युक्तम् ॥ २६ ॥ मत इति ।
तदुक्तन्धर्म्मप्रबन्धेषु, तद्यथा, य आहवेषु युद्ध्यन्ते भूम्यर्थमपराङ्मुखाः । आकूटे-

विषीदन्निदमब्रवीत् । अर्ज्जुन उवाच ॥ दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समुपस्थितम् ॥ २८ ॥ सीदन्ति मम गात्राणि मुखञ्च परिशुष्यति । वेपथुश्च शरीरे मे रोमहर्षश्च जायते ॥ २९ ॥ गाण्डीवं स्रंसते हस्तात्त्वक्चैव परिदह्यते । न च शक्नोम्यवस्थातुम्भ्रमतीव च मे मनः ॥ ३० ॥ निमित्तानि

धर्म्मयुद्धे वधो मत इत्यादिस्मृत्या कृपयेत्यस्यानावश्यकत्वेप्यद्य कृष्णं सम्बोध्य दृष्ट्वेमं स्वजनमित्यादि दयावाक्यन्तम्प्रत्यर्ज्जुन उवाचेत्याशयः ॥ २८ ॥ अथ ततः परङ्किमब्रवीदित्याह । सीदन्तीति । एवन्तर्हीमं स्वजनमात्मीयम्बन्धुवर्गं युयुत्सुं युद्धेच्छुं युद्धभूमौ चोपस्थितं दृष्ट्वा मम गात्राण्यङ्गानि सीदन्तीत्यर्थः । एवम्वेपथुः मम शरीरे कम्पो रोमहर्षो रोमाञ्चितवपुष्ट्वञ्च जायतइत्यर्थः ॥ २९ ॥ अथ परङ्कथमर्ज्जुनोवसन्न इत्याह । गाण्डीवमिति । एवंसतीदानीं गुप्तवनवासे श्रीसदाशिवेन दत्तमप्यजेयन्धनुर्हस्तात्स्रंसते तथा बन्धुपरितापात्त्वगपि परिदह्यत-इत्यवस्थातुञ्च न शक्नोमीत्यादिरर्थः ॥ ३० ॥ अथ पुनरप्यवस्थानासामर्थ्ये कारणमाह । निमित्तानीति । तत्र तावत्को ब्रह्मा ईशो रुद्रस्तावस्येत्यर्थे केशाद्वोन्यतरस्यामिति वप्रत्ययेन साधुरिति हे केशव त्वद्बलात्तयोर्ममापि बलमस्ति तथापीदानीम्वामाङ्गस्फुरणादीनि विपरीतान्येव निमित्तानि पश्यामीत्यर्थः । अथ च द्वाविमौ पुरुषौ लोके सूर्य्यमण्डलभेदिनौ । परिव्राड्योगयुक्तश्चेद्रणे चाभिमुखो हत इत्यादिना हतस्यैव श्रेयोविशेषाभिधानाद्धन्तुस्तु न किञ्चित्सुकृतमिति

---

वायुर्धैर्य्यान्ति तं स्वर्गं योगिनो यथेत्याद्यवधार्य्यम् ॥ २८ ॥ रोमाञ्चितेति । यद्यप्ययन्धर्म्मो न शोभनस्तथाप्यजातत्वेन शौर्य्यादिधर्म्मानभिज्ञं नेदानीन्त्वथोक्तवानिति भावः ॥ २९ ॥ तपसेति । अरण्ये पाण्डवैस्तप्तं दृष्ट्वा शम्भुः कृपाकरः । वाराहमिन्द्रजिष्णुमाकल्प्य तत्र विव्याधसोर्ज्जुनादित्यादिना हि गुप्तवनवासे दर्शितत्वादिति बोध्यम् ॥ ३० ॥ विपरीतान्येवेति । तथार्ज्जुनस्य कादर्य्येणैव हि

च पश्यामि विपरीतानि केशव । न च
श्रेयो ऽनुपश्यामि हत्वा स्वजनमाहवे ॥ ३१ ॥
नं काङ्क्षे विजयङ्कृष्ण न च राज्यं सुखानि
च । किन्नो राज्येन गोविन्द किं भोगैर्ज्जीवि-
तेन वा ॥ ३२ ॥ येषामर्थे काङ्क्षितं नो राज्य-
म्भोगास्सुखानि च । तइमेवस्थिता युद्धे
प्राणांस्त्यक्ता धनानि च ॥ ३३ ॥ आचार्य्याः

यत्रस्वजनवधानर्थक्यन्तत्र कथं स्वजनं हनिष्यमीत्याशयः ॥ ३१ ॥ ननु मा भूददृष्टम्प्रयोजनाम्विजयो राज्यं सुखानि च दृष्टप्रयोजनानि निर्व्विवादानीत्याह । न काङ्क्षइति । तत्र तावत्त्वमपि हे कृष्ण कृष विलेखनइत्यनुशासनात् लोकान्नचयस्येवेति कृत्वा बन्धून्संहृत्य नहि राज्यं सुखानि चाकाङ्क्षे इत्यर्थः । एवमेव हे गोविन्द गोब्राह्मणहिताय चेत्यादि पाद्मोक्त्या विप्राधीनं जगद्भवेदित्यादिस्मृत्या च तवापि जगद्रक्षकत्वमेव युक्तन्तथापीदानीन्त्वमपि बन्धून्हत्वा गामिन्द्रियं रक्षयसीति तवेश्वर योग्यस्य नैवं युक्तमित्याशयः ॥ ३२ ॥ अथ राज्यादीनामनाकाङ्क्षत्वे तु हेतुमप्याह । येषामिति । तत्र तावद्येषान्तु बन्धूनामर्थे नोस्माकं राज्यमपेक्षितम्भोगास्सुखानि चेत्याद्भित एवैते प्राणा धनानि च त्यक्ता युद्धेवस्थिता इति नायं स्वार्थो यतश्शोभन इत्यर्थः ॥ ३३ ॥ ननु च

---

वामाङ्गानि स्फुरन्तीति तन्नेदमजानन्नयम्प्राप्तवानिति गूढाशयः ॥ ३१ ॥ रचयस्येवेति । तत्र यद्यपि जगताङ्कर्त्ता प्रजापतिरेव तथाप्यस्य कर्तृत्वसहकारित्वेन सृष्टिकर्तृत्वमप्यवधारितमिति बोध्यम् । गोब्राह्मणेति । तत्र गवास्वचनमन्वेतुमुक्तम् । तद्यथा । गोचर्म्म गोमयं क्षीरं ह्यखिलन्धर्म्मसाधनं, स्वयन्त्वपात्मना गावः कुर्व्वन्त्यथ किमिच्छसीत्यादिस्मृत्यापि तासां रक्षणकर्त्तृत्वं सर्व्वेषां युक्तमित्यधिकमन्यत्र विस्तरः ॥ ३२ ॥ नायमिति । इदमपि वाक्यं यस्य च्छेदच्छेतद्भावं शरमुद्गरयष्टिभिर्देवकन्याहृतम्वीरं हरन्ति रमयन्ति चेत्याद्यजानतोक्तमित्यवधार्य्यम् ॥ ३३ ॥ ३४ ॥ गुरुसूदन इति । तत्र गुरुस्तु स्ववचसैव

पितरः पुत्रास्तथैव च पितामहाः। मातुलाः श्व
शुराः पौत्राश्यालास्सम्बन्धिनस्तथा ॥ ३४ ॥
एतान्न हन्तुमिच्छामि घ्नतोपि मधुसूदन ।
अपि त्रैलोक्यराज्यस्य हेतोः किन्नु मही-
कृते ॥ ३५ ॥ निहत्य धार्त्तराष्ट्रान्नः का
प्रीतिः स्याज्जनार्द्दन । पापमेवाश्रयेदस्मा-
न्हत्वैतानाततायिनः ॥ ३६ ॥ तस्मान्नार्हा
वयं हन्तुं धार्त्तराष्ट्रान्स्वबान्धवान्। स्वजनं
हि कथं हत्वा सुखिनस्स्याम माधव ॥ ३७ ॥

केषामर्थे राज्यादिकमपेक्षितमिति तानप्याह । आचार्य्या इति । एवन्तर्ह्येको गोत्रे स भवति पुमान्यः कुटुम्बाम्बिभर्त्तीत्यादि नीतिधर्म्मविरोधादपि नायं युक्तो बन्ध्वादिवध इति तद्वधादुपरम्यते ॥ ३४ ॥ नन्वेवन्तर्हि त्वामेव हत्वैते राज्यङ्करिष्यन्तीत्येतावताप्याह । एतान्नेति । एवंसति हे मधुसूदन त्वमपि तथैव ननु गुरुसूदन इत्युपदिशन्नपि त्रैलोक्यराज्यस्यापि हेतवे नैतान्हनिष्यामि किन्नु महीकृते मह्यर्थमित्याशयः ॥ ३५ ॥ नन्वग्निदोगरदश्चैव क्षेत्रदारहरस्तथा । ब्रह्मघ्नश्च कृतघ्नश्च षडेते आततायिनः। आततायिनमायान्तं हन्यादेवाविचारयन् । आततायि वधे दोषो हन्तुर्भवति कश्चनेत्यादि धर्म्मप्रबन्धादवश्यमेवैते हन्तव्यास्तथापीह व्यवहारमात्रमवलम्ब्याह ।' निहत्येति । एवन्तर्हि फलाभावादनर्थफलकत्वाच्च नार्हा वयं स्वबान्धवान्हन्तुं युक्ता इत्यर्थः । यतस्त्वमपि लक्ष्मीपतित्वान्माधव एवेति नालक्ष्मीके लक्ष्मीविनाशके कर्म्मणि प्रवर्तयितुमर्हसीति स्वजनं हीत्यनेन स्फुटीकृतमिति द्वयोरर्थः ॥ ३६ ॥ ३७ ॥ ननु फलतोपि च यत्कर्म्म

---

मरिष्यतीति तद्वत्तमजानतोक्तमित्यवधार्यम् ॥ ३५ ॥ व्यवहारेति । तत्र तावदिदमपि यदिदम्भेदवचनं लोकवादे विरुद्ध्यते । प्रमाणे चाप्रमाणे च विरुद्धे शास्त्रता कुत इत्यादि स्मृतिविरुद्धमेव सहसोक्तमित्यवधेयम् ॥ ३६ ॥ अनर्थेति । इहाप्यर्थफलकत्वमेव युद्धस्येत्यजानतोक्तम् ॥ ३७ ॥ कथ्यत इति । यथा लोके

यद्यप्येते न पश्यन्ति लोभोपहतचेतसः ।
कुलक्षयकृतं दोषं मित्रद्रोहे च पात-
कम् ॥ ३८ ॥ कथं न ज्ञेयमस्माभिः पापाद-
स्मान्निवर्त्तितुम् । कुलक्षयकृतं दोषम्प्रपश्य-
द्भिर्ज्जनार्द्दन ॥ ३९ ॥ कुलक्षये प्रणश्यन्ति
कुलधर्म्मास्सनातनाः । धर्मे नष्टे कुलं कृत्स्न-
मधर्म्मोभिभवत्युत ॥ ४० ॥ अधर्म्माभिभ-
वात्कृष्ण प्रदुष्यन्ति कुलस्त्रियः । स्त्रीषु

नानर्थेनानुबध्यते । केवलप्रीतिहेतुत्वात्तद्धर्म्म इति कथ्यतइत्यादिस्मृत्या श्येनयागा-दाविव नास्माकम्प्रवृत्तिरुचितेत्याह । यद्यपीति । एवन्तर्हि यद्यप्येते आहूतो न निवर्त्तेत द्यूतादपि रणादपीति मन्यमानाश्श्येनादिवदनर्थं न पश्यन्ति तथाप्य-स्माभिस्तज्ज्ञातृभिः कथं न ज्ञातव्यन्ततो निवार्त्तितुञ्च शक्नुमो यतस्त्वमपि जना-नर्द्दयसीति जनार्द्दन एव नतु हिंसक इति द्वयोरर्त्थः ॥ ३८ ॥ ३९ ॥ नन्व-स्त्वेवन्तथाप्याहूतो न निवर्त्तेतेत्यादिश्श्येनादिवच्चावश्यङ्कर्त्तव्यमेवेति चेत्तत्राह । कुलक्षय इति । एवं कुलक्षये सति कुलधर्म्मा नित्याग्निहोत्रादयो राजसूयादयश्च सनातना धर्म्माः प्रणश्यन्ति प्रत्युताधर्म्म एवेत्यर्थान्तरतापत्तिरिति भावः ॥ ४० ॥ ननु च कीदृशस्तत्राधर्म्म इत्याह । अधर्म्मेति । एवंसत्याशुद्धेस्सम्प्रतीक्ष्यो हि महा-पातक दूषितः । न स्त्रीणां जायते शुद्धिर्य्योनौ शुक्राभिषेचनादित्यादि स्मृत्या धर्म्म-

---

घवनकण्डूयनादीनि न दोषाय न वा परमार्थतः फलाय चेत्येवमपीदं नास्ति किन्त्वनर्थफलमेवात्र युद्धे पश्याम इत्यतो न करिष्याम इत्याशयः । नन्वेते कुतो न पश्यन्तीत्याह । एवन्तर्हीति । तथैवंसत्येते दुराग्रहमापन्ना लोभोपहत-चेतसश्च न पश्यन्तीति किन्तत इत्याशयः ॥ ३८ ॥ ३९ ॥ नित्याग्निहोत्रेति । तद्यथा, सन्ध्या स्नानं जपो होमो देवतानाञ्च पूजनमातिथ्यमग्निहोत्रञ्च षट् क-र्म्माणि दिनेदिनइत्यादि द्रष्टव्यम् ॥ ४० ॥ ४१ ॥ एवमसि.ते । एवमिह न गोचा।षि

दुष्टासु वार्ष्णेय जायते वर्णसङ्करः ॥ ४१ ॥
सङ्करो नरकायैव कुलघ्नानाङ्कुलस्य च ।
पतन्ति पितरो ह्येषां लुप्तपिण्डोदकाः क्रि-
याः ॥ ४२ ॥ दोषैरेतैः कुलघ्नानाम्वर्णस-
ङ्करकारकैः । उत्साद्यन्ते जातिधर्म्माः कुल-
धर्म्माश्च शाश्वताः ॥ ४३ ॥ उत्सन्नकुलध-

स्याभिभवादाधिक्यात्पुरुषाणाम्प्रायश्चिताच्छुद्धिरपि स्त्रीणान्तु सर्व्वथैव शुद्धिराहि-त्यमेवेत्याशयः ॥ ४१ ॥ नन्वेवमपि ततः किम्भविष्यतीत्याह । सङ्कर इति । तथासति कुलघ्नानां सङ्करो नरकायैव भवतीत्यन्वयः । तत्र न केवलङ्कुलघ्नाना-मेव नरकपातः किन्तु तत्पितॄणामपीत्याह । पतन्तीति । एवन्तर्हि वर्णधर्मांश्च ये मर्त्या ये चान्ये च्युतगोत्रिणः । काषायिनस्तथान्योपि सर्व्वेनिरयगामिन इत्यादि पाद्मस्मृत्या एवमगोत्रभिदङ्गोविदम्वज्रबाहुमित्यादिश्रुतिमूलकत्वेन भविष्यन्तीन्द्र-शिक्षिता इत्यादिस्कान्दस्मृत्या च हि यतो लुप्तपिण्डोदकक्रियास्ततस्तेषाम्पितरो-पि पतन्तीत्याशयः ॥ ४२ ॥ नन्वस्त्वेवं धर्म्मयुद्धे ऐहिकम्पारमार्थिकम्वा सिद्ध्यतु परन्तु साङ्कर्य्यप्रदः कुलघ्नदोषस्तु विना सतीभावङ्कथं निर्व्वहेत स च सर्व्वासां न सम्भवतीत्याह । दोषैरिति । एवन्तर्हि राजर्षिर्नैव ब्रह्मर्षिर्न्नवा वर्णाश्रमी यतः । ऋणत्रयी भवेद्यस्तु कुलघ्नस्सोप्युदीरित इत्यादिपाद्मस्मृत्या वर्णसङ्करकारकैरेतैः कुलघ्नानां दोषैर्ज्जातिधर्म्माः कुलधर्म्माश्च शाश्वता उत्साद्यन्तइत्यर्थः ॥ ४३ ॥

---

शेषान्ते ऽगोत्रिणश्च्युतगोत्रिणस्तान्भिनत्तीत्यगोत्रभित्तमगोत्रभिदमित्यर्थः । तद्यथा, वज्रं सो हन्त यातेत्युक्त्या ऋजुबाहुं दण्डिनः छित्त्वा शिरस्ततस्ते-षाङ्गोदावर्य्याम्बिदर्भेणनासित्यादिना दण्डीन्द्रसम्वादेन स्पष्टमेव दर्शितम् ॥४२॥ ऋणत्रयीति । तत्र नहि देवादिऋणत्रयविमुक्तिम्विना स्वतः परतो वास्याधि कैवल्यसिद्धिरित्युक्तक्रममिवेत्यादिश्रुत्याप्यवधार्य्यम् । स्मृतिश्च, देवोपासनया देवं पैत्रन्तु पुत्रतो जयेद् व्रतोपासनयात्वार्षं त्रिभिस्तु परमं जयेदित्यवधेय-म् ॥ ४३ ॥ ॥ ४४ ॥ अपराङ्मुखा इति । तद्यथा ललाटदेशे रुधिरं स्रवद्यस्या-

र्म्माणां मनुष्याणां जनार्द्दन । नरके नियतम्वासो भवतीत्यनुशुश्रुम ॥ ४४ ॥

अहो बत महत्पापङ्कर्तुम्व्यवसिता वयम् । यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः॥४५॥

यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः । धार्त्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् ॥ ४६ ॥ सञ्जय उवाच ॥ एवमुक्त्वार्ज्जुनस्सङ्ख्ये रथोपस्थ उपाविशत् । विसृज्य सशरञ्चापं शोकसम्विग्नमानसः ॥ ४७ ॥

ननु च ततः किम्भविष्यतीत्याह । उत्सन्नेति । तथासत्यसूर्य्या नाम ते लोका अन्धेन तमसा वृतास्ताꣳस्ते प्रेत्याभिगच्छन्तीत्यादिश्रुत्यनुशासनमपीत्यवधार्य्यम् ॥ ४४ ॥ ननु य आहवेषु वध्यन्ते भूम्यर्त्थमपराङ्मुखा आकूटैरायुधैर्य्यान्ति ते स्वर्ग्गं योगिनो यथेत्यादियाज्ञवल्क्योक्तधर्म्मस्मृत्या धर्म्मयुद्धस्यावश्यकत्वेप्याह । अहो बतेति । तत्रैवंसति नाहं धर्म्मयुद्धम्विस्मरामः किन्तु यद्राज्यसुखलोभेनेत्यादिरीत्या स्वजनं हन्तुमुद्यता वयमित्येतावतैव विस्मराम इत्याशयः ॥ ४५ ॥ एवंसति युद्धेन मरणमेव श्रेयस्तर्ह्याह । यदीति । तथासत्यप्रतीकारम्व्यापारमकुर्व्वन्तं मामशस्त्रं शस्त्रपाणयो यदि धार्त्तराष्ट्रा हन्युस्तन्मे क्षेमतरम्भवेदिति परमार्थः ॥४६॥ अथातः परं सञ्जयस्सर्व्वम्पूर्व्वोक्तवृत्तं स्मारयन्भगवतश्शिवस्य गीतेत्युपसंहरति । एवमिति । तत्र तावत्पूर्व्वं युद्धार्थमुत्थितः इदानीन्तु सङ्ख्ये संग्रामे युद्धोपक्रान्तान्बन्धूनवलोक्य रथोपस्थे रथस्योपरि सशरञ्चापम्विसृज्य शोकसम्विग्नमानसस्सन्नुपररामेत्याशयः ॥ ४७ ॥ इति श्रीमत्पदवाक्यप्रमाणयोगिवर्य्यविप्रराजेन्द्रविर-

---

हवे तु प्रविशेच्चवत्क्रान्तस्सोमपानेन किलालतुल्यं संग्रामयज्ञे विधिवच्च दृष्टमित्यादिधर्म्मप्रबन्धरीत्यावधार्य्यम् ॥ ४५ ॥ भगवत इति । तत्र तावदेकापि शक्तिः परमेश्वरस्य भिन्ना चतुर्धाव्यवहारकाले भोग्ये भवानीपुरुषे च विष्णुः क्रोधे च काली समरे च दुर्गेत्यादिश्रुत्या तात्स्थ्यात्तद्व्यपदेश इतिवच्च भगोविष्णुस्स्त्रीत्वेन विद्यते यस्यस भगवाञ्छिवस्तस्य गीतेत्यर्थ इत्याशयः ॥ ४६ ॥ ४७ ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्या-
यां योगशास्त्रे श्रीकृष्णार्ज्जुनसम्वादे ऽर्ज्जु-
नविषादो नाम प्रथमोध्यायः ॥ * ॥
सञ्जय उवाच॥ तन्तथा कृपयाविष्टमश्रुपूर्णा-
कुलेक्षणम् । विषीदन्तमिदम्वाक्यमुवाच
मधुसूदनः ॥ १ ॥ श्रीकृष्ण उवाच ॥ कुतस्त्वा-
कश्मलमिदम्विषमे समुपस्थितम् । अना-
र्य्यजुष्टमस्वर्ग्यमकीर्त्तिकरमर्ज्जुन ॥ २ ॥
क्लैब्यं मा स्म गमः पार्थ नैतत्त्वय्युपप-

चिते तत्त्वैकदर्शने भाष्येऽर्ज्जुनविषादनिरूपणं नाम प्रथमोध्यायः ॥ * ॥
ब्रह्माक्षयं मृषा जीवो मायात्वेन च नश्वरः । युद्धचस्वेत्यर्ज्जुनायोक्तं द्वितीये सा-
ङ्ख्यदर्शनम् । अथ धृतराष्ट्रस्य हर्षप्रयोजकम्वृत्तं सञ्जयेन किमुक्तमित्याह ।
तन्तथेति । एवंसति तमर्ज्जुनम्पूर्व्वोक्तरीत्या कृपयाविष्टङ्कथमपि युद्धं न करि-
ष्यामीत्यश्रुपूर्णाकुलेक्षणम्विषीदन्तम्प्रतीदम्वाक्यं मधुसूदनोप्युवाचेति भावः ॥ १ ॥
ननु तस्माअर्ज्जुनाय कृष्णः किमुवाचेत्याह । कुतस्त्वेति । तत्रैवंसति कुतस्त्वा-
म्प्रति कश्मलं शिष्टगर्हितत्वेन मालिन्यम्विषमे ऽसमये समुपस्थितमित्यर्थः । तत्कथम्पु-
नरित्याह । अनार्य्येति । तत्र तावन्न वेदमर्य्यादया जुष्टं न वा स्वर्गाय हितं न
वा कीर्त्तिप्रयोजकमिति सर्व्वथा तदिदमनर्थकमित्यादि मधुसूदनार्ज्जुनेत्यादिपदार्था-
नुसन्धानेन विवदद्भ्यां दर्शितमित्याशयः ॥ २ ॥ ननु किमत्र मयि न युक्तमि-
त्याह । क्लैब्यमिति । एवंसति पार्थत्वेनार्ज्जुनत्वेनापि तदयोग्यत्वमाह । नैतदिति ।
तत्रैवंसति परं शत्रुन्तापयसीति हे परन्तप क्षुद्रं शौर्य्यादिगुणरहितं हृदयदौर्व्व-

इति श्रीमद्योगिवर्य्यविप्रराजेन्द्रात्मजविरचिते भाष्यप्रदीपे प्रथमोध्यायः ॥ १ ॥
नन्विदानीं युद्धाङ्गीकारे हि तन्निवृत्तौ च भिक्षाटनमित्यनयोर्म्मध्ये तदेकस्य
निश्चयार्थं द्वितीयाध्यायमारभते । ब्रह्मेति । तत्र तावदविनाशी वरे आत्मा तं
विजिज्ञासस्वेत्यादिश्रुतेः शिवमेकमनाद्यन्तमविनाशिनमीश्वरमित्यादिस्मृ-
तेश्च ब्रह्मा क्षयं वस्तु मायात्वेन मृषा नश्वरश्चेति द्वितीये सांख्यदर्शनमि-

द्यते। क्षुद्रं हृदयदौर्बल्यन्त्यक्त्वोत्तिष्ठ पर-
न्तप ॥ ३ ॥ अर्ज्जुन उवाच ॥ कथम्भीष्म-
महं सङ्ख्ये द्रोणञ्च मधुसूदन। इषुभिः
प्रतियोत्स्यामि पूजार्हावरिसूदन ॥ ४ ॥
गुरूनहत्वा हि महानुभावाञ्छ्रेयो भोक्तुम्भै-
क्ष्यमपीह लोके। हत्वार्थकामांस्तु गुरूनि-
हैव भुञ्जीय भोगान् रुधिरप्रदिग्धान् ॥ ५ ॥
न चैतद्विद्मः कतरन्नो गरीयो यद्वा जयेम

ल्यन्त्यक्त्वोत्तिष्ठ युद्धाय संरब्धो भवेत्यर्थः ॥ ३ ॥ ननु नायं मम शोकमोहादिव-शात्स्वधर्म्मस्य त्यागः किन्तु स्वधर्म्मत्वाभावादधर्म्मत्वाच्चास्य युद्धस्य त्यागो मया क्रियतइत्याह। कथमिति। एवन्तर्ह्यत्र युद्धे भीष्मम्पितामहं द्रोणाचार्य्यं महान्तम्प्रति यत्र वाचापि योद्धुमनुचितन्तत्र सङ्ख्ये रणे तत्रापीषुभिः कथम्प्रतियोत्स्याम इत्यर्थः। यतस्तौ पूजार्हौ कुसुमादिभिरर्च्चनयोग्यावित्यवधार्य्यम् ॥ ४ ॥ नन्वस्त्वेवम्परन्तु त्वङ्किङ्करिष्यसीत्याह। गुरूनिति। एवंसति महानुभावान् वृद्धत्वेन भीष्मादीनाचार्यत्वेन च द्रोणाचार्य्यादीन्गुरूनहत्वा भैक्ष्यमपि भोक्तुं श्रेयो ननु तद्वधेन राज्यमित्यर्थः। ननु किमेते मरिष्यन्त्येवेत्यत्र निश्चयाभाव इत्याह। हत्वार्थेति। तत्रैवंसतीहैतादृशान्मृत्युकामान्हत्वा भोगानेव यदि भुञ्जीय चेत्तर्हि रुधिरप्रादिग्धानेवात्यन्तञ्जुगुप्सितानेव तान् जानीम इत्यर्थः ॥ ५ ॥ ननु गुरोरप्यवलिप्तस्य कार्य्याकार्य्यमजानतः। उत्पथप्रतिपन्नस्य परित्यागो विधीयतइत्यादिस्मृत्या युद्धगर्व्वेणावलिप्तानामन्याय एव राज्यग्रहणे शिष्यद्रोहेण च कार्य्याकार्य्यविवेकशून्यत्वेनोत्पथत्वमपीत्येषाम्वध एवोचित इत्याह। न चैतदिति ॥ नन्वस्त्वेवम्परन्तु भुक्तेपि

---

त्यर्थः ॥ १ ॥ यच्च वाचापीति। गुरुं हुङ्कृत्यतुङ्कृत्य विप्रान्निर्ज्जित्य वादतः। अरण्ये निर्ज्जले देशे स भवेद्ब्रह्मराक्षस इत्यादिस्मृत्यन्तरादिति भावः ॥ ४ ॥ भैक्ष्यमिति। तत्र तस्य समूह इत्यधिकारे ष्यञ्प्रत्यये कृते भिक्षाणां समूहो भैक्ष्यमित्यर्थः। नलोकव्रतोबहुधनम्भिक्षयित्वा स्वस्थस्तिष्ठामीत्यर्थः ॥ ५ ॥ परित्यागइति। तदेतत्स्कान्देप्युक्तम्। तद्यथा, नारदो हि पुरा भ्रान्त्या किरा-

यदि वा नो जयेयुः। यानेव हत्वा न जिजी-
विषामस्ते ऽवस्थिताः प्रमुखे धार्त्तरा-
ष्ट्राः ॥ ६ ॥ कार्पण्यदोषोपहतस्वभावः
पृच्छामि त्वां धर्म्मसम्मूढचेताः। यच्छ्रेय-
स्स्यान्निश्चितम्ब्रूहि तन्मे शिष्यस्तेऽहं शाधि
मां त्वाम्प्रपन्नम् ॥ ७ ॥ नहि प्रपश्यामि

लशुने न व्याधेश्शान्तिरिति न्यायेन कतरत्कि नोस्माकङ्गरीयश्श्रेष्ठत्वम्भविष्यति यद्वैतेषाङ्गरीयश्श्रेष्ठत्वम्भविष्यतीति वयं जयेमा यद्वैतएव जयेयुरिति न जानीम इत्यर्थः। ननु गुप्तवनवासे शवररूपिणस्सदाशिवस्य सर्व्वस्ववरदानात्तवैव जयो भविष्यतीति तत्राप्याह। यानेवेति। एवन्तर्हि यानेव बन्धून्हत्वा जीवितुमपि वयं नेच्छामः किमत्र विषयान्राज्यभोगरूपानुपभोक्तुं तिष्ठामो यतस्तएवात्र धार्त्तराष्ट्राः प्राणांस्त्यक्त्वा धनानि चावस्थिता इत्याशयः ॥ ६ ॥ नन्विहामुत्रच कैवल्यत्त्रिभिर्हीनः पशुर्भवेद्धन्त्रिकेवाधमस्सोथ वृथायुः कृपणं क्षिपेदित्यादिस्मृत्या युद्धस्यावश्यकत्वं मन्यमान आह। कार्पण्येति। एवंसतीह जन्मन्येतएव मदीयास्तेषु हतेषु किं जीवितेनेत्यभिनिवेशरूपो ममतालक्षणः कार्पण्यदोषस्तेनोपहतास्तिरस्कृतो युद्धोद्योगलक्षणस्स्वभावो यस्य सोहमिदानीं त्वां धर्म्मसम्मूढचेतास्सन्पृच्छामीत्यर्थः। अतो यन्निश्चितमैकान्तिकं श्रेयस्तन्मे ब्रूहीत्यर्थः। ननु च त्वं मम सखा न तु शिष्योऽत आह। शिष्यस्तेहमिति। एवन्तर्हि समित्पाणिश्श्रोत्रियम्ब्रह्मनिष्ठङ्गुरुमुपसरेदित्यादिश्रुतियोग्यत्वादहन्तव शिष्य एव न सखा ज्ञानाल्पत्वादतस्त्वाम्प्रपन्नं शरणागतं मां शाधि शिक्षयेत्याशयः ॥ ७ ॥ ननु यदि शिष्योसि किन्तेभिप्रेतन्तद्वक्तव्यमित्याह। नहीति। एवन्तर्हि ममेन्द्रियाणामुच्छोषणमुत्कृष्टं शोकं यत्कर्म्मापनुद्यात्तन्न हि

---

तङ्गुरुमावहन्सनत्कुमारतः पश्चाच्छैवींदीचांसमाचरादित्यादि द्रष्टव्यम् ॥ सर्व्वस्वेति। तदिदं स्कान्दे प्रयुक्तम्। तद्यथा, नरो नारायणश्चैव साम्बमिष्ट्वा पुरा खलु। सर्व्वस्ववरमाकाङ्क्ष्य लब्धवांस्तत्र मादन इत्याद्यवधार्य्यम् ॥ ६ ॥ सखेति। एवं सख्येकता समता धैर्य्यं स्वच्छता प्रियता तथा। उत्साहश्चैव वीर्य्यञ्च सप्तैते सख्यहेतव इत्यादिसप्तप्रकारेणापि ज्ञानाल्पत्वान्न सखित्वं किन्तु शिष्यत्वमेवेत्याशयः ॥ ७ ॥ तदिदानीं युद्धङ्कर्त्तुं दुष्करमिति मन्वान-

न हि प्रपश्यामि ममापनुद्याद्यच्छोकमुच्छोषणमिन्द्रियाणाम्।
अवाप्य भूमावसपत्नमृद्धं राज्यं सुराणाम-
पि चाधिपत्यम् ॥ ८॥ सञ्जय उवाच । एव-
मुक्त्वा हृषीकेशं गुडाकेशः परन्तपः । न यो-
त्स्यइति गोविन्दमुक्त्वा तूष्णीम्बभूव ह ॥९॥
तमुवाच हृषीकेशः प्रहसन्निव भारत । सेन-
योरुभयोर्म्मध्ये विषीदन्तमिदं वचः ॥ १० ॥

प्रपश्यामीत्यर्थः । नन्वेतावतापि, हत्वा तान्लप्स्यते स्वर्गो जित्वा वा भोक्ष्यसे महीमित्यादिस्मृत्युक्तम्फलमस्तु का क्षतिरिति चेन्नेत्याह । अवाप्येति । तत्रैवंसति भूमौ भूम्यवच्छेदेनासपत्नं शत्रुवर्ज्जितं सुखदमृद्धमैश्वर्य्यन्तथा सुराणामाधिपत्यमवाप्यापि मम यच्छोकमपनुद्यात्तन्नहि प्रपश्यामीत्यर्थः ॥ ८ ॥ अथ च तदनन्तरमर्ज्जुनः किमुक्तवानित्याह।एवमिति । एवन्तर्हि सदाशिवैकतपसा गुडाकेशत्वेन परन्तपोप्यर्ज्जुनस्स्वसमानत्वेन मन्यमानो हृषीकेशम्प्रति गोविन्दमितीन्द्रियपारवश्याभिप्रायेण तम्प्रत्युक्त्वाह। प्रसिद्धमेव तूष्णींबभूवेति तात्पर्य्यम्॥ ९ ॥ एवं स्वच्छभावेनोपेक्षितवत्त्यप्यर्ज्जुने श्रीकृष्णस्तु नोपेक्षितवानित्याह। तमुवाचेति ।एवंसति युद्धोद्यमेन सेनयोरुभयोर्म्मध्ये समागत्य तद्विरोधिनम्विषादम्प्राप्तमर्ज्जुनम्प्रति प्रहसान्निवेदम्वचो हृषीकेश उवाचेति सञ्जयोपि धृतराष्ट्रम्प्रति भारतेति सम्बोध्य स्मारितवानित्याशयः ॥ १० ॥ अथ च विनश्येद्व्यवहारो वै संसिद्ध्येच्चेत्स एव हि । सिद्ध्यसिद्ध्योस्समत्वेन कर्त्तव्यं धर्म्मसाधनमित्यादिस्मृत्यर्थानुसन्धानेन पुनरर्ज्जुनम्प्रत्युपदि-

---

श्याह । एवन्तर्हीति । तथासति ललाटदेशे रुधिरं स्रवद्यस्याहवे तु प्रविशेच्च वह्निमित्यादिफलानभिकाङ्क्षया स्वस्याधैर्य्येण चेदमुक्तमित्यवधार्य्यम् ॥ ८ ॥ तपसेति । तदेतदुक्तं स्कान्दे, तद्यथा, अरण्ये पाण्डवैस्तप्तं दृष्ट्वा शम्भुः कृपाकर इत्याद्युक्त्या । शिवमद्वैतन्तुरीयं मन्वानो गुडाका निद्रा तदीशत्वन्नेत्याशयः ॥ ९ ॥ नोपेक्षितवानिति । एवन्तर्हि गुरवः पाणिभिर्घ्नन्ति शामतेर्न्न विशेषितः अतोत्र कुशलन्तद्वल्लं नघ्नाप्यभीप्सितमित्यादिनीतिप्रबन्धरीत्या नोपेक्षितवानित्यर्थः ॥ १० ॥ पण्डिता इति । तदेतत्स्कान्दे प्यु-

श्रीकृष्ण उवाच ॥ अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे । गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥ ११ ॥ नत्वेवाहं जातु नासं नत्वं नेमे जनाधिपाः । न चैव न भविष्यामस्सर्व्वे वयमतः परम् ॥ १२ ॥ देहिनोस्मिन्यथा देहे कौमारं यौवनं जरा । तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्य-

शन्नाह । अशोच्यानिति । तत्रैवंसति भीष्मद्रोणादीनात्मसहितान्बन्धून्शोचितुमयोग्यानेव त्वमन्वशोचः अहो अयोग्यमेतद्यतः कथम्भीष्ममहं सङ्ख्ये इत्यादिपण्डितानिव वादान्भाषसे अथ च गतासून् गतप्राणानगतासूनगतप्राणांश्च बन्धूनन्वशोचः किमित्याश्चर्य्यमेतद्यतश्शुनि चैव श्वपाकेचेत्यादिलक्षणलक्षिताः पण्डिता नानुशोचन्तीत्यर्थः ॥ ११ ॥ ननु कथमेषामशोच्यत्वमिति पुनरवधारयति । नत्वेवेति । तथासति यथाहमितः पूर्व्वं जातु नाम कदाचिदपि नासमपि त्वासमेव तथा त्वमप्यासीरिमे जनाधिपाश्चासन्नेव तथा सर्व्वे वयम्त्वमिमे जनाधिपाश्चातः परं न भविष्यामो ऽपि तु भविष्याम एवेति परमार्थः ॥ १२ ॥ ननु देहात्मनः प्रत्यक्षेणैव विनाशदर्शनात्कथं जन्मान्तरंत्वमेषामित्यत्र दृष्टान्तेनाह । देहिन इति । एवन्तार्हि यथा कौमाराद्यवस्थाप्राप्तिरेकस्यैव देहात्मनस्तथा जातमात्रेण स्तनपानादौ प्रवृत्तिदर्शनात्पूर्व्वसंस्कारजन्यत्वेन पूर्व्वजत्वमप्यवगम्यतइति नात्र विमोहाद्यवसरः । एतेन देहेन्द्रियमनःप्राणविज्ञानं क्षणिकमित्यादि बहुशो वदन्तो नास्तिका निरस्ताः ॥ १३ ॥ नन्वस्त्वेवं देहान्तरस्य प्राप्तौ का क्षतिः परन्त्वणुं हि जीवम्प्रति-

---

ज्ञम् तद्यथा । गतागतं न शोच,द्यौ लाभालाभौ जयाजयौ सदसद्विवेकयुक्तत्वात्पण्डितस्सोप्युदीरित इत्यादिस्मृतिन्यायेनापि पण्डिता नानुशोचन्तीत्याशयः ॥ ११ ॥ नान्वेति । यतो यद्यत्सावयवन्तत्तज्जन्ममरणादिमत्वेन वैषम्यनैर्घृण्येन च जगताम्पूर्व्वजत्वमेव बोध्यम् । तद्यथोक्तं ब्रह्मवैवर्त्ते पि, अजन्मानो लोकाः किमवयववन्तोपि जगतामधिष्ठातारं किम्भवविधिरनादृत्य भवतोत्यादि द्रष्टव्यम् । निरस्ता इति । तद्यथोक्तम्पादमे,लोकायतास्तथा जैनाः क्षणिविज्ञानवादिनस्सौगताश्चार्वाकाश्च तथा देहात्मवादिन इत्यादिनोक्तत्वेन ते

ति ॥ १३ ॥ मात्रास्पर्शास्तु कौन्तेय शीतो-
ष्णसुखदुःखदाः । आगमापायिनो ऽनित्या-
स्तांस्तितिक्षस्व भारत ॥१४॥ यं हि न व्यथय-
न्त्येते पुरुषम्पुरुषर्षभ । समदुःखसुखं धीरं
सोमृतत्वाय कल्पते ॥ १५ ॥ नासतो
विद्यते भावो नाभावो विद्यते सतः । उभ-
योरपि दृष्टोन्तरस्त्वनयोस्तत्त्वदर्शिभिः ॥ १६ ॥

देहभिन्नं शरीरसंय्योगवियोगयोग्यमित्यादिस्मृत्याभासिकेनापि जीवेन शरीरस्य सम्बन्धवियोगयोरात्यन्तिकदुःखमेवेति तदपि जीवब्रह्मणोरेकत्वेन परिहरन्नाह । मात्रेति । तत्रैवंसति दुःखत्रयाभिघातादित्यादिस्मृतिन्यायेनाध्यात्मिकादिदुःखत्रय-स्यात्यन्तनिवृत्तेरावश्यकत्वे स्थिते मीयन्ते विषया याभिस्ता मात्रा इन्द्रियाणि तासां स्पर्शा विषयैस्सह सम्बन्धास्तेप्यागमापायिन उत्पत्तिविनाशवन्त इति तएव शीतोष्णादिद्वारा सुखदुःखदा नतु ते तत्त्वज्ञस्य विभोरात्मनस्तस्य निर्गुणत्वान्निर्विकारत्वाच्चेत्यन्यज्ञानादन्यगतानर्थनिवृत्तिर्नोचितेति जीवब्रह्मणोरेकत्वमपि स्फुटीकृतम् ॥ १४ ॥ ननु किमस्ति तत्त्वज्ञानिनो लक्षणमित्याह । यं हीति । एवन्तह्येतं ह वा व न तपति न तपति किमहं साधु नाकरवङ्किमहम्पापमकरवमित्यादिश्रुत्या तत्वज्ञस्य निर्विकारित्वे स्थिते तमेते मात्रास्पर्शा न व्यथयन्ति यतस्समदुःखसुखो धीरो ध्यानशीलश्च तमित्यर्थः । स एव पुनरमृत्वाय वेदैरनेकैरहमे इत्यादिश्रुतिन्यायेनामृतत्वाय शिवत्वाय कल्प्यतइति परमार्त्थः ॥ १५ ॥ अथ सदेवेत्यादि यत्रातम इत्यादिश्रुत्या जीवेश्वरजगद्भेदो जगद्भेदश्च पञ्चधा । आद्यन्तयोरभावे तु मध्योपि तन्न चेष्यतइत्यादिस्मृत्या च सर्व्वम्प्रपञ्चजातं दर्प्पणाभासवन्मृषैवेति विद्वदनुभवेनापि तोलयन्नाह । नासत इति । एवंसतीदं जगदसदेव तर्हि कथम्भासते यदि च सदेव तर्हि कथं प्रलयान्ते शिवज्ञानान्ते वा निवृत्तिरित्युभयोरन्तस्तत्त्वदर्शिभिर्ज्ञायते न त्वन्यैरिति विवेकः ॥ १६ ॥ ननु कस्तर्ह्यन्ततस्सद्रूपो ऽमृतश-

---

निरस्ता इत्यर्थः ॥ १३ ॥ अहमे इति । तत्र स्मृतिश्च तद्यथा वाङ्मनः प्राण-देहादेर्भिन्नोह्यात्मा परश्शिवः । चैवचैवन्नयोश्चापि परस्माच्चो निरामय इत्याद्यन्यत्र विस्तरः ॥ १५ ॥ विद्वदनुभवेनेति । तत्र तावद्वेदान्ते व्वं यमद्वैतं शिवमेक-

**अविनाशि तु तद्विद्धि येन सर्व्वमिदन्ततम् । विनाशमव्ययस्यास्य न कश्चित्कर्त्तुमर्हति ॥ १७ ॥ अन्तवन्त इमे देहा नित्यस्योक्ताश्शरीरिणः । अनाशिनो ऽप्रमेयस्य तस्माद्युध्यस्व भारत ॥ १८ ॥ य एन-**

व्दाभिधेय इत्याह । अविनाशीति । एवन्तर्ह्योन्तत्सदिति निर्द्देशो ब्रह्मणस्त्रिविधस्स्मृत इत्यादिस्मृत्या, सर्गात्पुरा निरालोकं यदेकं निष्कलम्परञ्चिदानन्दमयं ज्योतिस्स आद्यः केवलश्शिव इत्यादिस्मृत्यानन्दाब्धेः कमपि च घनीभावमास्थाय रूपमित्यादिस्मृत्या च संहारकर्त्तुः सदाशिवादेवामृतशब्दाभिधेयान्मायया जगदुत्पन्नमपीत्यवधार्य्यम् । अत एव सर्व्वोपनिषदो गावो दोग्धा गोपालनन्दन इत्यादावप्यविनाशित्वेनामृतशब्दाभिधेयत्वं शिवस्यैवेति बोध्यम् ॥ १७ ॥ अथ, कर्म्मशास्त्रे कुतो ज्ञानन्तर्क्के नैवास्ति निश्चयस्साङ्ख्ययोगौ भिदापन्नौ शाब्दिका श्शब्दतत्पराः अन्ये पाखण्डिनस्सर्व्वे ज्ञानवार्त्ता सुदुर्ल्लभा एकम्वेदान्तविज्ञानं स्वानुभूत्या विराजतइत्यादिस्मृत्या वेदान्तप्रामाण्यस्यावश्यकत्वे स्थिते तत्र च तत्त्वमसीत्यादिमहावाक्यैर्ज्जीवब्रह्मणोरेकत्वेन देहात्मनस्तुच्छत्वेनोपेक्षणीयत्वमेवेत्याह । अन्तवन्त इति । तथा च श्रुतिः एको देवस्सर्व्वभूतेषु गूढस्सर्व्वव्यापी सर्व्वभूतान्तरात्मा कर्म्माध्यक्षस्सर्व्वभूताधिवासस्साक्षी चेताः केवलो निर्गुणश्चेत्यादि द्रष्टव्यम् ॥ १८ ॥ नन्वेवञ्चेज्जन्ममरणादिव्यवस्था कथमुपपद्यतइति चेद्, भ्रान्तानान्तदिष्यतइत्याह । य एनामिति । एवन्तर्हि य एनम्वेत्ति हन्तारन्तार्किकादि-

---

मनामयं, साङ्ख्येन मुक्तिरत्युग्रा योगाचार्य्यैर्हरिस्स्मृतः । तर्क्केमीश्वाविराट्चैव विराडात्मा तदन्तिकैः । जैमिनिर्व्वेदमाचष्टे तथान्येष यथामतीत्यादिषड्विधानुभवेषु शिवमद्वैतन्तुरीयं मन्यन्तइत्यादिश्रुत्या सिद्धान्तवेदान्तानुभवेनेत्यर्थः ॥ १६ ॥ कर्म्मशास्त्र इति । अत्र यद्यपि कर्म्मणैव हि संसिद्धिमास्थिता जनकादय इत्यनेन निष्कामकर्म्मणैव ज्ञानादिसिद्धिरपेक्षिता तथापीह केवलैहिकफलोद्देश्येनैव क्रियमाणहेतौ निरीश्वरवादत्वेनार्धवैनाशिके मीमांसाशास्त्रे इत्यर्थः । एवन्तत्वा प्रतिष्ठानादित्यादिस्मृतिविरुद्धन्यायवैशेषिकयोरपि निश्चयाभावात्कुतो ज्ञानमित्यादिरर्थः ॥ १८ ॥ भ्रान्तानामिति । लौका-

य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् । उभौ
तौ न विजानीतो नायं हन्ति न हन्यते ॥१९॥
न जायते म्रियते वा कदा चिन्नायम्भूत्वा
भविता वा न भूयः । अजो नित्यश्शाश्वतो-
यम्पुराणो न हन्यते हन्यमाने शरीरे ॥ २० ॥
वेदाविनाशिनं नित्यं यएनमजमव्ययम् । कथं

रात्मनः कर्तृत्वाभ्युपगमाद्यश्चैनं मन्यते हतञ्चार्व्वाकादिरात्मनो विनाशित्वाभ्युपगमादिति तावुभौ न विजानीत इत्यर्थः । वस्तुतस्तु न तत्र रथा न रथयोगा न च पन्थानो भवन्ति अथ रथान्रथयोगान्पान्थस्सृजतइत्यादि बृहदारण्यकश्रुतेः । तथा यदिदं दृश्यते किञ्चित्तन्नास्ति किमपि ध्रुवं यथा गन्धर्व्वनगरं यथा वारि मरुस्थलइत्यादिस्मृतेश्च सर्व्वम्प्रपञ्चजातमध्यस्तत्वेन मिथ्यैवेति बोध्यम् ॥ १९ ॥ नन्विह शरीरसंय्योगवियोगरूपेण प्रत्यक्षमेव जन्ममरणादिकं दृश्यतएवेति चेन्नैवमित्याह । न जायत इति । तत्रैवं मायाशरीरे प्रतिबिम्बगात्रे यत्स्वप्नदेहे हृदि कल्पिताङ्गे नश्याद्विनश्यत्स्वपि का विचारणा कुतो जगच्चापि कुतो नु देह इत्यादिस्मृत्या वस्तुगत्या कदा चिदपि न जायते न वा म्रियते न वा भूत्वापि पुनर्भावितेत्यर्थः । योगवासिष्ठेपि आकाशादपि विस्तीर्णश्शुद्धस्सूक्ष्मोऽव्ययश्शिवः य आत्मा स कथं राम जायते म्रियते ऽथवेत्यादि द्रष्टव्यम् । नन्वस्त्वेवम्परन्तु देहेन्द्रियाद्यतीत आत्मा कथंरूप इत्याह । अज इति । एवन्तर्हि यथा हि निर्ल्वयिनी वल्मीके प्रत्यस्तामृताशयीत एव मात्मविदि न पापं श्लिष्यतइत्यादिश्रुतेश्शरीरे हन्यमाने प्यात्मा न हन्यतइत्याशयः ॥ २० ॥ नन्विह । चेदवेदीदथ सत्यमस्ति न चेदवेदीन्महती विनष्टिरित्यादिश्रुत्या ऽऽत्मज्ञानस्यावश्यकत्वे स्थिते तज्ज्ञानां युद्धेपि का

---

लान्धजडोपमास्त्वहमिति भ्रान्त्या भृशं वादिन इत्यादावुक्तत्वादिति भावः । न जायतइति । ननु पूर्व्वं देहिनोस्मिन्यथा देह इत्यादिजन्माद्यावश्यकत्वमुरीकृतमिह तु जन्माद्यभावं वर्णयसीति चेत् शृणु । तत्रासतस्सञ्जायतइत्याद्युक्त्या कार्य्यसत्ववादेनाभ्युपेत्योक्तमिह तु यत्र त्वस्य सर्व्वमात्मैवाभूदित्यादिश्रुतिसिद्धान्ताभिप्रायेणोक्तमित्यवधार्य्यम् ॥ २० ॥ विनष्टिरिति । तदुक्तं योगवासिष्ठे, तद्यथा, वरं शरावहस्तस्य चाण्डालागारवीथिषु भिक्षार्थमटनं

स पुरुषः पार्थ कं घातयति हन्ति कम् ॥२१॥ वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरो ऽपराणि। तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही॥ २२॥ नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः। न चैनं क्लेदयन्त्यापो न शोषयति मारुतः॥ २३॥ अच्छेद्योयमदा-

क्षतिरित्याह। वेदेति। एवंसत्यात्मानञ्चेद्विजानीयादयमस्मीति पूरुषः। किमिच्छन्कस्य कामाय शरीरमनुसञ्चरेदित्यादिश्रुत्याप्यात्मनो ऽशरीरत्वात्कथन्तमात्मानमजमव्ययं हन्ति कथञ्च घातयतीति हन्तुर्घातयितुश्चावयोर्न्निर्दोषत्वमाविष्कृतम्॥ २१॥ नन्वात्मनो नित्यत्वेन विनाशित्वाभावेपि देहात्मनो विनाशित्वाद्युद्धस्य च तन्नाशकत्वात्कथम्भीष्मादिदेहानामनेकसुकृतसाधकानाम्विनाशङ्करिष्याम इत्याह। वासांसीति। एवंसति जीर्णानि वस्त्राणि यथा विहाय नरो ऽपराणि नवानि गृह्णाति तथा शरीराण्यपि देही त्यक्त्वा पुनरपराण्यपि गृह्णातीति का क्षतिरित्यर्थः॥ २२॥ ननु गृहदाहे तदन्तर्व्वर्त्तिवस्तुन इव देहनाशे तदन्तर्व्वर्त्यात्मनोपि विनाशः स्यादित्याह। नैनमिति। एवंसति प्रकृतमात्मानमवयवविभागेन द्विधाकर्त्तुं न शक्नुवन्ति तथा पावको ऽग्निरतिप्रज्वलितोपि नैनम्भस्मीकर्तुं शक्नोति न चैनमापो ऽप्यार्द्रीकर्तुं शक्नुवन्ति न वा मरुतो वायुरतिप्रबलोपि नैनं नीरसङ्कर्त्तुं शक्नोतीति का कथा तदवयवशस्त्रबन्धादेरिति भावः॥ २३॥ ननु शस्त्रादीनां नाशकत्वेप्यात्मनस्तदनर्हत्वे हेतुमाह। अच्छेद्य इति। इह तु यतो ऽच्छेद्यो-

---

राम न सौख्यं हतजीवितमित्यादि द्रष्टव्यम्॥ २१॥ नित्यत्वेनेति। ननु परमात्मनश्शिवस्य नित्यत्वेनाविनाशित्वेपि चिदम्बराभासरूपस्य देहिनो जीवस्यापि ज्ञानोत्तरं विलय एव भविष्यतीति चेदस्त्वेवम्परन्तु विज्ञानात्पूर्व्वं युद्धादिकर्म्मणा तस्य विनाशादर्शनादिति भावः॥ २२॥ प्रकृतेति। तद्यथा यस्त्वयि तिष्ठन्यं त्वं न विजानासि यस्य त्वमेव शरीरं यस्त्वदन्तरं यमयति एष त आत्मान्तर्यास्यमृत इत्यादिश्रुत्या समष्टिव्यष्टिरूपेण प्रकृतमात्मानमवयवविभागेन द्विधाकर्तुं कथं चिदपि न शक्नुवन्ति कुतस्ततः परश्चिदम्बराभा-

**द्योयमक्लेद्यो ऽशोष्य एव च। नित्यस्सर्व्वगतः स्थाणुरचलोयं सनातनः ॥ २४ ॥ अव्यक्तोयमचिन्त्योयमविकार्य्योयमुच्यते । तस्मादेवम्विदित्वैनं नानुशोचितुमर्हसि ॥ २५ ॥ अथ चैनं नित्यजातं नित्यम्वा मन्यसे मृतम्। तथापि त्वं महाबाहो नैवं शोचितुमर्हसि ॥ २६ ॥ जातस्य हि ध्रुवो मृत्युर्ध्रुवं**

यमतो नैनं छिन्दन्तीत्यादिपूर्व्वेणान्वयः। अत एवाकाशवत्सर्व्वगतश्च नित्यः वृक्ष इव स्तब्धो दिवि तिष्ठत्येको यस्मिन्निदं सम्भविचेति सर्व्वमित्याद्याश्श्रुतयश्च बोध्याः ॥ २४ ॥ ननु कीदृशोयमात्मेति यत्पराञ्चिखैर्बाह्येन्द्रियैर्न्न जानीम इत्याह । अव्यक्त इति । एवन्तर्हि यः पृथिव्यां तिष्ठन्यम्पृथिवी न विजानाति यस्य पृथिव्येव शरीरं यः पृथिव्यामन्तरोयं यमयत्येष त आत्मा ऽन्तर्य्याम्यमृत इत्यादिश्रुत्या रूपादिहीनत्वादव्यक्तोयमित्यादिलक्षणलक्षितं ज्ञानचक्षुषा विदित्वा देहाद्युत्पत्तिविनाशेनानुशोचितुमर्हसीत्यर्थः ॥ २५ ॥ एवमात्मनो निर्व्विकारकत्वेनाशोच्यत्वमुक्तमिदानीन्तु सविकारित्वेनाप्याह । अथ चेति । एवंसति यद्येनमात्मानं नित्यजातं नित्यमृतम्वा मन्यसे चेत्तथापि हे महाबाहो दुरुद्धरबाहो नैवं शोचितुमर्हसीत्यर्थः ॥ २६ ॥ नन्वात्मनो नित्यत्वपक्षे दृष्टादृष्टदुःखभयेनाहं शोचामीत्याह । जातस्येति । एवन्तर्हि जातस्य स्वकृतधर्म्माधर्म्मादिवशाल्लब्धशरीरेन्द्रियसम्बन्धस्या-

---

नन्तं ह्रासकम्विभजेदित्यवधार्य्यम् ॥ २३ ॥ पराञ्चिखैरिति । तत्र पराञ्चिखानि व्यतृणत्स्वयम्भुरिति श्रुतिः । तस्मात्खानीन्द्रियाणि स्वयम्भुः प्रजापतिः पराञ्चिव्यतृणन्नामरचितवान्नहि किन्तु पराग्वस्तु पश्यन्त्यतो हिंसितवानित्याशयः । रूपादिहीनत्वादिति । तच्चैवं सत्यादर्शवद्वा स्फटिकोपमंवा कराम्बुवत् स्वच्छमिदम्विभातीत्यादिस्मृतिन्यायेन नीलपीतादिसप्तविधरूपादिहीनत्वादित्यवधार्य्यम् । ज्ञानचक्षुषेति । गुर्व्वर्कंलब्धोपनिषत्सु चक्षुषेति स्मृतिन्यायेन गुरोर्लब्धज्ञानचक्षुषेत्यर्थः । एवंसतीति । इहासतस्सज्जायतइति पूर्व्वोक्तरीत्यात्मनो नित्यत्वानित्यस्वरूपयोरप्युभयपक्षाभ्युपगमे सतीत्यर्थः ॥ २६ ॥ का विचारणेति ।

**जन्म मृतस्य च । तस्मादपरिहार्य्येर्थे न त्वं शोचितुमर्हसि ॥ २७ ॥ अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत । अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ २८ ॥ आश्चर्य्यवत्पश्यति कश्चिदेनमाश्चर्य्यवद्वदति तथैव चान्यः । आश्चर्य्यवच्चैनमन्यश्शृणोति श्रुत्वाप्येनम्वेद न चैव कश्चित् ॥ २९ ॥ देही नि-**

वश्यकस्तद्वियोगलक्षणो मृत्युस्तच्छरीरादिसंय्योगलक्षणं जन्म चापरिहार्य्य एवेति जन्ममरणादिरूपेर्थे मृत्युर्ज्जन्मवतां धीरदेहेन सह जायते अद्य चाब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुव इत्यादिस्मृतिन्यायेन न त्वं शोचितुमर्हसीत्यर्थः ॥ २७ ॥ ननु यदि परब्रह्मणःसकाशाज्जीवः पृथग्भूतस्तर्हि किमतः परम्ब्रह्मीभूतत्वमिच्छसि चेत्पुनरपि पूर्व्ववत् पृथग्भावापत्तिरित्यत आह । अव्यक्तादीनीति । एवन्तर्हि तद्धेदन्तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियतइत्यादिश्रुतेरव्यक्तोपादानत्वं जगतां दर्शितं लयस्थानं तु तस्यार्थासिद्धं मृद्घटादिवदिति श्रुतियुक्तिभ्यां सिद्धे वस्तुनि का विचारणेत्याशयः ॥ २८ ॥ ननु कथमेनमात्मानन्तत्वज्ञास्तदितरे च पश्यन्तीत्याह । आश्चर्य्यवदिति । तत्र तावत्श्रुतिः, तद्यथा, समाधिनिर्द्धूतमलस्य चेतसो निवेशितस्यात्मनि यत्सुखम्भवेन्न शक्यते वर्णयितुङ्गिरा तदा यदेतदन्तःकरणेन गृह्यतइति । एवङ्कश्चिन्मुग्धश्श्रोत्रियस्त्वाश्चर्य्यवद्वदत्येव न तत्वतः स्वयम्विजानातीति तथा ततोन्यः कश्चिन्मुमुक्षुर्ग्गुरुशास्त्राभ्यामाश्चर्य्यं शृणोतीति एवङ्कश्चित्सर्व्वथा विमूढो नागरिकश्श्रुत्वाप्येतत्तत्वं किमपि नो विजानातीत्याश्चर्य्योस्य वक्ताश्चर्योस्य श्रोताश्चर्य्योस्य लब्धेत्यादिश्रुतेरपीत्यवधार्य्यम् ॥ २९ ॥ नन्वस्त्वेतत्तत्वज्ञानिनामजरामरत्वेन का क्षति

---

तथा च यश्च मूढतमो लोके यश्च बुद्धेः परङ्गतो द्वाविमौ सुखमेधेते सीदत्यन्तरितो जन इत्यादिस्मृत्या सदेहाश्च विदेहाश्च भवन्त्यात्मेच्छया पुनरित्यादिस्मृत्या चाद्यन्तयोर्द्वयोर्म्मुक्तत्वे स्थिते ऽन्तरितानां जीवन्मृतानां जीवने मरणे वा का विचारणेत्यवधार्य्यम् ॥ १८ ॥ यत्सुखम्भवेदिति । तद्यथा न सुखं देवराजस्य न सुखं चक्रवर्त्तिनः । यत्सुखम्वीतरागस्य मुनेरेकान्तवर्त्तिन इत्यादिस्मृत्यन्तरादिति भावः ॥ २९ ॥ वध्यो नेति । किन्तु शरीरसंयोगवियोगयोरेव जीवन्मरणा-

त्वमवध्योयं देहे सर्व्वस्य भारत । तस्मा-
त्सर्व्वाणि भूतानि न त्वं शोचितुमर्हसि ॥ ३० ॥
स्वधर्म्ममपि चावेक्ष्य न विकम्पितुमर्हसि ।
धर्म्माद्धि युद्धाच्छ्रेयो ऽन्यत्क्षत्रियस्य न वि-
द्यते ॥ ३१ ॥ यदृच्छया चोपपन्नं स्वर्गद्वार-
मपावृतम् । सुखिनः क्षत्रियाः पार्थ्य लभन्ते
युद्धमीदृशम् ॥ ३२ ॥ अथ चेत्त्वमिमन्धर्म्यं

र्ज्जीवस्य तु शरीरसंय्योगवियोगयोस्सत्वेन समरेपि दुःखमेवेति तदपि नेत्याह । देही-
ति । एवंसति सर्व्वस्य प्राणिजातस्य देहे बध्यमानेप्ययं देही लिङ्गदेहोपाधिर्ज्जीवात्मा
वध्यो न भवतीति न त्वं शोचितुम्भीष्मादीन्प्रत्यर्हसीत्यर्थः ॥ ३० ॥ अथ न केवल-
न्तत्वज्ञानिनामेवायं धर्म्म इत्यवसीयते किन्तु युद्धस्य स्वधर्म्मत्त्वमप्यावेक्ष्य पर्य्यालो-
च्य विकम्पितुम्विचलितुं नार्हसीत्याह । स्वधर्मेति । तत्रैवंसति सङ्ग्रामेष्वपलायित्वम्प्र-
जानाञ्चैव पालनं, शुश्रूषा ब्राह्मणानाञ्च राज्ञश्श्रेयस्करम्परमित्यादिमनूक्तवाक्यैरपि
युक्तं क्षत्रियस्येत्याह । धर्म्माद्धीति । ततश्च रक्षार्थं युद्धरूपाद्धर्माच्छ्रेयः क्षत्रियस्यान्यन्न
विद्यतइत्याशयः ॥ ३१ ॥ ननु युद्धस्य स्वधर्म्मत्वेनावश्यकत्वेपि न ब्राह्मणं ह-
न्यादित्यादिश्रुतिविरोधात्कथन्तत्र द्रोणाचार्य्यादीन्ब्राह्मणानपि हन्यामित्याशङ्-
क्याह । यदृच्छयेति । एवंसति गुरुम्बालकवृद्धौ वा ब्राह्मणम्वा बहुश्रुतं, जिघांसन्तं जि-
घांसीयादित्येवं मनुरब्रवीदित्यादिस्मृत्या क्षत्रियाणां युद्धस्यावश्यकत्वे स्थिते तत्रापि
यदृच्छया स्वप्रयत्नव्यतिरेकेण चोपपन्नं युद्धं स्वर्गद्वारमपावृतमप्रतिबद्धं कीर्त्त्या-
दिसाधकञ्चेत्यादि द्रष्टव्यम् ॥ ३२ ॥ ननु नाहं युद्धफलाकाङ्क्षी न वा त्रैलो-
क्यविजयाकाङ्क्षी चेत्याह । अथ चेत्त्वमिति । एवन्तर्हि न च हन्यात्स्थलारूढं

---

देहिनो नित्यत्वादिति भावः ॥ ३० ॥ रक्षार्थमिति । तदुक्तं स्कान्दे, तद्यथा, स्वध-
र्मनिरतश्चानुभाग्यैनैव तु लभ्यते । तमतो धर्मरक्षार्थं निबध्नीयाद् दुरासदमि-
त्यादि द्रष्टव्यम् ॥ ३१ ॥ क्षत्रियाणामिति । तत्र यस्य च्छेदमतङ्गाच्च शरसुन्दर-
यष्टिभिर्देवकन्यास्तु तं वीरं हरन्ति रमयन्ति चेत्यादिना धर्मनिबन्धेष्वुक्तत्वा-
दिति भावः ॥ ३२ ॥ धर्म्यमिति । तद्यथा, यत्र तत्र हतश्शूरः शत्रुभिः परिवे-

सङ्ग्रामं न करिष्यसि। ततस्स्वधर्म्मं की-
र्त्तिञ्च हित्वा पापमवाप्स्यसि॥ ३३॥ अकी-
र्त्तिञ्चापि भूतानि कथयिष्यन्ति ते ऽव्ययाम्।
सम्भावितस्य चाकीर्त्तिर्म्मरणादतिरिच्य-
ते॥ ३४॥ भयाद्रणादुपरतं मंस्यन्ते त्वां
महारथाः। येषाञ्च त्वम्बहुमतो भूत्वा यास्य-
सि लाघवम्॥ ३५॥ अवाच्यवादांश्च बहू-

न क्लीबं न कृताञ्जलिं, न मुक्तकेशं नासीनं न तवास्मीतिवादिनमित्यादिस्मृत्युक्तलक्षणरहितान्भीष्मद्रोणादीन्हन्यादेवेति का क्षतिरित्यनेकजन्मार्ज्जितं धर्म्माय हितं धर्म्यं सङ्ग्रामं त्वं न करिष्यसि चेत्ततस्स्वधर्म्मं कीर्तिञ्च हित्वा पापमेवाप्स्यसीत्यर्थः॥ ३३॥ एवं कीर्तिधर्म्मयोरिष्टयोरप्राप्तिरनिष्टस्य प्राप्तिरित्यतो युद्धं न परित्यजेदित्युक्तमेव पुनर्द्रढयन्नाह। अकीर्त्तिञ्चापीति। तथासति शिष्टनिन्दालक्षणान्त्वनिष्टमासन्नफलदामसह्यामकीर्तिम्भूतानि देवर्षिमनुष्यादीनि ते तवाव्ययां दीर्घकालां युद्धेऽक्षमोयमित्येवंलक्षणामन्योन्यङ्कथयिष्यन्तीति सम्भावितस्यानन्यगुणयुक्तस्याकीर्तिस्तु मरणादप्यतिरिच्यतइत्याशयः॥ ३४॥ ननूदासीना निन्दन्तु भीष्मद्रोणादयस्तु महारथाः कारुणिकत्वेन स्तोष्यन्तीति नेत्याह। भयादिति। ततश्च युद्धोपशान्तौ तेपि भयादेव रणादुपरतं त्वां मंस्यन्ते न तु सति शौर्य्ये करुणया त्यक्तयुद्धोयमिति येषाञ्च त्वम्बहुमतोसि तत्रेदानीन्तेषां महतां मध्ये त्वन्तथाभूत्वा लाघवं लघुत्वं यास्यसीत्यत्यन्तगर्हितमेतदिति तात्पर्य्यम्॥ ३५॥ अथ च तेषां मध्ये लघुत्वमेव नहि किन्त्वपरमपि दुःखतरमित्याह। अवाच्येति। एवन्तर्ह्यवाच्यान्वचनानर्हान्वादान्बहूननेकशस्तवाहिताश्शत्रवो वदिष्यन्तीत्यर्थः। तत्र तावद्वदिष्य-

ष्टितः। अस्वर्ग्यं लभते लोकान्यदि क्लीबं न भाषतइत्यादिना क्षत्रियाणां युद्धधर्म्मत्वादिति भावः॥ ३३॥ मरणादपीति। तदुक्तम्, सम्भावितस्य चाकीर्तिर्म्मरणादतिरिच्यतइत्यादि द्रष्टव्यम्॥ ३४॥ निन्दन्त्विति। किन्तु तदपेक्षया प्राणैरर्थैर्धिया वाचा श्रेय एव सदाचरेदिति स्मृतिन्यायेन निन्दाभयादप्यवश्यमेतत्करणीयमित्यवधार्यम्। अत एवाङ्गुत्तरामायणी भूपतिभ्यो गता लज्जा दिगन्ते की-

न्वदिष्यन्ति तवाहिताः । निन्दन्तस्तव साम-
र्थ्यन्ततो दुःखतरं नु किम् ॥ ३६ ॥ हतो वा
प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।
तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ॥३७॥
सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।
ततो युद्धाय युज्यस्व नैवम्पापमवाप्स्यसि३८
एषा ते ऽभिहिता साङ्ख्ये बुद्धिर्य्योगे त्विमां

न्त्येव न केवलङ्किन्तु तव सामर्थ्यम्प्रभुत्वं निन्दन्तो ऽवाच्यवादान्वदिष्यन्तीति ततो दुःखतरङ्कष्टङ्किमस्ति किमपि नेत्यर्थः ॥ ३६ ॥ ननु तर्हि युद्धे गुर्व्वादिवधस्ततो निवृत्तौ तु शत्रुकृता निन्देत्युभयतःपाशा रज्जुरिति सङ्कटं मन्वानो युद्धार्थमेवोत्थानं युक्तमित्याह । हतो वेति । तस्माज्जेष्यामि शत्रून्मारिष्यामि वेति कृतनिश्चयस्सन्युद्धायोत्तिष्ठेत्यर्थः ॥ ३७ ॥ नन्वेवं स्वर्गोद्देशेन युद्धे कृते तु तत्फलस्य क्षयातिशययुक्तत्वं राज्योद्देशेन करणेप्यर्थनाशस्यावश्यकत्वमित्यसमञ्जसं मन्वान आह । सुखदुःखेइति । तथा चेदानीं सुखकामत्वं दुखनिवृत्तिकामत्वम्वा विहाय युद्धाय युज्यस्व सन्नद्धो भवेति नैवम्पापमवाप्स्यसीत्यर्थः ॥ ३८ ॥ ननु शास्त्रतत्वज्ञसम्पर्को विचारो ऽसङ्गभावना, समता स्वच्छता सौम्या सप्तधा भूमिका मतेत्यादिस्मृत्या सप्तभूमिकाक्रमेण समत्वज्ञानस्यौपानिषद्वेद्यत्वन्तद्विषयकत्वावच्छेदेन च सा बुद्धिरभिहितेत्युपसंहरन्नाह । एषेति । एवन्तर्हि सम्यक् ख्यायते प्रतिपाद्यते येन तन्त्वौपनिषदं पुरुषं पृच्छामीत्यादिश्रुतिवेद्यत्वं तत्त्वं तद्विषयिका यथोक्तसांख्यनाम्नी ते तवाभिहिता कथिता बुद्धिरित्यर्थः । अथ योगे कर्मणा सह भक्तियोगे त्विमां वक्ष्यमाणां बुद्धिं शृण्वित्यर्थः । तथा चेह शुद्धान्तःकरणम्प्रति यथोक्तसांख्योपदेशस्ताद्भिन्नम्प्रति तु कर्म्मणा सह भक्तियोगोपदेश इ-

---

र्त्तिं रीरिता । लब्धुत्वाज्ज्ञानकी यस्माद्रामचन्द्रेण चाहृतेत्यादिना कीर्त्तेरेव गरिष्ठत्वस्योक्तत्वादिति भावः ॥ ३६ ॥ सम्पर्क इति । तत्र तावच्छास्त्रस्य तत्त्वज्ञस्य च सम्पर्कस्सङ्गतिरित्यर्थः । कर्म्मणा सहेति । तत्र तावदिहामुत्र फलार्थं क्रियमाणेन कर्म्मणा तत्त्वज्ञानेन च यद्यपि समुच्चयो न भवति तथापि निष्का-

**शृणु । बुद्ध्या युक्तो यया पार्थ कर्म्मबन्धं प्रहास्यसि ॥ ३९ ॥ नेहाभिक्रमनाशोस्ति प्रत्यवायो न विद्यते । स्वल्पमप्यस्य धर्म्मस्य त्रायते महतो भयात् ॥ ४० ॥ व्यवसाया-**

ति तयोर्व्विभिन्नविषयत्वेन कुतस्समुच्चयाशङ्केति पर्य्यवसिते धर्म्मेण पापमपनुदतीत्यादिश्रुतेश्च पश्चाद् द्वयोरेकफलकत्वं स्फुटीकृतम्भवतीति भावः ॥ ३९ ॥ ननु तमेतमात्मानम्वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेन तपसा कल्मषं हन्ति विद्ययामृतमश्नुतइत्यादिसर्व्वकर्म्मणांविनियोगात्ततोन्तःकरणशुद्धिद्वारा स्वत एवोपरम्य विविदिषया विज्ञानार्थी भवतीत्याह । नेहेति । एवन्तर्हि मुद्राजटारचनमौञ्ज्यवताम्वैथैव मोघाशिनामखिलशौचनिराकृतानान्तोयप्रदानपितृपिण्डबहिष्कृतानां सम्भाषणादपि नरा नरकं प्रयान्तीत्यादिस्मृत्या मुद्रादित्रिविधपाखण्डिधर्म्मांस्तिरस्कृत्य कुटीचकानुगे धर्म्मे त्रिविधे समुपार्ज्जिते, ऋणत्रयविनिर्म्मुक्ते कैवल्यं सुलभम्भवेदित्यादिस्मृत्या नेहाभिक्रमस्याभीष्टस्य नाशो ऽहितात्प्रत्यभीतस्तु रणे यानमभिक्रमइत्याद्युक्त्या स्वधर्मत्वेन न वा किञ्चित्पातकं न वा कैवल्ये क्षतिरिति स्वल्पमप्यस्य धर्म्मस्यानुष्ठानादुर्व्वारुकमिव संसारबन्धनाज्ज्ञानविज्ञानसम्पत्त्या निवृत्तिर्भविष्यतीत्याशयः ॥ ४० ॥ ननु बुध्वाद्वैतसतत्वस्य यथेच्छाचरणं यदि शुनान्तत्त्वदृशाञ्चैव को भेदो ऽशुचिभक्षणइत्यादिस्मृत्या ब्रह्मज्ञानिनामपि कर्म्म कर्तुमावश्यकमिति न कर्म्मणामनारम्भान्नैष्कर्म्यम्पुरुषोश्नुतइत्यादिस्मृत्या तु तज्जिज्ञासूनाञ्च सुतरान्तथात्वेन कर्म्मणा सह भक्तियोगस्यावश्यकत्वे स्थिते तदेकं नैश्चित्येनैकबुद्ध्या कुर्व्वित्युपादिशन्नाह । व्यवसायात्मिकेति । एवन्तर्हि नेह लोको-

---

मेन तत्त्वफलकेन कर्म्मणा तु समुच्चयो भवत्येवेति बोध्यम् । तद्यथा, उभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणाङ्गतिस्तथैव भक्तिकर्म्मभ्याम्प्राप्यते ब्रह्मशाश्वतमित्यादि द्रष्टव्यम् ॥ ३९ ॥ मुद्रेति । तत्र तावद्यथाश्मशानजङ्घाष्ठमनर्हं सर्व्वकर्म्मसु । तथा चक्राङ्कितो विप्रः सर्व्वकर्म्मसु गर्हित इत्यादिस्मृत्यन्तराज्जटिलो मुण्डितलुञ्चितकेशाः काषयादिकबहुकृतवेषा इत्युदरनिमित्तत्वेन स्मृत्यन्तरेपि दर्शनादित्यधिकं सर्व्वशास्त्रार्थदर्शने द्रष्टव्यम् ॥ ४० ॥ आवश्यकमिति । तद्यथा, न कर्म्माणि त्यजेद्योगी कर्म्मभिस्त्यज्यते ह्यसौ । कर्म्मब्रह्मोभयभ्रष्टस्तस्य-

त्मिका बुद्धिरेकेह कुरुनन्दन। बहुशाखा ह्यनन्ताश्च बुद्धयो ऽव्यवसायिनाम् ॥४१॥ यामिमाम्पुष्पितामवाचम्प्रवदन्त्यविपश्चितः। वेदवादरताः पार्थ्य नान्यदस्तीति वादिनः॥४२॥
कामात्मानस्स्वर्गपरा जन्मकर्म्मफलप्रदाम्।
क्रियाविशेषबहुलाम्भोगैश्वर्य्यगतिम्प्रति॥४३॥
भोगैश्वर्य्यप्रसक्तानान्तयापहृतचेतसाम्। व्यवसायात्मिका बुद्धिस्समाधौ न विधीयते॥४४॥

स्ति न परो न सुखं संशयात्मन इत्यादिस्मृत्या भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशया इत्यादिश्रुत्या चाव्यवसायिनामानीश्चितवादिनाम्बुद्धयो बहुशाखा ह्यनन्ताश्च सातिशयफलकत्वात्ता निरस्तव्या इत्यर्थः ॥ ४१ ॥ नन्वनिश्चितवादिनस्ते किम्वदन्तीत्याह। यामिमामिति। एवंसति यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरमभिलाषोपनीतञ्च तत्सुखं स्वःपदास्पदमित्यादिवाक्यन्तद्यथेह कर्म्मचितो लोकः क्षीयतइत्यादिश्रुतिविरोधात्तस्य चिरस्थायित्वेन तत्वेपि वस्तुतस्तु तेवेदवादरतत्वेनाविपश्चित एवेति बोध्यम् ॥ ४२ ॥ ननु कथम्भूतास्ते वादिन इत्याह। कामात्मान इति। एवन्तर्हि भोगैश्वर्य्यगतिम्प्रति काम एवोर्व्वश्यादिसेवनमात्माभीष्टं येषान्तथा स्वर्ग एव परसाध्यो येषान्ते तथाभूता इत्यर्थः ॥ ४३ ॥ ननु संसारेषु मनश्शक्तं समाधिस्थङ्कथम्भवेत्फेरुमर्कट्योर्म्मैत्री यथानेष्टाविरोधत इत्यादिस्मृतिन्यायेन युगपद् ज्ञानानुत्पत्तिर्म्मनसो लिङ्गमितिसूत्राच्च कथङ्कामात्मनां स्वर्गाद्यभिकाङ्क्षिणां समाधिरित्याह। भोगैश्वर्य्येति। तत्रैवंसति भोगैश्वर्य्यप्रसक्त्यापहृतचेतसां या तत्र व्यवसायात्मिका नाम निश्चयात्मिका बुद्धिस्सा यथोक्तव-

---

जेदत्वजं यथेत्यादिस्मृत्यन्तरादप्यवधार्य्यम्। सातिशयेति। तद्यथेह कर्म्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयतइत्यादिश्रुत्या तत्कृतकन्तदनित्यमितिन्यायबलाच्च विज्ञानापेक्षया स्वर्गादिफलस्यानित्यत्वादिति बोध्यम् ॥ ४१ ॥ कथम्भवेदिति। तदेतद्योगवाशिष्टेप्युक्तम्। तद्यथा, यत्किञ्चिदपि सङ्कल्पान्नरो दुःखे निमज्जति। न किञ्चिदपि सङ्कल्पात्सुखमक्षयमश्नुतइत्यादि

त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्ज्जुन । निर्द्वन्द्वो नित्यसत्वस्थो निर्य्योगक्षेम आत्मवान् ॥ ४५ ॥ यावानर्थ उदपाने सर्व्वतस्सम्प्लुतोदके । तावान्सर्व्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥ ४६ ॥ कर्म्म-

देककालावच्छेदेन विरुद्धविषयाणीति तया कथं समाधिरित्यर्थः ॥ ४४ ॥ ननु वेदो द्विविधो मन्त्रभागो ब्राह्मणभागश्च तत्र तावन्मन्त्रभागेन पूर्व्वमीमांसोक्ता ब्राह्मणभागेन च ब्रह्ममीमांसोक्तेति तत्कस्मिन्भागे विनिश्चिनोमीति निर्णेतुमाह । त्रैगुण्येति । तत्र तावत्त्रिगुणमर्हतीति त्रैगुण्यः पूर्व्वमीमांसाख्यो रजोमिश्रितो भाग इत्यर्थः । एवन्त्रिगुणान्निर्गतम्वेदमर्हतीति निस्त्रैगुण्यो ब्रह्मविद्यानिरूपणभागस्तत्र द्वयोर्म्मध्ये निस्त्रैगुण्यो नित्यसत्वस्थो भवार्ज्जुनेत्यर्थः । तत्रान्तिमेन निस्त्रैगुण्येन भागेन शिवमद्वैतन्तुरीयम्ब्रह्मतत्वं ज्ञात्वा निर्द्वन्द्वो नित्यसत्वस्थस्सन्नात्मा शिवस्तज्ज्ञानवांस्तथा लभ्यलाभो योगो लब्धस्य प्रतिपालनं क्षेमस्ताभ्यान्निर्गतश्चाप्तकाम इत्यर्थः ॥ ४५ ॥ नन्वस्त्वेवम्परन्तु श्रुतयस्स्मृतयश्चैव युक्तयश्चेश्वरम्वदन्ति तद्विरुद्धं यो वदेत्तस्मान्न चाधम इत्यादिस्मृत्यात्मज्ञानस्य सर्व्वकामपूरकत्वे युक्तिरप्यपेक्षितेत्याह । यावानर्थ इति । एवंसति यावानर्थः प्रयोजनमुदपाने क्षुद्रजलाशये भवति तावांस्तदधिकश्च सर्व्वतस्संप्लुतोदके वृहज्जलाशये यथा भवति तथा सर्व्वेषु वेदेषु काम्यकर्म्मप्रयोजकेष्वपि हैरण्यगर्भानन्दपर्य्यन्तेषु तावांस्तदधिकश्च ब्रह्मतत्वम्विजानतस्साक्षात्कुर्व्वतो ब्राह्मणस्य ब्रह्मविदो भवतीत्यस्यैवानन्दस्य सर्व्वाभूतानि मात्रामुपजीवन्तीति

---

द्रष्टव्यम् ॥४४॥ द्वयोर्म्मध्य इति । तत्राद्यन्तयोर्म्मध्ये निस्त्रैगुण्यो भवार्ज्जुन इत्यस्य त्रिगुणरहितवेदविषयो भवेत्येवार्थो न तु वेदबाह्यो भवेत्यर्थः अन्यथा निस्त्रैगुण्यनित्यसत्त्वस्थपदाभ्यां विरोधापत्तेः । एवं तमेतम्वेदानुवचनेन ब्राह्मणा विविदिषन्तीत्यादि श्रुतेरपीति भावः ॥४५॥ युक्तिरपीति । तद्यथा युक्त्यायुक्तमुपादेयं यदुक्तञ्चार्भकैरपि । नचायुक्तमुपादेयं यदुक्तम्पद्मयोनिनेत्यादिस्मृत्यन्तरादपि बोध्यम् । तदधिकश्चेति । सर्व्वांश्च कामानवाप्नोति सर्व्वांश्च लोकानवाप्नोति यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच तद्वोभये देवा अ-

ण्येवाधिकारस्ते मा फलेषु कदाचन । मा
कर्म्मफलहेतुर्भूर्म्मा ते सङ्गोस्त्वकर्म्मणि ॥४७॥
योगस्थः कुरु कर्माणि सङ्गन्त्यक्त्वा धनञ्ज-
य । सिद्ध्यसिद्ध्योस्समो भूत्वा समत्वं योग
उच्यते ॥ ४८ ॥ दूरेण ह्यवरङ्कर्म बुद्धियोगा-
द्धनञ्जय । बुद्धौ शरणमन्विच्छ कृपणाः फल-

श्रुतेरपीति भावः ॥ ४६ ॥ ननु यथोक्तकर्म्मयोगेन चित्तशुद्धिं सम्पाद्यात्मज्ञानं सम्पाद्यते चेत्तदात्मज्ञानमेव कुतो न सम्पाद्यतां किम्बह्वायासैर्बहिरङ्गसाधनैः कर्म्मभिरित्याशङ्क्याह । कर्म्मण्येवेति । एवन्तर्ह्युभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणाङ्गतिस्तथैव भक्तिकर्म्मभ्याम्प्राप्यते ब्रह्म शाश्वतमित्यादिस्मृतिन्यायेन ते तवाशुद्धान्तःकरणस्य कर्म्मण्येवान्तःकरणशोधकोऽधिकारो न तु यमनियमाद्यष्टाङ्गयोगेन वेदान्तनिष्ठया विचारादावित्यकरणे कर्म्मणि प्रत्यवायदर्शनाच्चेत्याशयः ॥ ४७ ॥ ननु न कर्म्माणि त्यजेद्योगी कर्म्मभिस्त्यज्यते ह्यसौ । कर्म्मब्रह्मोभयभ्रष्टन्तन्त्यजेदन्त्यजं यथेत्यादिस्मृत्या यदि ज्ञानिनः कर्म्म कर्तुमावश्यकन्तर्ह्यज्ञानिनस्तु सुतरान्तत्कर्तव्यमेवेति पूर्व्वोक्तमेव पुनर्द्रढयन्नाह । योगस्थ इति । एवंसत्यन्तःकरणशुद्धिद्वारा यमादियोगनिष्ठया तत्तत्कर्म्म कर्त्तव्यमेव तत्र तावत्फलसिद्धौ हर्षम्फलासिद्धौ च विषादन्त्यक्त्वा केवलमीश्वरार्पणबुद्ध्या सिद्ध्यसिद्ध्योस्समत्वेन तत्कर्त्तव्यमेवेत्याशयः ॥ ४८ ॥ ननु प्रयोजनमनुद्दिश्य मन्दोपि न प्रवर्त्ततइति न्यायेन किङ्कर्म्मानुष्ठानमेव पुरुषार्थो येन निष्फलमेव सदा कर्म्म कर्त्तव्यमित्युच्यते तस्मात्तद्वरम्फलकामनयैव कर्मानुष्ठानं युक्तमिति चेत्तत्र विशेषमाह । दूरेणेति । एवन्तर्हि यो वा गार्ग्ये तदक्षरमविदित्वा अस्माल्लोकात्प्रैति स कृपण इत्यादिश्रुत्या सर्व्वानर्थनिवर्हणमात्मज्ञानोत्पादकं निष्कामकर्म्मणा सह योगानुष्ठानमेव कर्त्तव्यमित्यतो बुद्धियोगाच्छिवमद्वैतन्तुरीयमिति ब्रह्मज्ञानाद् दूरेण ह्यवरमर्व्वाक्फलाभिकाङ्क्षया

---

सुरा अनुबुबुधिरइतिछान्दोग्यश्रुतेरिति भावः ॥ ४६ ॥ भ्रष्टमिति । तथोत्तमबोधच न्द्रोदये, ज्ञानिना ऽज्ञानिना वापि यावद्देहस्य धारणन्तावद्वर्णाश्रमप्रोक्तङ्कर्त्तव्यङ्कर्म शुद्धयइत्यादिना शरीरशुद्धयेपि तदावश्यकमित्यवधेयम् ॥४८॥ तद्वरमिति । तदुक्तम्पुराणसमुच्चये । तद्यथा, अमास्याज्ञानमात्तं खङ्कर्म्मजन्यम्फलं शुभम्,

हेतवः ॥ ४९ ॥ बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते । तस्माद्योगाय युज्यस्व योगः कर्म्मसु कौशलम् ॥ ५० ॥ कर्म्मजम्बुद्धियुक्ता हि फलन्त्यक्त्वा मनीषिणः । जन्मबन्धविनिर्म्मुक्ताः पदङ्गच्छन्त्यनामयम् ॥ ५१ ॥ यदा ते मोहकलिलम्बुद्धिर्व्यतितरिष्यति । तदा

जाग्रदवस्थागतं तद्यथेहेति कर्मचोदनेति श्रुत्या क्षयातिशययुक्तत्वात्तन्नाकाङ्क्षीस्त्वमिति तात्पर्य्यम् ॥ ४९ ॥ एवमिह यथोक्तबुद्धियोगाभावे कृपणत्वरूपं दोषमुक्त्वा तत्सत्वे तु गुणाधिक्यमप्याह । बुद्धियुक्त इति । तथा सतीह शास्त्रतत्वज्ञसम्पर्के इत्यादिक्रमेण कर्म्मयोगेन शुद्धान्तःकरणस्य समत्वबुद्ध्या युक्ते चोभे सुकृतदुष्कृते अपि स जहातीति युज्यस्वोद्युक्तो भवेति योग एव कर्म्मसु कौशलम्प्रशस्तमित्यर्थः ॥ ५० ॥ ननु दुष्कृतहानमपेक्षितं न तु सुकृतस्य हानमन्यथा पुरुषार्थभ्रंशापत्तेरित्याह । कर्म्मजमिति । एवन्तर्हि कर्मजं क्षयिष्णु फलन्त्यक्त्वा सुबुद्धियुक्ताः केवलमीश्वरार्प्पणबुद्ध्या कर्म्म कुर्व्वाणास्सत्वशुद्धिद्वारेण मनीषिणस्तत्वमस्यादिवाक्यजन्यात्ममनीषावन्तो जन्मबन्धविनिर्म्मुक्तास्सन्तोऽनामयम्पदङ्गच्छन्तीत्यर्थः ॥ ५१ ॥ नन्वेवमपि कर्म्म कर्त्तुर्म्मे कदा सत्वशुद्धिस्स्यादित्यत आह । यदेति । तत्रैवंसति नह्येतावता कालेन सत्वशुद्धिर्भविष्यतीति कालनियमोस्ति किन्तु कस्य चिज्जायते शीघ्रञ्चिरकालेन कस्य चिदित्यादिस्मृत्या यदा यस्मिन्काले मोहकलिलमहमिदं ममेदमित्याद्यज्ञानकलिलमनात्मजातन्ते तव बुद्धिर्व्यतितरिष्यति तदा तस्मिन्नेव काले श्रोतव्यस्य श्रुतस्य च कर्म्मफलस्य निर्व्वेदन्त्यागः प्रपञ्चरूपस्य चिदात्मत्वावलोकनमित्यादिस्मृतिसिद्धम्वैराग्यम्प्राप्तामित्यर्थः । परीक्ष्यकर्म्मचिताँल्लोकान्ब्राह्मणो निर्व्वेदमायादित्यादिश्रुतेरपीति भावः ॥ ५२ ॥ एवंसत्यन्तः-

---

इतो भ्रष्टास्ततोभ्रष्टा धौतस्ते वं च निष्फला इत्यादि द्रष्टव्यम् ॥ ४९ ॥ प्रशस्तमिति । तद्यथा, शान्तिभारते, योगान्निर्द्दहते क्षिप्रमशेषम्पापपञ्जरन्तस्माद्योगाय यीतव्यङ्कर्म्म शुद्धा तरम्बुधैरित्यादि द्रष्टव्यम् ॥ ५० ॥ ईश्वरार्पणेति । तद्वै मनःप्रणम्य पदारविन्दयोरिति स्मृतिन्यायेनात्मार्पणबुद्ध्येत्यर्थः ॥ ५१ ॥ वैराग्यमिति । तद्यथा, त्यागः प्रपञ्चभूतस्य चिदात्मत्वावलोकनात्त्यागो हि महता-

गन्तासि निर्व्वेदं श्रोतव्यस्य श्रुतस्य च ॥ ५२ ॥ श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला। समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥ ५३ ॥ अर्ज्जुन उवाच ॥ स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव। स्थितधीः किम्प्रभाषेत किमासीत व्रजेत किम् ॥ ५४॥ श्रीकृष्ण उवाच । प्रजहाति यदा कामान्सर्व्वान्पार्थ मनोगतान् । आत्मन्ये-

करणशुद्ध्यैव जातनिर्व्वेदस्य विज्ञानप्राप्तिरपि कदेत्त्याह । श्रुतीति । एवन्तर्हि ते तव बुद्धिश्श्रुतिभिर्न्नानाविधफलश्रवणैरविचारिततात्पर्य्यैर्व्विप्रतिपन्ना चेत्ततश्च दोषदर्शनेन तद्विक्षेपम्परित्यज्य समाधौ परमात्मनि तुरीये शिवे निश्चला स्थास्यति सतश्च तदा समत्वलक्षणं योगमवाप्स्यसीत्यर्थः ॥ ५३ ॥ एवमिह लब्धावसरास्थितप्रज्ञस्य लक्षणमपि श्रोतुमर्ज्जुन उवाचेत्याह । स्थितप्रज्ञस्येति । तत्र तावत्स्थितप्रज्ञस्य निष्कामकर्म्मणा शुद्धचित्तस्य का भाषा रीतिर्ल्लक्षणमित्यर्थः । एवं समाधिस्थस्य समाधिङ्कुर्व्वतः किं स्वरूपलक्षणम्, एवं स एवोत्थानदशायां स्थितधीर्म्मूढजनान्प्रति किम्प्रभाषेत तथा स किमासीत् व्रजेच्च किमिति प्रश्नः ॥ ५४ ॥ अथैतेषाञ्चतुर्व्विधप्रश्नानां क्रमेणोत्तरमाह । प्रजहातीति । एवंसति यदा मनोगतांस्तद्वृत्तिप्रविष्टान्कामान्प्रजहाति परित्यजति स स्थितप्रज्ञस्तदोच्यतइत्यर्थः । ननु च कथं स सर्व्वकामपरित्यागे स्यादित्याह । आत्मन्येवेति । तत्रात्मन्येव स्वप्रकाशे चिद्रूपे

---

स्यू न्यो न गिरिर्न्न गुहान्तरमित्यवधार्य्यम् ॥ ५२ ॥ अविचारितेति । एवंसतीदं मेस्ति मतं नेदमस्मयोर्य्यत्र चाग्रहः सोयम्वादस्समाख्यातो युक्तिर्य्यत्र न दृश्यतइति स्मृतिन्यायेन वादिप्रतिवादिभ्यां सिद्धान्तार्थप्रतिपत्तये ऽविचारिततात्पर्य्यैरपि विप्रतिपत्तव्यमित्यवधारिते सर्व्वप्रमाणसिद्धोर्थो ध्रुवोयत्र विचार्य्यते सोयं सिद्धान्तइत्युक्तो न ध्रुवश्चार्य्यते यत इत्यादिस्मृत्युक्तरीत्या सकलविक्षेपन्यग्भावा समाधिस्थो भविष्यतीति का क्षतिरिति भावः ॥ ५३ ॥ प्रश्न इति । तच्च शकुनीनामिवाकाशे मत्स्यानामिव चोदके तद्वद्ध्यानविदां लोके गतिर्नैवेह

वात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥ ५५ ॥
दुःखेष्वनुद्विग्नमनास्सुखेषु विगतस्पृहः । वी-
तरागभयक्रोधस्स्थितधीर्म्मुनिरुच्यते ॥ ५६ ॥
यस्सर्व्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम् ।
नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रति-
ष्ठिता ॥ ५७ ॥ यदा संहरते चायङ्कू-
र्म्मोङ्गानीव सर्व्वशः । इन्द्रियाणीन्द्रियार्थे-
भ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ५८ ॥ विषया

शिवे जीवात्मना सहैकीभूत्वा तुष्ट इत्यर्थः ॥ ५५ ॥ इदानीं समाधिंकुर्व्वतः पुनर्ल्लक्षणमाह । दुःखेष्विति । तत्रैवंसति दुःखे रजस्तमोभ्यां सन्तापात्मकचित्तवृत्तिविशेषेषु प्राप्तेष्वपि समाधेर्न्नोद्विग्नं व्याकुलं मनो यस्य सः एवं सुखेषु सत्वरजोभ्याम्प्रीत्यात्मकचित्तवृत्तिविशेषेषु विषयाद्विगतस्पृहः तथा वीतस्त्यक्तो रागो भयं क्रोधश्च यस्येत्यर्थः ॥ ५६ ॥ ननु स्थितधीर्म्मूढजनान्प्रति कथम्प्रभाषेतेत्याह । यस्सर्व्वत्रेति । एवन्तर्हि शुभं सुखहेतुकमशुभञ्च दुःखहेतुकम्प्राप्य यस्सर्व्वत्रानभिस्नेह एव भवति किन्तु परात्मन्येव शिवे सर्व्वथा प्रीतिरित्यर्थः । तत्रैवं समत्वम्प्राप्तो मित्रं नाभिनन्दति न वा शत्रुं द्वेष्टीति तस्य प्रज्ञा प्रतिष्ठितेत्यर्थः ॥ ५७ ॥ ननु स्थितप्रज्ञस्य कथमासनगमनादिकामित्याह । यदेति । एवं सत्यव्यक्तं व्यक्तमाधत्ते व्यक्तं सर्वं ग्रसत्यलमित्यादिस्मृतिन्यायेनेन्द्रियार्थेभ्यः कूर्म्मोङ्गानीव यदा संहरते

---

लच्यतइत्यतोयमत्रस्तदज्ञानार्थमित्यवधेयम् ॥ ५४ ॥ सत्वरजोभ्यामिति । एवं सतीह सत्वरजस्तमसां सर्व्वसाधारण्येन जगत्कारणत्वेपि विमलसत्वस्य निस्त्रैगुण्येन यमनियमादिना समाध्युपयोगित्वमेवेति तथेत्यत्रिमेणावधार्य्यम् ॥ ५६ ॥ मूढजनानिति । इह तु न जनपदोक्त्या नैव मूढपदेन यत्र मूढतमो लोक इत्यचोक्तो विदेहस्सदेहो वागृह्यते किन्त्वन्तरिता एव गृह्यन्तइत्यवधार्य्यम् । सुखहेतुकमिति । अत्र तु सुखशब्देन यच्च कामसुखं लोके यच्च दिव्यं महत्सुखमित्यचोक्तं क्षयिष्णु सुखं गृह्यते न तु समाधिगम्यमक्षय्यसुखमित्याशयः ॥ ५७ ॥

**विनिवर्त्तन्ते निराहारस्य देहिनः । रसवर्ज्जं रसोप्यस्य परं दृष्ट्वा निवर्त्तते ॥ ५९ ॥ यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः । इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥ ६० ॥ तानि सर्व्वाणि संयम्य युक्त आसीत मत्परः ।**

तदा तस्य प्रज्ञा प्रतिष्ठितेत्यर्थः ॥ ५८ ॥ ननु मूढस्यापि ज्वरादिवशाद्विषयेभ्य इन्द्रियाणां निवृत्तिरिति तत्कथं न तस्य प्रज्ञा प्रतिष्ठितेत्याह । विषया इति । तत्रैवंसति ज्वरादिना निराहारस्य देहिनो मर्त्यस्य विषयाश्शब्दाद्यो निवर्त्तन्ते तथापि तस्य रसवर्ज्जं नाम ज्वरादिनिवृत्त्युत्तरमहम्भोक्ष्ये इति स्पृहा तु तस्य न निवर्त्तते रसं ह्येव लब्ध्वानन्दीभवतीत्यादिश्रुतिवेद्यम्परमात्मानं शिवं लब्ध्वा तु रसोप्यस्य लौकिको निवर्त्ततइत्यर्थः ॥ ५९ ॥ ननु मनोजयेनैव स्थितप्रज्ञत्वम्भविष्यति किमिन्द्रियजयेनेति, मैवमित्याह । यतत इति । तत्रैवंसति पराञ्चिखानि व्यतृणत्स्वयम्भूरित्यादिश्रुतेरिन्द्रियाणाम्प्राबल्येन यतो ऽष्टाङ्गयोगादिना यतमानस्यापि विपश्चितः पण्डितस्यापि पुरुषस्य प्रमाथीनीन्द्रियाणि मनः प्रसभम्बलात्कारेण हरन्तीत्यर्थः । समाधौ क्रियमाणे तु विघ्नान्यायान्ति वै बलादितिस्मृत्यन्तराद्यदेतन्मनुष्याश्शिवं न विद्युरिति देवाः कुर्व्वन्तीति श्रुत्यन्तराच्चेति भावः ॥ ६० ॥ नन्वेवन्तर्हि कस्तत्र प्रतीकार इत्युपसंहरन्नाह । तानीति । एवंसति स्ववर्णाश्रमधर्म्मेण तपसा शिवतोषणात्साधनम्प्रभवेत्पुंसाम्वैराग्यादिचतुष्टयमित्यादिस्मृत्येहामुत्रार्थफलभोगविरागो नित्यानित्यवस्तुविवेकः शमदमादिषट्कसम्पत्तिर्म्मुमुक्षुत्वञ्चेति साधनचतुष्टयेन तानीन्द्रियाण्यादौ संयम्याहमेव गुरुत्वेन परं साधनं यस्य स त्वं मत्परो

---

। प्रसतीति । यदिदं दृश्यते किञ्चित्तन्नास्ति किमपि ध्रुवं यथा गन्धर्व्वनगरं यथा वारिमरुस्थल इत्यादिस्मृत्यर्थानुसन्धानेनापि द्रष्टव्यम् ॥ ५८ ॥ शिवंलब्ध्वेति । सरसात्मा हरस्साक्षाच्चिदानन्दविग्रहः लब्ध्वातस्यै रसं धीरो ब्रह्मभूयाय कल्पतइत्यादिस्मृत्यन्तरादप्यवधार्य्यम् ॥ ५९ ॥ न विद्युरिति । तस्मात्तैर्व्विरोधम्परिहार्य्यैव शिवं विचिन्तयेदिति पर्य्यवसिते देवान्पितॄन्समभ्यर्च्य नत्वाथ भूतपञ्चकानिच्छासुखाविरोधेन शिवञ्च ध्येत्सनातनमिति समोपदेशेनावगन्तव्यम् ६०॥ कस्तत्रेति । तत्र समाधौ क्रियमाणे तत्प्रतिबन्धकनिवृत्तेरावश्यकतया कस्तत्र

वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रति-
ष्ठिता ॥ ६१ ॥ ध्यायतो विषयान्पुंसस्सङ्ग-
स्तेषूपजायते । सङ्गात्सञ्जायते कामः कामात्
क्रोधोऽभिजायते ॥ ६२ ॥ क्रोधाद्भवति सम्मोह-
स्सम्मोहात्स्मृतिविभ्रमः । स्मृतिभ्रंशाद्बुद्धिना-
शो बुद्धिनाशात्प्रणश्यति ॥ ६३ ॥ रागद्वेष-
विमुक्तैस्तु विषयानीन्द्रियैश्चरन् । आत्म-
वश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥ ६४ ॥

भूत्वा युक्तस्समाहितस्सन्परस्मिन् शिवे निगृहीतमनास्सं श्रासीरित्यर्थः । नन्वेतावता-ऽपि स्पष्टं न जानीमः कस्य प्रज्ञा प्रतिष्ठितेत्याह । वशेहीति । तथा च श्रुतिः, यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदिस्थिताः । अथ मर्त्यो ऽमृतो भवत्यत्र ब्रह्म समश्नुतइत्यादि द्रष्टव्यम् ॥ ६१ ॥ नन्वस्त्वेवम्परतु समाधिप्रतिबन्धकत्वेन जन्म-मरणाद्यनर्थमूलङ्किमस्तीत्याह । ध्यायतइति । तथासति शब्दादीन्विषयान्ध्यायतः पुंसो यस्सङ्गस्तस्मात्सङ्गात्सञ्जायते कामस्तृष्णाविशेषस्तस्मात्कामात्क्रोधोऽभिज्वल-नात्माभिजायते तस्मात्कार्य्याकार्य्याविवेकाभावरूपस्सम्मोहस्तस्माच्च शास्त्राचार्य्यो-पदेशस्य विभ्रमस्स्मृतिविभ्रमस्ततश्चैकात्म्याकारत्वबुद्धेर्विनाशस्तस्माच्च पुरुषार्थाऽ-योग्यत्वात्प्रणश्यतीति द्वयोरर्थः ॥ ६२ ॥ ६३ ॥ अथ यथोक्तसाधनचतुष्टयेन निगृहीते तु मनसि न किञ्चिद्बाधकमित्याह । रागद्वेषेति । एवन्तर्हि रागद्वेषाभ्या-म्वियुक्तैर्विरहितैरात्मवश्यैस्स्वाधीनैरिन्द्रियैश्शब्दादीन्विषयांश्चरन्नापि तैस्सर्व्वभा-

---

क्षेषाम्प्रतीकार इत्यर्थः । षट्सम्पत्तिरिति । शमदमोपरतितितिक्षाश्रद्धासमा-धानाख्या षट्सम्पत्तिरित्यर्थः । तत्र शमो नाम मनसो निग्रहः दमो नाम बा-ह्येन्द्रियनिग्रहः अत्रोपरतिस्तु विषयेभ्यस्स्वयमेव निवृत्तिः तितिक्षा नाम सुख-दुःखादिसहिष्णुता तथा गुरुवेदवाक्येषु विश्वासश्च श्रद्धा एवम्परे ब्रह्मणि शिवे समाध्यानुगुण्येन चेतसः स्थैर्यमिति विवेकः ॥ ६१ ॥ ऐकात्म्याकारत्वेति । तत्र शिवमद्वैतन्तुरीयमित्यैकात्मको भावस्तदाकारत्वं नैरन्तर्येण तदुपलब्धिस्तद्-बुद्धेर्विमार्गेण विक्षेपेण विनाश इत्यर्थः ॥ ६२ ॥ ६३ ॥ प्रसन्नतामिति । रसं

प्रसादे सर्व्वदुःखानां हानिरस्योपजायते ।
प्रसन्नचेतसो ह्याशु बुद्धिः पर्य्यवतिष्ठते॥६५॥
नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना । न
चाभावयतश्शान्तिरशान्तस्य कुतः सुखम् ६६
इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ।

वेन विधेयः प्राप्य आत्मा यस्य स प्रसादमात्मप्रसन्नतामधिगच्छतीत्यर्थः ॥ ६४ ॥ नन्वात्मनः परमशिवस्य प्रसादे सति किं स्यादित्याह । प्रसाद इति । एवंसति धारयिष्यति ते वेगं रुद्रस्त्वात्मा शरीरिणां यस्मिन्नोतमिदम्प्रोतं सूत्रं शाटीव तन्तुष्वित्यादिजान्हव्युद्धरणस्मृत्या ऽत्मशब्देनेह परमशिव एव गृह्यतइत्यात्मनो महद्भयम्वज्रमुद्यन्तमित्यादिश्रुतेर्भीषास्माद्वातः पवतइत्यादिश्रुतेश्च रुद्रशब्दाभिधेयस्य परमशिवस्य प्रसादे सति सर्व्वदुःखानां हानिरिति प्रसन्नचेतसो ह्यस्य शीघ्रमेव बुद्धिस्समाधौ पर्य्यवतिष्ठतइत्यर्थः ॥ ६५ ॥ इममेवार्थम्व्यतिरेकमुखेन द्रढयन्नाह । नास्तीति । एवन्तर्ह्ययुक्तस्याजितेन्द्रियस्य नास्ति बुद्धिरात्मविषयिका तथा न चायुक्तस्य भावना निदिध्यासनात्मिका न चाभावयतस्सामरस्यैकलक्षणा शान्तिर्न चाशान्तस्यात्मसाक्षात्कारशून्यस्य सुखम्ब्रह्मानन्दाख्यमित्यर्थः ॥ ६६ ॥ नन्वयुक्तस्य कस्मान्नास्ति बुद्धिरित्याह । इन्द्रियाणामिति । एवंसति स्वस्वविषयेष्ववशीकृतानामिन्द्रियाणां मध्ये यदेकम्मनस्तत्तद्विषयेष्वनुविधीयते प्रेर्य्यते तत्तस्मादस्य प्रज्ञाम्बुद्धिमपि मनोहरतीत्यर्थः । तत्र दृष्टान्तमप्याह । वायुरिति । तत्रा-

---

ह्येवलब्ध्वानन्दीभवतीत्यादिश्रुतेर्न्न सुखं देवराजस्य न सुखञ्चक्रवर्त्तिनः यत्सुखं वीतरागस्य मुनेरेकान्तवासिन इत्यादिस्मृतेश्चेत्याशयः ॥ ६४ ॥ शिव एवेति । तत्र यद्यपि देहेन्द्रियमनश्चैव जीवात्मा चेति मुख्यतस्सर्व्वसाची शिवश्चेति स्मृत्या षड्विध एवात्मेत्युच्यते तथापीह शिवरुद्रशब्देन परब्रह्मैवेत्यवधेयम् । रुद्रशब्दाभिधेयस्येति । तद्यथा रोदयत्येव यस्सर्व्वान् स्वस्मिन् भक्तिविवर्ज्जिता नतो रुद्रस्य रुद्रत्वं सोऽरोदीदिति दर्शनादित्यादिस्मृत्या तद्धिसुखस्तु दत्तवद्विनश्येदेवेति बोध्यम् ॥ ६५ ॥ हरतीति । तत्र न केवलम्भोगेनैवेन्द्रियाणामुपशान्तिः किन्तु निग्रहेणैवोपशान्तिर्बोध्या । तद्यथा नाग्निस्तृप्यपि काष्ठानां नाप-

**तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भ-**
**सि ॥६७॥ तस्माद्यस्य महाबाहो निगृहीतानि**
**सर्व्वशः । इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा**
**प्रतिष्ठिता ॥ ६८ ॥ या निशा सर्व्वभूताना-**
**न्तस्यां जागर्त्ति संयमी । यस्यां जाग्रति**
**भूतानि सा निशा पश्यतो मुनेः ॥ ६९ ॥**
**आपूर्य्यमाणमचलप्रतिष्ठं समुद्रमापः प्रवि-**
**शन्ति यद्वत् । तद्वत्कामा यम्प्रविशन्ति**

म्भस्येव वायोर्न्नौकाहरणसामर्थ्यं न तु भुवीति सूचयितुमम्भसीत्युक्तम् । एवं दार्ष्टान्तिकेप्यम्भस्स्थानीये मनश्चाञ्चल्ये सत्येव प्रज्ञाहरणसामर्थ्यमिन्द्रियस्य न तु भूस्थानीये मनस्स्थैर्य्यइति सूचितम् ॥ ६७ ॥ ननु कथन्तर्हि प्रज्ञा प्रतिष्ठिता भविष्यतीति नहि मन्त्राणां यामितास्तीतिन्यायेन यथोक्तमुपसंहरन्नाह । तस्मादिति । तस्माद्धे महाबाहो शत्रुनिबर्हणक्षमत्वादिन्द्रियशत्रुनिवारणेपि त्वं क्षमोसीति सूचितमिति स्पष्टमन्यदिति भावः ॥ ६८ ॥ ननु वस्तुगत्या स्थितप्रज्ञत्वङ्कथमनुभूयतइत्याह । या निशेति । तत्रैवं यत्र त्वस्य सर्व्वमात्मैवाभूद्विजानत इत्यादिश्रुतेर्य्या तत्त्वमस्यहम्ब्रह्मास्मीत्यादिवेदान्तवाक्यजनिता स्थिरा प्रज्ञा या सर्व्वभूतानामज्ञानां निशेव निशा तस्यां संयम्यात्मध्यायी जागर्त्तीत्यर्थः । एवं यस्यान्त्वविद्यायां द्वैतदर्शनरूपायां सर्व्वाणि भूतानि जाग्रति सा त्वद्वैतात्मदर्शनशीलस्य मुनेर्न्निशेव निशेति-परमार्थः ॥ ६९ ॥ अथैतादृशस्य स्थितप्रज्ञस्यान्ततस्स्वरूपलक्षणं दृष्टान्तेन स्पष्टम्पुनराह । आपूर्य्यमाणमिति । तत्रैवंसति सर्व्वाभिर्न्नदीभिरापूर्य्यमाणमचलप्रतिष्ठमनतिक्रान्तमर्यादं समुद्रं यद्वदापः प्रविशन्ति तद्वल्लोकानाङ्कामा यन्तादृशं तत्त्वज्ञानिनम्प्रविशन्ति पूर्णा भवन्ति स एव स्थि-

---

गानम्पयोनिधिः । दुर्दण्डग्रानां यमो नैव दुःपुंसाम्वामलोचनेत्यादिसम्बन्धषष्ठ्योपपादनीयम् ॥६७॥ ६८ ॥ आत्मध्यायीति । तद्यथा । आत्माम्बुराशौ निखिलोपि लोको मग्नोपि नाचामति नेक्षते च । आश्चर्य्यमेतन्मृगतृष्णिकाभे भवाम्बुराशौ मृगते तृषैवेत्यादि द्रष्टव्यम् ॥६९॥ प्रविशन्तीति । तद्यथा, सर्व्वांश्च कामा-

सर्व्वं स शान्तिमाप्नोति न कामकामी ॥७०॥ विहाय कामान्यस्सर्व्वान्पुमांश्चरति निस्पृहः । निर्म्ममो निरहङ्कारस्स शान्तिमधिगच्छति ॥ ७१ ॥ एषा ब्राह्मी स्थितिः पार्थ नेनाम्प्राप्य विमुह्यति । स्थित्वास्यामन्तकालेपि ब्रह्म निर्व्वाणमृच्छति ॥ ७२ ॥ इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्ज्जुनसम्वादे संन्यासयोगो नाम द्वितीयोध्यायः ॥ * ॥ अर्ज्जुन उवाच ॥

तप्रज्ञो भवति न तु स्वयमेवाशक्तः कामकामीत्यर्थः ॥ ७० ॥ अथ च यस्मादेवन्तस्मात्स्थितप्रज्ञत्वासिद्धये किङ्करणीयमस्तीत्याह । विहायेति । एवन्तर्ह्यन्तस्त्यागी बहिस्सङ्गीति विद्वत्संन्यासमार्गेण सर्व्वान्कामान्विहाय यः पुमांश्चरति जनकादिवत्प्रारब्धकर्म्मवशेन पत्तने वा वने वा क्वापि गच्छति स्थास्यति वा स एवम्भूतश्शान्तिं सामरस्यैकभावलक्षणामधिगच्छतीत्यर्थः ॥ ७१ ॥ तदेवञ्चतुर्णामुत्तरव्याजेन सर्व्वाणि स्थितप्रज्ञलक्षणानि दर्शितानीति कैमुतिकन्यायेनोपसंहरन्नाह । एषेति । एवं सति हे पार्थ यैषा ब्राह्मी चिदम्बराख्या समाधिस्ताम्प्राप्यान्तकालेपि न विमुह्यति किमु तत्र वक्तव्यमाशरीरान्तेप्यस्यां स्थितश्चेदिति परमार्त्थः ॥ ७२ ॥ इति श्रीमत्पदवाक्यप्रमाणयोगिवर्य्यविप्रराजेन्द्रविरचिते तत्त्वैकदर्शने संन्यासयोगनिरूपणं नाम द्वितीयोध्यायः ॥ * ॥ नैष्कर्म्यं कर्मणा प्रोक्तं कण्टकेनेति युक्तितः । ना-

---

नाप्नोति सर्व्वांश्च लोकानाप्नोति यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाचेत्यादिश्रुतेः स्वयमाप्तत्वेन लोकानामपि कामान्पूरयिष्यतीति वाचतिरित्याशय: ॥ ७० ॥ पत्तनेवेति । तद्यथा, न धावति जनाकीर्णं नारण्यमुपशान्तधीः । यथा तथा यत्र तत्र स्थित एवोपशाम्यतीत्यादिस्मृतेरिति भावः ॥ ७१ ॥ ७२ ॥ इति श्रीमद्योगिवर्य्यविप्रराजेन्द्रात्मजविरचिते भाष्यप्रदीपे द्वितीयोध्यायः ॥ * ॥ अथ विज्ञानरूपस्य परब्रह्मणस्सर्व्वथा वर्त्तमान:

ज्यायसी चेत्कर्म्मणस्ते मता बुद्धिर्ज्जनार्द्दन । तत्किङ्कर्म्मणि घोरे मां नियोजयसि केशव ॥ १ ॥ व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे । तदेकम्वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥ २ ॥ श्रीकृष्ण उवाच ॥ लोकेऽस्मिन्द्विविधा निष्ठा पुरा प्रोक्ता मयानघ ।

न्यथा शुद्धितो ज्ञानन्तृतीये तु निगद्यते । नन्विहामुत्रार्थफलभोगविरागनित्यानित्यवस्तुविवेकशमादिषट्कसम्पत्तिमुमुक्षुत्वानीत्येव साधनचतुष्टयगतान्यन्तरङ्गाणि ज्ञानसाधनानीति किम्बाह्यकर्म्मणेत्यभिप्रेत्याह । ज्यायसी चेदिति । एवन्तर्हि निष्कामकर्म्मणा शुद्धचित्तस्य निष्कामादप्यात्मतत्त्वविषयिका बुद्धिरेव यदि ज्यायसी चेत्ते तव मता तदा किङ्कर्म्मणि घोरे हिंसाद्यनेकायासबहुले मां नियोजयसि कर्म्मण्येवाधिकारस्त इत्यादिनेति भावः ॥ १ ॥ ननु कदा चित्स्वर्गाद्यभिकाङ्क्षया कदा चिद्राज्ययशोभिकाङ्क्षया कदा चिच्चान्तःकरणशुद्ध्यर्थञ्चेत्याद्यनेकविकल्पवार्त्तया कथं माम्विमोहयसीवेत्याह । व्यामिश्रेणैवेति । वस्तुतस्तु त्वम्मां न विमोहयसि किन्त्वनेकविकल्पाद् गुरुत्वेनोपदिशस्येवेति तत्त्वम् । तस्मान्मम भ्रान्तिनिवृत्त्यर्थन्तदेकं निश्चित्य वद हे गुरो येनाहं श्रेयःपदवीमवाप्नुयामित्यभिप्रायः ॥ २ ॥ एवमधिकारिभेदेन पृच्छन्तमर्जुनम्प्रति तथैवोत्तरमप्याह । लोकेऽस्मिन्निति । एवंसति पुरा पूर्वाध्याये या द्विविधा निष्ठा मया प्रोक्ता सा तावद् ज्ञानयोगेन यमनियमाद्यष्टाङ्गयोगेन सांख्यानां निष्कामकर्म्मणा शुद्धान्तःकरणानां यस्मिन्कृते न किञ्चित्कर्म्म क्रिय-

---

त्वात्कथन्तेन तदुपलब्धिरित्यतः कर्म्मणैवान्तःकरणस्य शुद्धा तत्प्राप्तिरित्यभिप्रेत्याह । नैष्कर्म्यमिति । एवन्तर्हि यथा कण्टकेनैव कण्टकोद्धार इति न्यायेन कर्म्मणैवान्तःकरणशुद्ध्युत्तरम्विज्ञानसिद्धिरिति कर्म्मणैव हि संसिद्धिमास्थिता जनकादय इत्यतोऽप्यवधार्य्यम् । अन्तरङ्गाणीति । एवमिह ततोऽप्यन्तरङ्गाणि यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिरूपाणीत्यवधेयम् । हिंसादीति । तेषां याज्ञीयम्पशुमालभेदित्यादिश्रुतिसिद्धत्वेऽपि चयिष्णुफलकत्वेनानित्यत्वाद्धिंसेति भावः ॥ १ ॥ अधिकारिभेदेनेति । इहामुत्र कैवल्यफलभेदेनाधिकारिभेदस्तेनेत्य-

ज्ञानयोगेन साङ्ख्यानां कर्म्मयोगेन योगि-
नाम् ॥ ३ ॥ न कर्म्मणामनारम्भान्नैष्कर्म्यं-
म्पुरुषोऽश्नुते । न च संन्यसनादेव सिद्धिं सम-
धिगच्छति ॥ ४ ॥ नहि किश्चित्क्षणमपि
जातु तिष्ठत्यकर्म्मकृत् । कार्य्यते ह्यवशः

ते तन्मे मनश्शिवसङ्कल्पमस्त्वित्यादिश्रुतेः । एवं या चोपासनया सह कर्म्म योगिनां यज्ञेन दानेन तपसेत्यादिश्रुत्यन्तराच्चोक्ता सात्वन्तःकरणशुद्ध्यर्थमिहामुत्रफलसिद्ध्यर्थञ्चेति न मया विमिश्रितमुक्तमित्याशयः ॥ ३ ॥ नन्वन्तःकरणशुद्ध्यर्थमप्यकृत्वैव यदि विज्ञानसिद्धिस्तर्हि बहूनां ब्रह्मविद्याकाङ्क्षिणाम्विज्ञानोत्पत्तिः कुतो न स्यादिति नेत्याह । न कर्म्मणेति । एवन्तर्हि तमेतम्वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसेत्यादियथोक्तश्रुत्या तत्तत्कर्म्मानुष्ठानेनैव चित्तशुद्ध्युत्तरमात्मोपलब्धिरित्याह । न चेति । एवंसति प्रत्युत सर्व्वधर्म्मत्यागिनान्तेषां निरयगामित्वमेवेति मुद्राजटारचनमौण्ड्यवताम्वृथैवेत्यादिना पूर्व्वोक्तं न विस्मर्त्तव्यम् ॥ ४ ॥ ननु सर्व्वथा यदि किमपि कर्म्म न कर्त्तव्यन्तर्हि यम इन्द्रो वा किम्विलिखिष्यतीति चेज्जीवन्नेव हि कर्म्माणि जिजीविषेच्छतꣳ समा इत्यादि श्रुत्युल्लङ्घनप्रयुक्तपापान्निरयगामित्वमपि तेषां स्यादित्याह । नहि कश्चिदिति । तत्रैवंसति स्वधर्म्माचरणाद्बहिर्मुखा हि यस्मात्क्षणमपि जातु नाम कदा चित्कश्चिदप्यकर्म्मकृन्न तिष्ठति अपि तु लौकिकम्वैदिकम्वा यत्कर्म्मानुष्ठानन्तत्स्वप्रकृतिजैर्गुणैरवशस्सन्करोति

---

र्थः । विमिश्रितमिति । तत्र बुद्धिं मोहयसीव मइत्यत्र पूर्व्वमेव भवद्वचसैवेवार्थेन ध्वमनादिति भावः ॥ ३ ॥ कुतो न स्यादिति । तद्यथा, लब्ध्वे ग्रन्थं जनोप्याह सर्व्वं दुःखं हनिष्यति । तपो विना विना योगं धन्यः कोत्र भवेद्ध्रुवमित्यादि द्रष्टव्यम् । मुद्रेत्यादि । तत्र तावत् मुद्रेत्यनेन तप्तमुद्राङ्किता जटेत्यनेन कृत्रिमजटाधारिणो नान्हकसम्प्रदायानुगता वेदबाह्याः एव मुण्ड्यइन्तस्य मठाधिपतय इत्यादिपूर्व्वोक्तरीत्याप्यवधार्य्यम् ॥ ४ ॥ किम्विलिखिष्यतीति । यथा कोशरचकेण पदातिना न रचितश्चेद्दत्वैव स दण्ड्यताडित इत्यतस्तदेव तस्य सत्यं यमोपि विलिखिष्यतीति तदेतच्छ्रुतिरप्याह । जीवन्नेवेति । तद्यथा, भक्षतश्चेत्, तन्त्रेन स्मृतेर्व्वाक्योपलङ्घनात् । तस्मात्त्वणमपिना कश्चिन्नैव तिष्ठत्य-

**कर्म्म सर्व्वः प्रकृतिजैर्गुणैः ॥ ५ ॥ कर्म्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् । इन्द्रियार्थान्विमूढात्मा मिथ्याचारस्स उच्यते ॥ ६ ॥ यस्त्विन्द्रियाणि मनसा नियम्यारमतेऽर्ज्जुन । कर्मेन्द्रियैः कर्म्मयोगमशक्तस्स विशिष्यते ॥ ७ ॥ नियतङ्कुरु कर्म्म त्वङ्कर्म्म**

कार्य्यते वेत्यवश्यमिति भावः ॥ ५ ॥ ननु देवोपासनया दैवम्पैत्रन्तु पुत्रतो जयेत् । व्रतोपासनया त्वार्षन्त्रिभिस्तु परमं जयेदिति क्रमन्त्यक्त्वा यथा कथञ्चिदौत्सुक्यमात्रेण कृतसंन्यासस्त्वशुद्धचित्तो न तत्फलभाग्भवतीत्याह । कर्म्मेन्द्रियाणीति । तत्रैवं सति कर्म्मेन्द्रियाणि वाक्पाण्यादीनि बाह्यतस्संय्यम्य मनसा शब्दादीन्विषयान्स्मरन्य आस्ते न त्वात्मतत्वं किन्तु कृतकर्म्मसंन्यासोहमित्यभिमानेन त्यक्तध्यानस्तिष्ठति स च निरर्थकत्वान्मिथ्याचारो यस्मात्त्यागेनैकेन प्रकृतिषु विलय इत्यादिश्रुतिविरोधात्कर्म्मब्रह्मोभयभ्रष्टमित्यादियथोक्तस्मृतेश्च स त्यागी पतितो भवेदित्यवधेयम् ॥ ६ ॥ नन्वन्तस्त्यागी बहिस्सङ्गीति न्यायेन यस्तिष्ठति स कीदृश इत्याह । यस्त्विति । एवंसति यस्त्विन्द्रियाणि ज्ञानेन्द्रियाणि श्रोत्रादीनि मनसा विवेकयुक्तेन सह नियम्य पापहेतुशब्दादिविषयाशक्तेर्विनिवर्त्य कर्म्मेन्द्रियैर्व्वाक्पाण्यादिभिरन्तःकरणशुद्धिहेतुतया विहितङ्कर्म्मयोगमशक्तः फलाभिसन्धिरहितस्सन्नारभते स चेतरस्मान्मिथ्याचाराद्विशिष्यतइत्यर्थः ॥ ७ ॥ अथ यस्मादेवन्तस्मान्मनसा ज्ञानेन्द्रियाणि निगृह्य कर्मेन्द्रियाणि तु सत्कर्म्मसु व्यापारयन्परमपुरुषार्थभाग्भवतीत्याह । नियतमिति । एवन्तर्हि शुद्धान्तःकरणस्यापि ते हि यतोऽकर्मणःसकाशात्कर्म कर्त्तुं ज्याय इत्यर्थः ।

---

कार्म्मकादित्यादि द्रष्टव्यम् ॥ ५ ॥ परममिति । तत्र तावद्यथोक्तैस्त्रिभिस्तु परमङ्केवल्यमुर्व्वारुकमिवेति श्रुतिन्यायेन जयेदिति तात्पर्य्यम् ॥ ६ ॥ मिथ्याचारादिति । तत्तेह्यासुरविरोधिना मुद्राजटेत्यथोक्तेन वेदबाह्येन कर्म्मणा युक्तो मिथ्याचारस्तस्मादित्यर्थः । तद्यथा । बुध्वाद्वैतसतत्त्वस्य यथेच्छाचरणं यदि । शुनान्तत्वदृशाञ्चैव को भेदोऽशुचिभक्षणइत्यादि द्रष्टव्यम् ॥ ७ ॥ परमपुरुषार्थ इति । परमपुरुषार्थस्स एव स्याद्यच्छिवत्वत्वमजेक्षुयम् । तद्विना

ज्यायो ह्यकर्मणः। शरीरयात्रापि च ते न
प्रसिद्ध्येदकर्मणः ॥ ८ ॥ यज्ञार्थात्कर्म्म-
णोन्यत्र लोकोयङ्कर्म्मबन्धनः। तदर्थं कर्म्म
कौन्तेय मुक्तसङ्गस्समाचर ॥ ९ ॥ सहयज्ञाः
प्रजास्सृष्ट्वा पुरोवाच प्रजापतिः। अनेन प्रस-
विष्यध्वमेष वोस्त्विष्टकामधुक् ॥ १० ॥

एवमिहाकर्मणो युद्धादिकर्मरहितस्यापि तव शरीरयात्रा शरीरस्थितिरपि तेप्रसिद्ध्ये-दित्यर्थः ॥ ८ ॥ ननु कर्मणा बध्यते जन्तुरित्याद्युक्त्या सर्वं कर्म बन्धनात्मकत्वान्मुमुक्षुणा न कर्त्तव्यमिति मत्वा समाधत्ते। यज्ञार्थादिति। तत्रैवंसति क कर्मप्रध्वस्तम्फलति पुरुषाराधनमृतइत्यादिस्मृत्या यज्ञेनार्थ्यते प्रार्थ्यते स यज्ञार्थस्सर्वकर्मफलप्रदाता सदाशिवस्ततोन्यस्मै यत्कर्म तस्मात्क्रियमाणात्कर्मणस्सकाशाल्लोकोयम्बध्यतइति कर्मबन्धन इत्यर्थः। यस्मिन्कृते न किञ्चित्कर्म क्रियतइत्यादिश्रुतेः। अत एव दक्षयज्ञप्रमथने समुत्थाय महाविष्णुम्भ्रामयित्वा त्रिधा पुनश्शूलम्वक्षस्यथो हस्तौ छित्वा यज्ञाद्बहिष्कृत इत्यादिना महाविष्णोरिदम्वृत्तमन्यस्य का वार्त्तेत्याशयः ॥ ९ ॥ ननु फलाभिसन्धिरहितस्यापि श्रद्धामात्रेण कर्म कर्त्तुमावश्यकत्वे स्थिते तत्र पुरातनं सेतिहासं सम्वादमप्याह। सहयज्ञा इति। एवन्तर्हि यज्ञमूलत्रयः प्रोक्ता वेदोग्निर्ब्राह्मणः पुरेत्यादि पाद्मोक्त्यापि यज्ञैस्सह प्रजाः सृष्ट्वा प्रजापतिर्ब्रह्मा प्रज्ञादलम्पुरस्कृत्य ताः प्रत्युवाचेत्यन्वयः। अथ ताः प्रति किमुवाचेत्याह। अनेनेति। तत्रानेन यज्ञेन भवन्त्यः प्रजाः प्रसविष्यध्वम्वर्धिष्यध्वं यत एष यज्ञ

---

जन्मराहित्यं न भवेज्जन्मकोटिभिरित्यादिपाद्मेपि दर्शनादिति भावः। ज्याय इति। तदेतत्स्कान्देप्युक्तम्। अकर्मणा ह्यधर्मेण कथम्पारङ्गमिष्यति। तस्मात्कर्मतु कुर्वन्ति यतयः पारदर्शिन इत्यादि द्रष्टव्यम् ॥८॥९॥ रहितस्यापीति। ननु न कुर्यान्निष्फलङ्कर्म्म जलवातादिवत्खल्विति न्यायेन फलाभिसन्धिरहितेन कर्मणा किं स्यादिति चेच्छृणु। यत्फलावासितस्त्वोर्ध्वम्फलं नाकांक्षते परम्। अतस्त्वाकामकामत्वं कैवल्यस्य च कथ्यतइत्यवधार्य्यम्। संवादमपीति। तद्यथा, साक्षिणस्त्रिविधाः प्रोक्ता शास्त्रं वेदः स्वयं स्वयु। तत्र युक्तिश्च संवादस्सत्यमत्रमन्यते

देवान्भावयतानेन ते देवा भावयन्तु वः ।
परस्परम्भावयन्तः श्रेयः परमवाप्स्यथ ॥ ११ ॥
इष्टान्भोगान्हि वो देवा दास्यन्ते यज्ञभा-
विताः । तैर्द्दत्ता न प्रदायैभ्यो यो भुङ्क्ते स्तेन
एव सः ॥ १२ ॥ यज्ञशिष्टाशिनस्सन्तो मुच्यन्ते
सर्व्वकिल्बिषैः । भुञ्जते तेत्वघं पापा ये पच-

एवं वो युष्माकङ्कामधुगस्तु कामानाम्पूरक इत्यर्थः ॥ १० ॥ ननु कथमिष्टकाम-पूरकत्वं यज्ञस्येति तत्राह । देवानिति । तत्रैवंसत्यनेन यज्ञेन यूयं यजमाना हवि-र्भागैर्देवानिन्द्रादीन्भावयत ते च देवा युष्माभिर्भावितास्सन्तो वो युष्मान्भावयन्त्वि-त्यर्थः । एवम्वृष्ट्यादिनान्नोत्पत्तिद्वारेणान्योन्यं सम्बर्धयन्तो देवा यूयञ्च परं श्रेयः प्राप्स्यथेत्यर्थः ॥ ११ ॥ तत्र न केवलम्पारमार्थिकमेव फलं यज्ञैः किन्त्वैहिकमपी-त्याह । इष्टानिति । एवन्तर्ह्यैहिकानपि पश्वन्नहिरण्यादीन्भोगान्वो युष्मभ्यं यथो-क्तयज्ञभाविता देवा हि यतो दास्यन्ते अतस्तैर्द्दत्तान्भोगानेभ्यो देवेभ्यो ऽप्रदाय यो भुङ्क्ते स्तेन एव तस्कर एवेत्यर्थः ॥ १२ ॥ अथ च स्वस्वधर्मनिष्ठया यज्ञ-कर्त्तुर्बहुतरम्फलमस्तीत्याह । यज्ञशिष्टेति । एवंसति ये तु वैश्वदेवादियज्ञावशिष्टममृ-तमश्नन्ति तएव सन्तो वेदोक्तकर्मकारित्वेन महान्तस्ते च पूर्वक्तैः पञ्चसूनादिनि-मित्तैश्च किल्बिषैमुच्यन्तइत्यर्थः । तत्र ये त्वात्मकरणादेव पचन्ति तेषाम्व्यतिरेकेण दोषमप्याह । भुञ्जतइति । तथा च स्मृतिः । कण्डनी पेषणी चुल्ली उदकुम्भी च मार्ज्जनी । पञ्चसूना गृहस्थस्य ताभिस्स्वर्गं न विन्दतीति । एवम्पञ्चसूनाकृतमन्यच्चागो-यज्ञैर्व्यपोहतीति श्रुतिश्चेत्यवधार्य्यम् ॥ १३ ॥ ननु कथं यज्ञस्य सर्वजगन्मूलत्व-

---

ऽखिलमिति स्मृत्यन्तरादप्यवगन्तव्यम् ॥१०॥ पञ्चसूनेति । तत्र तावत्प्रथमकार्थो धूम इतिवत्पञ्चभिस्सूना जन्ममरणादिनिवृत्तिर्गृहस्थस्य त्यक्ताभिस्ताभिस्स्व-र्गमेव न विन्दति कुतः पुनः कैवल्यङ्गमिष्यतीति भावः। स्मृत्यन्तरञ्च तपसां वर्द्ध-को यस्मात्कामानाञ्च प्रपूरणात्सर्व्वधर्माश्रयो यस्मात् धर्म्ममूलो गृहाश्रमीति । श्रुतिश्च सत्याश्रमिभ्यः परमम्पवित्रम्प्रोवाच सर्व्वं ऋषिसङ्घपुष्टमित्यस्मिन्नेवाश्रमे कुटीचकादीनामन्तर्भावश्चत्यधिकं भक्तौ वर्णाश्रमधर्म्मनिरूपणे द्रष्टव्यम् १२१३१५

न्यात्मकारणात् ॥ १३ ॥ अन्नाद्भवन्ति भूतानि पर्ज्जन्यादन्नसम्भवः । यज्ञाद्भवति पर्ज्जन्यो यज्ञः कर्मसमुद्भवः ॥ १४ ॥ कर्म्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् । तस्मात्सर्व्वगतम्ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥ १५ ॥ एवम्प्रवर्त्तितञ्चक्रं नानुवर्त्तयतीह यः । अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ॥ १६ ॥

मिति स्पष्टमेव दर्शयति । अन्नादिति । एवन्तर्ह्यग्नौ प्रास्ताहुतिस्सम्यगादित्यमुपातिष्ठते आदित्याज्जायते वृष्टिर्वृष्टेरन्नन्ततः प्रजा इत्यादिमनुवाक्यादप्यन्नाद् भुक्ताद्रेतो लोहितरूपेण परिणताद् भूतानि भवन्तीत्यर्थः । एवम्पर्ज्जन्याद् वृष्टेरन्नं यज्ञाच्चाग्निहोत्रादेः पर्ज्जन्यमृत्विग्यजमानव्यापारसाध्यो यज्ञश्च कर्मसमुद्भव इति परमार्थः॥ १४॥ ननु कर्मापि कस्मादुत्पन्नमित्यप्याह । कर्मेति । एवंसत्यस्य महतो भूतस्य निश्श्वसितमेतदित्यादि श्रुत्येहामुत्रसाधकं सकलङ्कर्म ब्रह्मवेदस्तत्प्रयोजको हिरण्यगर्भश्च तयोरुद्भवन्तदुद्भवम्विद्धीत्यर्थः । एवं हिरण्यगर्भाख्यो यो ब्रह्मप्रजापातिरपि विश्वाधिको रुद्रो महर्षिर्हिरण्यगर्भञ्जनयामास पूर्वमित्यादिश्रुत्या च न क्षीयते न वा क्षरतीत्यक्षरात्सदाशिवात्परब्रह्मणस्समुद्भूतामीति रुद्रस्त्वात्मा शरीरिणामिति स्मृतिन्यायेन सर्वत्र यज्ञे प्रतिष्ठितन्तदेव रुद्राख्यम्ब्रह्म न तु दक्षवदन्यप्रतिष्ठितमित्यवधार्य्यम् ॥ १५ ॥ नन्वेवञ्चेत्ततो धर्मशीलैः किङ्करणीयमस्तीत्याह । एवमिति । तत्रैवं सत्यादावथ योयमात्मा सर्वेषां साक्षी ततः प्रजापतिरभूत्ततश्च धर्मोत्पादको वेदो धर्मश्च पर्ज्जन्यमित्यादिश्रुत्या परमात्मना सदाशिवेनैव प्रवर्त्तितञ्चक्रं यो नानुवर्त्तयति स चाघायुः पापजीवनमेव मोघम्व्यर्थमेव स जीवति यत इन्द्रियारामो हे पार्थ तस्य जीवनान्मरणमेव न्याय्यं यतो जन्मान्तरत्वावच्छेदेन कदा चिद्धर्मानुष्ठानसंभवादिति भावः ॥ १६ ॥ नन्वभ्युदयार्थं निश्श्रेयसार्थम्प्रत्यवायपरिहारार्थम्वा-

---

ततः प्रजापतिरिति । विश्वाधिको रुद्रो महर्षिर्हिरण्यगर्भं जनयामास पूर्व्वमिति समनन्तरमेवोक्तमित्यपि न विस्मर्त्तव्यम्॥१६॥ शरीराभ्यासेति । तत्रैवं;

**यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः । आत्मन्येव च सन्तुष्टस्तस्य कार्य्यं न विद्यते ॥ १७ ॥ नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन । न चास्य सर्व्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥ १८ ॥ तस्मादसक्तस्सततङ्कार्य्यं कर्म्म समाचार । असक्तो ह्याचरन्कर्म्म परमाप्नोति पूरुषः ॥ १९ ॥ कर्मणैव हि**

त्मविदश्शरीराध्यासराहितस्य जडभरतादेरिव नापेक्षितङ्कर्म तदा त्वाह । यस्त्विति । एवन्तर्ह्यात्मन्येव रतिः प्रीतिर्य्यस्य स तथाभूतस्तथा तज्जन्यैव तस्मिंस्तृप्तिर्य्यस्य स तथाभूत आत्मन्येव परमानन्दसन्दोहे देहादिभावम्परिहृत्य दूरादिति स्मृतिन्यायेन सन्तुष्टस्तस्य देहाध्यासराहितस्याधिकारहेत्वभावात्किमपि कार्यं लौकिकम्वैदिकम्वा न विद्यतइत्यर्थः ॥ १७ ॥ अथ तस्याप्तकामस्य सर्वथा निरपेक्षस्यापि वृत्तमाह । नैव तस्येति । एवंसति लोकसङ्ग्रहार्थं कुर्वन्नपि तस्य कृतेन कर्मणार्थः प्रयोजनं नास्ति यतो न चास्येत्यादिरर्थः । तद्यथोक्तम्भागवते । देहञ्च नश्वरमवास्थितमुत्थितम्वा सिद्धो न पश्यति यतो ऽध्यगमत्स्वरूपमित्यादि द्रष्टव्यम् ॥ १८ ॥ ननु नाहं देहाध्यासराहितो न वा मे किञ्चित्प्रयोजनमस्तीत्याह । तस्मादिति । तत्रैवंसत्यसक्तः फलाभिसन्धिरहितस्सन्कार्यमवश्यं श्रुतिचोदितङ्कर्म सततं यावज्जीवं समाचरेत्यर्थः असक्तो हि यस्मादीश्वरार्थमाचरन्कर्म्म परं मोक्षमाप्नोतीति स एव सत्पुरुषो नान्य इत्यभिप्रायः ॥ १९ ॥ ननु तत्त्वज्ञानवतस्तथैवाज्ञानिनश्चावश्यं

---

स्यति नहि सुषुप्तौ विस्मृतशरीरस्य किञ्चित्कर्म्माधिकार इति कुतः पुनर्व्वाऽनेन विस्मृतशरीरस्य समीकल्पयाच्चालम्बनप्रतीतिरित्यवधार्य्यम् । न विद्यतइति । ततश्च पुनरुत्थानदशायां शरीराध्यासे तु शरीरन्तदधिकं वा कर्मकर्त्तुः का क्षतिः । न कर्म्माणि त्यजेद्योगी कर्म्मभिस्त्यज्यते ह्यसाविति स्मृत्यन्तरादिति बोध्यम् ॥ १७ ॥ १८ ॥ नान्य इति । अन्यथा कुर्व्वन्नेवेह कर्म्माणीत्यादि श्रुत्युक्तज्ञनप्रयुक्तासत्पुरुषार्थतापत्तेरित्यवधार्य्यम् ॥ १९ ॥ कामतश्चेति । तन्नैवंसति का-

**संसिद्धिमास्थिता जनकादयः । लोकसंग्रहमे-**
**वापि सम्पश्यन्कर्त्तुमर्हसि ॥ २० ॥ यद्यदा-**
**चरति श्रेष्ठस्तत्तदेवेतरो जनः । स यत्प्रमा-**
**णङ्कुरुते लोकस्तदनुवर्त्तते ॥ २१ ॥ न मे**
**पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन ।**
**नानवाप्तमवाप्तव्यं वर्त्तएव च कर्म्मणि ॥ २२ ॥**
**यदि ह्यहं न वर्त्तेयं जातु कर्म्मण्यतन्द्रितः ।**

कर्म्म कर्त्तव्यमेवेति किमर्थमाग्रह इत्याह । कर्म्मणैवेति । तत्रैवंसति मलिने भूतले यद्वन्मुखं नैवावभासते कर्म्मणा कामतश्चान्तस्तद्वदात्मा न भासतइति स्मृतिन्यायेन कर्म्मणैवेहामुत्रकैवल्यान्तस्य सिद्धिर्य्युक्तेति तदवश्यं जनकाजातशत्रुप्रभृतयोपि यथोक्तकर्म्मणैव सिद्धिम्प्राप्ता इत्याशयः ॥ २० ॥ ननु कर्म्मणि क्रियमाणेपि कथं लोकोप्यवश्यङ्करिष्यतीति जानीम इत्याह । यद्यदिति । एवन्तर्हि सर्व्वे राजाश्रिता धर्म्मा लोकधर्म्मस्य साधका इत्यादिस्मृत्या स यल्लौकिकम्वैदिकम्वा प्रमाणं कुरुते लोकोपि तदेवानुवर्त्तते न तु स्वातन्त्र्येणेति त्वयापि तदर्थन्तत्कर्तव्यमेवेत्यवधार्य्यम् ॥ २१ ॥ अत्र त्वहमेव प्रथमतो दृष्टान्त इत्याह । नम इति । तत्रैवंसति हे पार्थ त्रिष्वपि लोकेषु मम कर्तव्यं किमपि नास्ति यतो ऽनवक्लृप्तं फलङ्किञ्चिन्मया वाप्तव्यं नास्ति तथापि कर्म्मण्यहमिहामुत्र श्रेयस्कामाय यशोर्थं लोकानुग्रहाय च वर्तएवेत्यर्थः ॥ २२ ॥ ननु च लोकसंग्रहोपि त्वया न कर्तव्यो निष्फलत्वादिति चेत्तत्राह । यदीति । एवंसति यदि पुनरहमतन्द्रितो ऽनलसस्सन्क-

---

मतस्सकामरूपेण वाह्यप्रवृत्तित्वेन कर्म्मणा मलिनान्तःकरणस्य तत्त्वमस्यादिवाक्यजज्ञानेनाप्यात्मा शिवो हृदये न भासतइत्यर्थः ॥ २० ॥ धर्म्मस्येति । तद्यथा । राजर्षिश्चैव ब्रह्मर्षिश्च संमूलं द्वयं मतम् तयोर्हि विध्यमापन्ने कथं धर्म्मश्चरिष्यतीत्यादि द्रष्टव्यम् ॥ २१ ॥ किमपि नास्तीति । एवंसति सदाशिवस्य वरप्रसादेन त्रिषु लोकेषु मम कर्त्तव्यं नास्तीत्यर्थः । तद्यथा । मत्प्रसादान्मनुष्येषु देवगन्धर्व्वयोनिषु । अप्रमेयबलात्मा त्वं नारायण भविष्यसीत्यादिना द्रोणपर्व्वणि सदाशिवेनोक्तत्वादिति भावः ॥ २२ ॥ मम वर्त्मेति । ननु तव किं वर्त्मेति चेच्छृणु ।

मम वर्त्मानुवर्त्तन्ते मनुष्याः पार्थ सर्व्वशः
॥ २३ ॥ उत्सीदेयुरिमे लोका न कुर्य्यां कर्म्म
चेदहम् । सङ्करस्य च कर्त्ता स्यामुपहन्या-
मिमाः प्रजाः ॥ २४ ॥ शक्ताः कर्म्मण्यवि-
द्वांसो यथा कुर्व्वन्ति भारत । कुर्य्याद्विद्वां-
स्तथा शक्तश्चिकीर्षुर्लोकसङ्ग्रहम् ॥ २५ ॥
न बुद्धिभेदं जनयेदज्ञानाङ्कर्मसङ्गिनाम् ।

र्मणि जातु नाम कदा चिन्न वर्त्तयन्तदा मम सतो वर्त्म मार्गं हे पार्थ मनुष्याः कर्माधिकारिणस्सर्व्वशस्सर्वप्रकारैर्वर्त्तन्ते ते च नानुवर्त्तेरन्नित्यर्थः ॥ २३ ॥ नन्वेवमपि न कुर्य्यांच्चेत्तर्हि किं स्यादित्याह । उत्सीदेयुरिति । एवन्तर्ह्यनुमन्ता ऽनुद्रष्टा च साक्षी चैवानुमोदकः । कर्त्ता कारयिता चेते षड्वै कर्मानुगास्स्मृता इत्यादिस्मृत्या यद्यहं यथोचितम्वेदानुगम्पीताम्बरान्त्रिपुण्ड्रञ्चेत्यादिपुत्राद्यर्थङ्कर्म्म न कुर्य्यां तदा लोकस्थितिहेतोः कर्मणो लोपेनेमे सर्वे लोका मम वर्त्मानुवर्तिनो विनश्येयुरित्यर्थः । ततश्च वर्णसङ्करस्य च कर्ताहमेव स्यां तेन चेमास्सर्व्वाः प्रजा अहमेवोपहन्यामिदानीन्तव साक्षित्वादिति भावः ॥ २४ ॥ नन्वज्ञवद् ज्ञानवानपि यदि कर्म कुर्य्यात्तर्हि तयोः को विशेष इत्याह । शक्ता इति । तत्रैवंसति हे भारत फलाभिसन्धियुक्ता यथाज्ञाः कर्म कुर्वन्ति तथैव ब्रह्मवेत्ता विद्वानपि लोका अप्येवङ्कुर्य्यादिति लोकसंग्रहञ्चिकीर्षुः कुर्य्यादेवेत्यर्थः ॥ २५ ॥ ननु कर्म्मानुष्ठानेनैव लोकसंग्रहः कर्त्तव्यो नतु तत्त्वज्ञानेनेति तत्र को हेतुरित्याह । न बुद्धीति । तस्मादुर्वारुकामिवेति न्यायेन चादौ चित्तशुद्ध्यर्थङ्कामनयापि कर्त्तव्यमेवेत्यज्ञाना-

---

देवता सार्व्वभौमस्तु महादेवः स्तुतिस्मृतः । ततो वयन्तु सर्वे वै महादेवस्य सेवका इत्यादिना स्कान्दे मयैवोक्तत्वादिति भावः ॥ २३ ॥ पुत्राद्यर्थमिति । तदेतद्भविष्येप्युक्तम् । तद्यथा । भगवान्देवकीपुत्रो ब्रह्मण्यो भक्तवत्सलः । सदाशिवप्रसादेन लेभे पुत्रान्सहस्रश इत्यादि द्रष्टव्यम् ॥ २४ ॥ भारतेति । तत्र भरतवंशोद्भवत्वेन भा ज्ञानाख्या चिदम्बरदीप्तिस्तस्यां रतत्वेन वा त्वं यथोक्तार्थावबोधयोग्योऽसीत्युक्तम्भवतीति भावः ॥ २५ ॥ न्यायेन चेति । तद्यथा

**योजयेत्सर्व्वकर्म्माणि विद्वान्युक्तस्समाच-रेत् ॥ २६ ॥ प्रकृतेः क्रियमाणानि गुणैः कर्म्माणि सर्व्वशः । अहङ्कारविमूढात्मा कर्त्ताहमिति मन्यते ॥ २७ ॥ तत्त्ववित्तु महा-बाहो गुणकर्म्मविभागयोः । गुणागुणेषु वर्त्त-**

ङ्कर्म्मसङ्गिनाम्बुद्धिभेदं न जनयेत्किन्तु विद्वानपि युक्तस्सन्कर्म कुर्य्यादेवेत्यर्थः । अन्यथा रुरुक्षोर्मुनेर्य्योगङ्कर्मकारणमिष्यतइत्यादिस्मृत्युक्तमार्गेण च कर्मणो ऽक-रणादप्राप्त्वाज्ञानमार्तण्डङ्कर्मजन्यम्फलं शुभम् । इतो भ्रष्टास्ततो भ्रष्टा धौतश्चैव च निष्फला इत्यादिस्मृत्युक्तन्यायेनोभयतोपि भ्रष्टत्वमापद्येतेत्यवधार्य्यम् ॥ २६ ॥ नन्वेवमपिं विदुषामविदुषाञ्च कर्मकर्तृत्वे को विशेष इत्याह । प्रकृतेरिति । त-त्रैवंसति मायान्तु प्रकृतिम्विद्यान्मायिनन्तु महेश्वरमित्यादिश्रुत्या या प्रकृतिर्माया सत्वरजस्तमोमयी पारमेश्वरी शक्तिस्तस्याः प्रकृतेर्गुणैर्व्विकारैः कार्य्यकारणरूपैः क्रियमाणानि लौकिकानि वैदिकानि च कर्माणि सर्वशस्सर्वप्रकारैरहङ्कारविमूढा-त्मा यतः पञ्चकोशादिविवेकरहितो ऽहमेव करोमीति मन्यते भृत्यगृञ्जनभक्षण-न्यायेनाकर्त्तापि जीवो दुष्यतइति तात्पर्य्यम् ॥ २७ ॥ नन्वेवन्तत्त्वविदपि बाह्य-वृत्त्या तथैव क्रियमाणः कुतो न बध्यतइत्याह । तत्त्वविदिति । एवंसत्यात्मानं रथि-

---

उर्व्वारुकं यथा मुक्तं स्वयमेवाभिपक्वतः । तद्दृषौ(?)व्व मुक्तस्सन्ब्रह्मभूयाय कल्प-तइति । एवं सति यस्तु गार्हस्थ्यधर्म्मं तिरस्कृत्य मुद्राजटेत्यादिपाखण्डयुक्तस्स-तूभयतोपि भ्रष्ट इति समनन्तरं वक्ष्यते । कुर्य्यादेवेति । तदेतत्तत्वनिर्णयेप्यु-क्तम् । प्रवृत्तिरपि विज्ञस्य निवृत्तिमुपजायते । निवृत्तिरपि मूढस्य प्रवृत्तिमुप-जायतइत्यतो विद्वानपि युक्तं कर्म्म कुर्य्यादेवेति भावः ॥ २६ ॥ मायिन-मिति । एवं सति शिवस्यार्द्धे स्थिता गौरी तदर्द्धो हरिरिष्यतइत्यादिस्मृत्या तथैकापि शक्तिः परमेश्वरस्य भिन्ना चतुर्धा व्यवहारकाले । भोगे भवानी पुरुषे च विष्णुरित्यादिस्मृत्युक्तरीत्या च मायिनं सदाशिवं महेश्वरं विद्यादित्यर्थः । भक्षणन्यायेनेति । तदुक्तं धर्म्मनिबन्धे, तद्यथा । भक्षितस्य यतो येन गृञ्जनं लशुनन्तथा । प्रायश्चित्तमहोरात्रमभुक्तिः स्वामिनः स्वस्थितिस्मृतिन्यायेने-त्यर्थः ॥ २७ ॥ तत्त्वेति । तत्र यदि देहम्पृथक्कृत्य चिति विश्राम्य तिष्ठतीति

**न्तइति मत्वा न सज्जते ॥ २८ ॥ प्रकृतेर्गुण-
संमूढास्सज्जन्ते गुणकर्म्मसु । तानकृत्स्नविदो
मन्दान्कृत्स्नविन्न विचालयेत् ॥ २९ ॥ मयि
सर्व्वाणि कर्म्माणि संन्यस्याध्यात्मचेतसा ।
निराशीर्न्निर्म्ममो भूत्वा युध्यस्व विगत-
ज्वरः ॥ ३० ॥ ये मे मतमिदं नित्यमनुति-**

मन्प्राहुः शरीरं रथमेव तु । इन्द्रियाणि हयान्याहुर्मनः प्रगृह एव च । बुद्धिन्तु सारथि-न्विद्धि विषयास्तेषु गोचरा इत्यादिस्मृत्या तत्तद्विवेकादात्मसाक्षात्कारेण गुणकर्म-विभागयोर्ज्ञाता न सज्जतइत्यर्थः ॥ २८ ॥ अथ पूर्वोक्तमेवोपसंहरन्नाह । प्र-कृतेरिति । एवन्तार्हि प्रकृतेर्ये सत्त्वादयो गुणास्तैर्य्ये सम्मूढा बद्धास्तएव गुणकर्म-सु सज्जन्ते तथासति तानकृत्स्नविदो यस्मिन्विज्ञाते सर्वम्विज्ञातम्भवतीत्यादिश्रु-त्यभिहितज्ञानहीनांस्तज्ज्ञानवान्न विचालयेदित्यर्थः ॥ २९ ॥ नन्वस्त्वेवम्परन्तु मुमुक्षुश्चेत्स कथङ्कर्म कुर्य्यादित्याह । मयीति । तत्रैवंसति सोहं स च त्वं स च सर्वमेतदात्मस्वरूपन्त्यज भेदमोहमित्याध्यात्मचेतसा वेदैरनेकैरहमेव वेद्य इत्यादि-श्रुत्युक्ताहङ्गिरोपासनया मयि सदाशिवे तुरीये सर्वसाक्षिणि सर्वाणि कर्माणि यस्मिन्कृतेन किञ्चित्कर्म क्रियतइति श्रुतिन्यायेन संन्यस्य समर्प्य निराशीः फ-लाभिसन्धिरहितो ऽहं ममेत्य सद्भावं देहादौ मोहजन्त्यक्त्वा विगतज्वरस्सन्युध्यस्वे-

---

स्मृत्युक्तप्रकारेण गुणकर्म्मविभागयोर्ज्ञाता न सज्जते जन्ममरणादिनेति भावः ॥ २८ ॥ सत्वादय इति । तत्र तावत् सत्वं सुखेन बध्नातीत्यादीनाऽपि, यद्यपि सत्वादीनां प्रकृतिजत्वेन संमोहकत्वमेवोक्तं तथापि विमलसत्त्वस्य निस्त्रैगुण्यसाधकत्वमेवेति पूर्व्वोक्तं न विस्मर्त्तव्यम् । यस्मिन्निति । तत्रैवं सति यस्मिन्सदाशिवे सर्व्वसाक्षिणि विज्ञाते सर्व्वमिदम्प्रपञ्चजातं विज्ञातम्भवतीत्यर्थः । अत एवैतत् सर्व्वमत्वसिद्धयर्थम्पृथिव्यादयोप्यहर्न्निशं हरहरेत्यादिशब्दमर्य्यादया भजन्तीति स्कान्दे दर्शितम् । तद्यथा । सदाशिवं पृथिव्याद्या हरेत्येतद्धरेति च । प्रवदन्ति तथैवाग्निर्वंश्वमित्याह भक्तित इत्यादि द्रष्टव्यम् ॥ २९ ॥ भूमानमिति । एवं सतीममेव भूमानम्पुरुषं वीपदेशोक्तं भागवतम्प्रत्यर्ज्जुनाय श्री-

**ष्ठन्ति मानवाः । श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्म्मभिः ॥ ३१ ॥ ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् । सर्व्वज्ञानविमूढांस्तान्विद्धि नष्टानचेतसः ॥ ३२ ॥ सदृशञ्चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि । प्रकृतिं**

स्यर्थः ॥ ३० ॥ ननु यदुक्तमध्यात्मचेतसेत्यादि तदेव पुनर्द्रढयति । येमइति ॥ एवन्तर्हि ये मानवा मम मदीयं मतं भूमानन्तं सदानन्दं शिवमेकमनामयम्विद्धि त्वं श्रुतिभिर्मृग्यं दर्शयिष्ये परम्पदमित्यादिस्मृतिवेद्यत्वेनेदमिष्टं नित्यमनुतिष्ठन्ति श्रद्धावन्तः पुनश्चानसूयन्तो गुणेषु दोषादर्शिनस्ते यथोक्तरीत्या कर्मभिः कृत्वा यद्बन्धनन्तस्माद्विमुच्यन्तइत्यर्थः ॥ ३१ ॥ एवमत्रान्वयेन गुणमुक्त्वा व्यतिरेकेण दोषमप्याह । ये त्विति । एवंसति ये तु भवन्तं देवेशं शिवमिनरगीर्वाणसद्वशम्प्रमादाद्यः काश्चिद्यदि वदति चित्तेपि मनुते सुदुःखं लब्ध्वान्ते नरकमपि जातिध्रुवमिदन्ध्रुवं देवाराध्यस्त्वमपि परमं ध्रुवमितीत्यादिब्रह्मवैवर्त्ते सदाशिवम्भूमानम्प्रति मद्वाक्यविरोधादभ्यसूयन्तः पीताम्बरान्त्रिपुण्ड्रञ्च धृत्वा रुद्राक्षमालिकां, जजाप शिवसाहस्रं शिवैकाहितमानस इत्यादिपाद्मोक्तं मे मतं नानुतिष्ठन्ति पाशुपतव्रतैर्न्नानुवर्तयन्ति तानचेतसो दुष्टचित्तानेव विद्धीत्यर्थः ॥ ३२ ॥ ननु ममैवानुवर्त्तिनो यदि मनुष्यास्तर्हि कथमनर्थेष्वेते प्रवर्तन्तइति चेत्तत्राह । सद्वशमिति । तत्रैवंसति पूर्वजन्मार्ज्जितात्पापात्संसर्गाद्वाथ पाप्मनां, वैदिकेष्वथ मार्गेषु रुचिर्नैव स्वभावत इत्यादिस्मृत्या धर्माधर्मविवेकेन ज्ञानवानपि स्वस्याः प्रकृतेः पूर्वोपार्जितस्वभावतस्सद्व-

---

क्षणेन भगवता दर्शितमित्यवधेयम् ॥ ३१ ॥ देवाराध्यइति । तत्र ताद्ब्रह्मादिभिर्द्देवैराराध्यस्सदाशिव एवेत्यर्थः । तदुक्तम्ब्रह्मवैवर्त्ते । तद्यथा । मन्मायामोहितास्सर्व्वे मम माया दुरत्यया । ब्रह्मविष्णुमुखा देवा मामाराध्य पदाधिपाः ॥ मां न जानन्ति तत्वेन घ्नाते मुक्ता भवन्ति ते । न घ्नाते मयि भोगान्ते जन्मभाजः पुनर्ध्रुवमित्याद्यवधार्य्यम् ॥ ३२ ॥ संसर्गादिति । तत्रैवंसति संसर्गस्याप्यर्थानर्थकारित्वमाख्यानकेप्युक्तम् । तद्यथा । यद्दं मुनीनां वचनं शृणोमि शृणोति राजन्स गवाशिनां वचः । नैवास्य दोषो न च मद्गुणो वा संसर्गजा दोषगुणा भवन्ति

यान्ति भूतानि निग्रहः किङ्करिष्यति ॥ ३३ ॥
इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।
तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ
॥ ३४ ॥ श्रेयान्स्वधर्म्मो विगुणः परधर्म्मा-
त्स्वनुष्ठितात् । स्वधर्म्मे निधनं श्रेयः पर-
धर्मो भयावहः ॥ ३५ ॥ अर्ज्जुन उवाच ॥
अथ केन प्रयुक्तोयम्पापं चरति पूरुषः ।

शञ्चेष्टते अत एव तानि प्राणिनः प्रकृतिं स्वस्वभावमेव यान्तीति निग्रहो विषये-
भ्यो विनिवृत्तिरूपो यत्नः किङ्करिष्यतीति भावः ॥ ३३ ॥ नन्वस्त्वेवम्परन्तु पू-
र्वोपार्जितस्वभावजन्याम्प्रकृतिं कथं निगृह्णीयादित्यत आह । इन्द्रियस्येति । तथा
चेह वीप्सोक्तिस्सर्वेषामिन्द्रियाणाम्विषये शब्दस्पर्शादौ वचनादानादौ च शा-
स्त्रानुकूले प्रवृत्तिस्तत्प्रतिकूले चावशौ रागद्वेषौ व्यवस्थिताविस्यर्थः ततश्चास्य पुरु-
षस्य तौ परिपन्थिनावतस्तयोर्वशं नागच्छेदित्यर्थः ॥ ३४ ॥ ननु श्रद्धाहानिस्त-
थासूयादुष्टचित्तत्वमूढते । प्रकृतेर्वशवर्त्तित्वं रागद्वेषौ च पुष्कलावित्यादिस्मृत्युक्ता-
न्धर्मप्रतिबन्धकान्केन धर्मेण जयङ्कुर्य्यादित्याह । श्रेयानिति । तत्रैवंसति परधर्मा-
त्स्वनुष्ठितादपि स्वधर्मो विगुणस्स्वल्पोपि श्रेयानित्यर्थः । एवंसति स्वधर्मे निधनं न्यू-
नमपि कृतञ्चेच्छ्रेयः परधर्म्मस्तु सावधानेन कृतोपि मुद्राजटारचनमौण्ड्यवताम्वृ-
थैवेतिवद्भयावहो भयप्रद इत्यर्थ इत्यधिकम्वर्णाश्रमधर्मनिरूपणे द्रष्टव्यम् ॥ ३५ ॥
ननु चौरोपीतस्ततो निरीक्ष्य गृहात्यतस्सोप्यधर्म्मं धर्मञ्च विजानातीति कुतो ना-

त्यादि द्रष्टव्यम् । ज्ञानवानिति । एवंसति, चौरोपि च यथा चौर्य्यं संनिरीक्ष्य
त्वितस्ततः । धर्म्मशीलः कुतो नैव जानीयाद्धर्म्मशोभनमित्यादिस्मृतिन्यायेन
यथोक्तमर्थ्यादयो ज्ञानवानपि स्वस्याः प्रकृतेः स्वभावाद्विमुह्यतीत्यर्थः ॥ ३३ ॥
स्वल्पोपीति । तद्यथा । अकरणात्करणं श्रेयः स्वल्पाद्विस्तारसंयुतः । येन केन
प्रकारेण स्वधर्म्मं रक्षयेद्बुध इतिस्मृत्या स्वल्पोप्यकरणाद्धर्म्मश्श्रेयानित्याश-
यः ॥ ३५ ॥ विजानातीति । तद्यथा । ज्ञात्वाप्यत्यन्तवैरस्य यः पदार्थेषु दुर्म्म-
तिः । वध्नाति भावनां भूयो नरो नासौ स गर्दभ इत्यादिस्मृत्या जानन्नपि स्व-

**अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ॥ ३६ ॥ श्रीकृष्ण उवाच ॥ काम एष क्रोध एष रजोगुणसमुद्भवः । महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥ ३७ ॥ धूमेनाव्रियते वन्हिर्य्यथाऽऽदर्शो मलेन च । यथो-**

धर्मान्मनुजो निवर्ततइत्यभिप्रेत्याह । अथेति । एवन्तर्हि केन पाप्मना प्रयुक्तः प्रेरितोऽयम्पुरुषोऽनिच्छन्नपि बलादिव नियोजितस्सन्पापञ्चरतीति तमनर्थमार्गप्रवर्तकं माम्प्रति ब्रूहीत्यर्थः ॥ ३६ ॥ नन्विहैवाधोमुखं नालदण्डे पद्ममव्यवस्थितङ्कदलीपुष्पसङ्काशमत्यतिष्ठद्दशाङ्गुलन्तत्पद्मे कर्णिकामध्ये यदा विश्राम्यते मनस्तदा सर्व्वगुणज्ञाने चैतन्येऽपि मतिर्भवे,त्पूर्व्वेशाने कृपाज्ञाने उत्तरे भोगवर्द्धिनी, नैर्ऋत्ये तु दले मोहो दक्षिणे क्रोधमत्सरो, निद्रालस्ये तथा चाग्नौ सन्धौ जाड्यं त्रिदोषदमित्यादिस्मृत्या प्रसिद्धा अपि काममूला रागद्वेषादयः कुतः पुरुषम्प्रति बध्नन्तीत्याह । काम इति । एवंसति यथोचितवेदमर्य्यादया सेविताः कामक्रोधलोभमोहमदमात्सर्यादयस्तूर्वारुकमिवेति न्यायेन साधका अपि तद्भिन्नमर्य्यादया धर्म्मप्रतिबन्धका एवेति तेषां तमोविमिश्रितरजोंशत्वेन महाशनत्वमतो महापाप्मत्वञ्चेतीह संसारे वैरिणमेनं सर्वानर्थमूलङ्काममविद्धीत्यर्थः ॥ ३७ ॥ ननु ते कथम्पुरुषम्विपश्चिद्रूपमप्याच्छादयन्तीत्याह । धूमेनेति । तत्रैवंसति यथा धूमेन सहजेन प्रकाशात्मको वन्हिराव्रियते यथा चादर्शो मलेन यथा वोल्वेन जरायुणा चावृतो

---

चित्तं न बध्नातीत्यत्र किङ्कारणमिति प्रश्नाशयः ॥ ३६ ॥ यदा विश्राम्यतइति । तदर्यं विश्रामस्तु धौतिर्बस्तिस्तथा नेतिस्त्राटनं नौलिका तथा । कपालभातिरेतानि षट्कर्म्माणि प्रचक्षतइत्यादिस्मृत्या षट्कर्म्मयुक्तस्यैव योगिनो मनो विश्राम्यतइत्यधिकं योगशास्त्रतोवधार्य्यम् । साधका इति । तथा च कामाद्धर्म्मस्तथा-लोभाच्च्मदमात्सर्यतोपि वा । कुर्व्वाणःश्रेष्टमासाद्य मोक्षं साधनतः परमित्यादिस्मृतिन्यायेनापि ते कामादयस्साधका एवेत्यभिप्रायेणैव ते स्वयम्भुवा रचिता तद्भिन्नविषयत्वेन तु प्रतिबन्धका इति श्रुतेरिवार्थं स्मृतिरन्वगच्छदिति रीत्यावधेयम् ॥ ३७ ॥ कामः कामानामिति । ननु पूर्व्वमुक्तमुर्व्वारुकमिवेत्यादि, इह

एवेनावृतो गर्भस्तथा तेनेदमावृतम् ॥ ३८ ॥
आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ।
कामरूपेण कौन्तेय दुःपूरेण नलेन च ॥ ३९ ॥
इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते ।
एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥४०॥
तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ । पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम् ॥ ४१ ॥ इन्द्रियाणि पराण्याहुरिन्द्रिये-

गर्भस्तथा तेन कामादिनेदम्पुरुषस्य ज्ञानमावृतमित्यर्थः ॥ ३८ ॥ एवम्पूर्वोक्तमेवोपसंहरन्नाह । आवृतमिति । एवन्तर्हि न जातु कामः कामानामुपभोगेन शाम्यति हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धतइत्यादिस्मृत्या चैतेन नित्यवैरिणा कामरूपेण दुःपूरेणानलसदृशेन ज्ञानिनोपि ज्ञानं सद्विचारलक्षणमावृतमित्यर्थः ॥३९॥ ननु ज्ञाते हि शत्रोरधिष्ठाने सुलभेन स जेतुं शक्यतइति तदधिष्ठानमप्याह । इन्द्रियाणीति । तथा चेन्द्रियाणि शब्दस्पर्शरूपरसगन्धग्राहकाणि श्रोत्रादीनि एवम्वचनादानगमनविसर्गमेहनग्राहकाणि कर्मेन्द्रियाणि मनोबुद्धिभ्यां सहितान्यस्य कामादेरधिष्ठानमुच्यतइत्यर्थः । एवंसत्यैतैरेवाधिष्ठानभूतैर्देहिनं जीवन्तज्ज्ञानमावृत्य विमोहयतीत्यर्थः ॥ ४० ॥ ननु तस्मात्किङ्करणीयमस्तीत्याह । तस्मादिति । तत्र तावत्त्वमिन्द्रियाण्यादौ नियम्य वशीकृत्य ज्ञानविज्ञाननाशनमेवं पाप्मानं सर्वमूलङ्कामं जहीत्यर्थः ॥ ४१ ॥ ननु कथञ्चिद्बाह्येन्द्रियजयेनैव कथङ्कामादेर्ज्जय इत्याह । इन्द्रियाणीति । तथा च शब्दादिविषयेभ्य इन्द्रियाणि पराणि सूक्ष्माणि

---

तु न जातु कामः कामानामित्यादि विप्रतिषिद्धमेतदिति चेत्, शृणु । अभुक्तभोगो यः कश्चिद्भुक्तभोगोपि तद्विधः । वर्णाश्रमविपन्नो यः कामाद्यैः प्रतिबध्यतइति स्मृतिन्यायेनाविरुद्धत्वम्बोध्यम् । ज्ञानिनोपीति । शास्त्रजन्यसंस्कारवत्त्वेन ज्ञानिनोपीत्यर्थः । तद्यथा । ज्ञानं द्विविधमाख्यातं शास्त्रीयञ्चार्थबोधजम् । बोधाच्चिदंहते चिप्रमशेषम्पापपञ्जरमित्यादि द्रष्टव्यम् ॥ ३९ ॥ श्रोत्रादीनीति । श्रोत्रत्वक्चक्षुर्ज्जिह्वाघ्राणाख्यानीत्यर्थः । कर्मेन्द्रियाणीति ।

भ्यः परं मनः । मनसस्तु परा बुद्धिर्यो बुद्धेः
परतस्तु सः ॥ ४२ ॥ एवंबुद्धेः परम्बुध्वा
संस्तभ्यात्मानमात्मना । जहि शत्रुं महाबा-
हो कामरूपं दुरासदम् ॥ ४३ ॥ इति श्रीभ-
गवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशा-
स्त्रे श्रीकृष्णार्जुनसंवादे कर्म्मयोगो नाम
तृतीयोध्यायः ॥ * ॥ श्रीकृष्ण उवाच ।
इमं विवस्वते योगम्प्रोक्तवानहमव्ययम् ।

प्रबलानि चेत्यर्थः । एवन्तेभ्यो मनः परं मनसस्तु बुद्धिः परा ततो बुद्धेः परतर-स्तच्छब्देन लक्ष्योखण्डः परात्मा तुरीयशिव इत्यर्थः ॥ ४२ ॥ ननु ततः कि-म्फलितमित्याह । एवमिति । तत्रैवंसति शिवमद्वैतम्पूर्णमात्मानम्बुद्धेः परम्बुध्वा सा-क्षात्कृत्यात्मनान्तःकरणेनात्मानं संस्तभ्य स्थिरीकृत्य कामरूपं दुरासदं दुर्द्धरं श-त्रुं जहीति परमार्थः ॥ ४३ ॥ इति श्रीमत्पदवाक्यप्रमाणयोगिवर्यविप्रराजेन्द्रवि-रचिते तत्त्वैकदर्शने भाष्ये कर्म्मयोगनिरूपणं नाम तृतीयोध्यायः ॥ * ॥ स-बाह्याभ्यन्तरैः कर्म्म यत्कर्त्तव्यन्त्वयार्ज्जुन । ब्रह्मार्पणञ्चतुर्थे तु सोर्ज्जुनायाब्रवी-द्धरिः । नन्वयं ज्ञानयोगः कर्म्मयोगश्च कस्मात्परम्परातः प्राप्त इत्याह । इममिति ।

---

वाक्पाणिपादपायूपस्थाख्यानीत्यर्थः ॥ ४० ॥ नन्वन्नप्राणमनोविज्ञानेत्यवच्छि-न्नवादे कोशचतुष्टयातीतत्वेन कामादेर्ज्जयात्कथमात्मोपलब्धिरित्युपसंहरति । तथा चेति । एवं सति लक्ष्यलक्षणविशेष्यविशेषणसामानाधिकरण्यञ्चेति चित-यत्वावच्छेदेन सम्बन्धेन भागत्यागलक्षणया परात्मा शिवो ऽसङ्गोवगम्यतइति भावः ॥ ४२ ॥ नन्वेतावतापि कथं दुर्द्धर्षः कामो जेतव्य इत्याह । स्थिरीकृ-त्येति । एवन्तर्हि यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिमाधि-ष्ठानं समस्तस्येतिरीत्यावश्यं शिवैकतत्वं स्थिरीकृत्य जेतव्य इत्यवधेयम् ॥ ४३ ॥ इति श्रीमद्योगिवर्यविप्रराजेन्द्रात्मजविरचिते भाष्यप्रदीपे तृतीयो-ध्यायः ॥ * ॥ ननु यदि मातुलत्वेन तृणोषि चेत्तर्हि ममश्शम्भुपदारविन्दयोरित्या-

**विवस्वान्मनवे प्राह मनुरिक्ष्वाकवे ऽब्रवीत्**
**॥१॥ एवम्परंपराप्राप्तमिमं राजर्षयो विदुः ।**
**स कालेनेह महता योगो नष्टः परन्त-**
**प ॥ २ ॥ स एवायं मया तेद्य योगः प्रोक्तः**
**पुरातनः । भक्तोसि मे सखा चेति रहस्यं**
**ह्येतदुत्तमम् ॥ ३ ॥ अर्ज्जुन उवाच । अप-**

तथा चादौ शिवाज्ञया तपस्तप्त्वा ज्ञानविज्ञानसंयुतः कृतकृत्यो ह्यभूत्पूर्व्वमर्ज्जुनाय यथोक्तवानित्यादिपाद्मोक्त्या सदाशिवात्स्वयम्विज्ञाततत्त्वोहमध्यायद्वयेनोक्तपरम्पराप्राप्तत्वेनाव्ययं योगम्विवस्वते सूर्य्याय प्रोक्तवानित्यर्थः एवम्विवस्वान्मनवे वैवस्वताय मनुश्चेक्ष्वाकवे क्षत्रियवर्य्यायाब्रवीदित्यर्थः ॥ १ ॥ एवमिहादित्यमारभ्य गुरुशिष्यपरम्पराम्पुनरवधारयन्नाह । एवमिति । ततश्चैवम्परम्परया सूर्य्यादिवंशोद्भवा राजर्षयोपीमं योगम्विदुरित्यर्थः । स च योगः कालेन महता दीर्घेणेदानीमावयोर्व्यवहारकाले द्वापरान्ते दुष्टवासनयाभिभूयमानत्वेन नष्टस्तमवधारयेति परन्तप इत्यनेन दर्शितम् ॥ २ ॥ ननु कथम्भूतोयं योग इत्याह । स एवेति । तत्रैवंसति स एव सदाशिवोपलब्धपरम्परया पुरातनोयं योगो यतो भक्तोसि सखा चेति ततस्तुभ्यं रहस्यं ह्येतदुत्तमम्ब्रवीमीत्यर्थः ॥ ३ ॥ नन्वावयोराजन्मसा-

दिस्मृतिन्यायेन यस्य देवे परा भक्तिरित्यादिश्रुतिन्यायेन च तद्भावेनैव सर्व्वं शिवार्पणं कुर्व्वित्याह । सवाद्येति । तद्यथा । परमाद्वैतविज्ञाननिष्ठाय परयोगिने शरीरमर्थम्प्राणञ्च प्रदद्याच्छ्रद्धया सहेत्यादिस्मृत्यन्तरादपि द्रष्टव्यम् । ननु प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धैरतिह्यशिष्टाचारतुष्टिभेदाद्दशविधप्रमाणं मतभेदेनोक्तन्तच्च श्रुतिस्मृतिसिद्धमेतिह्यमपि यथोक्तं प्रमाणयन्नाह । परम्पराप्राप्तत्वेनेति । इति शुश्रुम धीराणां येन तद्व्याचचक्षिरे इत्यादि श्रुत्यन्तरादपीत्यवधार्य्यम् ॥ १ ॥ दर्शितमिति । इह परं शत्रुं तापयसीति परन्तपस्ततस्तत्सम्बोधने हे परन्तप इत्यनेन दर्शितमित्यर्थः ॥ २ ॥ सदाशिवोपलब्धेति । एवं सति धर्मात्मजस्य बभूव पितेति प्रत्यभाषतेति भारतोक्त्यभिप्रायेण धर्मस्य दक्षदुहितरीत्यत्र भागवतेप्युक्तं विवेक्तव्यम् ॥ ३ ॥ न जानीम इति । एवं सत्येतन्नानावता-

रम्भवतो जन्म परं जन्म विवस्वतः । कथमेत-
द्विजानीयान्त्वामादौ प्रोक्तवानिति ॥ ४ ॥
श्रीकृष्ण उवाच । बहूनि मे व्यतीतानि जन्मा-
नि तव चार्ज्जुन । तान्यहम्वेद सर्व्वाणि न
त्वम्वेत्थ परन्तप ॥ ५ ॥ अजोपि सन्नव्य-
यात्मा भूतानामीश्वरोपि सन् । प्रकृतिं
स्वामधिष्ठाय सम्भवाम्यात्ममायया ॥ ६ ॥
यदायदा हि धर्म्मस्य ग्लानिर्भवति भारत ।

हित्यस्य सत्त्वात्कथम्भवतः सर्व्वज्ञत्वमित्याशङ्क्याह । अपरमिति । एवन्तर्ह्यपरं मत्सा-हित्येन भवतो जन्म विवस्वतश्च परम्पूर्वं सृष्ट्यादौ जन्माभूदिति कथन्त्वमादौ विवस्वते प्रोक्तवानिति न जानीम इति प्रश्नः ॥ ४ ॥ तत्रार्ज्जुनस्य विस्मयं निरा-कर्त्तुम्पूर्ववृत्तमाह । बहूनीति । एवंसत्यावयोर्ज्जन्मानि बहुशो व्यतीतानि तान्यहं सर्व्वाण्यपि पीताम्बरन्त्रिपुण्ड्रञ्चेत्यादिपाशुपतव्रतोपासनया यस्मिन्विज्ञाते सर्व्वम्वि-ज्ञातम्भवतीति परब्रह्मणशिवैकभावनया च वेद्मि त्वन्तु हे अर्ज्जुन किम्वृक्ष-त्वमापन्नोसीत्याशयः ॥ ५ ॥ ननु यदि परात्मतादात्म्येन ब्रह्मीभूतस्तर्हि क-थन्ते पुनरावृत्तिलक्षणं जन्मेत्याह । अजोपीति । एवन्तर्हि परमशिवोपासनया ब्र-ह्मीभावेनाजोपि सन्नव्ययात्मा तथा तदिच्छयैव भूतानामीश्वरो नियन्तापि स-न्नात्मनाऽशिवस्य मायया प्रकृतिं स्वामधिष्ठाय सम्भवामीत्यर्थः ॥ ६ ॥ ननु दे-वदेवेच्छया कदा ते प्रादुर्भाव इत्याह । यदायदेति । तत्रैवंसति स्तुवन्तं तं समालो-क्य तपसा कर्शितं हरिं, युगे युगे च मद्भक्त्या लोकानां कार्यमावहेत्यादिकू-र्म्मस्मृत्या यदायदा वेदविहितस्य धर्म्मस्य ग्लानिर्भवति एवं यदायदा वेदवि-

---

राणां निधानम्बीजमव्ययं यस्यांशांशेन सृज्यन्ते देवतिर्य्यङ्नरादय इत्यतस्तम-जानतोऽस्माकं न जानीम इत्याशयः ॥ ४ ॥ वृक्षत्वमिति । तदेवमर्ज्जुनोऽस्ति वने वृक्षः पाण्डवेष्वस्ति सोऽर्ज्जुन इत्यादिकोशोक्त्या किं त्वं जडत्वेन वृक्षत्वमापन्नो-ऽसीति न बुद्ध्यस इत्याशङ्कोक्तिरिति भावः ॥ ५ ॥ तपसेति । एवं सति तत्र नारा-यणो देवः स्वात्मनः परमेश्वरमाश्रित्य शेषशयनः पूजयन्योगनिद्रयेत्यादिवचनमेव

अभ्युत्थानमधर्म्मस्य तदात्मानं सृजाम्यह-
म् ॥ ७ ॥ परित्राणाय साधूनाम्विनाशाय
च दुष्कृताम् । धर्म्मसंस्थापनार्थाय सम्भ-
वामि युगेयुगे ॥ ८ ॥ जन्म कर्म्म च मे दिव्य-
मेवं यो वेत्ति तत्त्वतः । त्यक्त्वा देहम्पुन-
र्ज्जन्म नैति मामेति सोर्ज्जुन ॥ ९ ॥ वीत-
रागभयक्रोधा मन्मना मामुपाश्रिताः । बह-

रुद्धस्याभ्युत्थानम्भवति तदात्मानम्परेच्छया नानाविधावताररूपेण सृजामी-
त्यर्थः ॥ ७ ॥ ननु कस्मै प्रयोजनायैतावता क्लेशं धारयसीति चेत्तत्राह । प-
रित्राणायेति । तत्र तावद्वेदमार्गस्थानां साधूनाम्पुण्यकर्म्मणाम्परित्राणाय ए-
वं दुष्कृताम्पापकारिणाम्वेदमार्गविरोधिनाम्वेदब्राह्मणशिवनिन्दकानां कंसादीनां
राक्षसानाञ्च विनाशायेत्यर्थः । तदेतदप्युक्तङ्कूर्म्मपुराणे । तद्यथा । ततो लब्धवरः
कृष्णो जनयित्वा सुपुत्रकान्हत्वा च कंसं नरकमन्यांश्च बहवोऽसुरानित्यादि द्रष्ट-
व्यम् ॥ ८ ॥ मन्वस्मदादिवज्जन्मकर्म्मादेस्तवापि सत्त्वात्को विशेष इत्याशङ्क्या-
ह । जन्मेति । एवन्तर्हि शिवैकतादात्म्येन तत्त्वतो नित्यसिद्धस्य जन्मकर्म्मादिकं
लीलया यो वेत्ति स त्यक्त्वा देहं पुनर्ज्जन्म नैति न प्राप्नोति किन्तु मां शिवमद्वै-
तन्तुरीयमहङ्गिरोपासनयैति प्राप्नोतीत्यर्थः । नह्यन्यज्ञानादन्यगतानर्थनिवृत्तिरि-
त्यथातो ब्रह्मजिज्ञासेत्यनेन विवेक्तव्यम् ॥ ९ ॥ तस्माद्वस्तुतः किङ्करणीयमस्ती-

---

कूर्म्मपुराणे तपसा कर्षितं स्तुवन्तञ्च हरिं समालोक्य सदाशिवेनोक्तमित्या-
शयः ॥ ७ ॥ ब्राह्मणेति । तदिदं स्कान्दे दुर्व्वाससम्प्रति द्रौपदीवचनम् ।
तद्यथा । भगवन्देवकीपुत्रो ब्रह्मण्यो भक्तवत्सलः । सदाशिवप्रसादेन लेभे पुत्रा-
न् सहस्रश इत्याद्यन्यच बहुशः ॥ ८ ॥ अहङ्गिरोपासनयेति । तथा च यस्य
देवे परा भक्तिर्यथा देवे तथा गुराविति श्रुतिन्यायेन वेदैरनेकैरहमेव वेद्य
इत्यादिस्मृत्युक्तरीत्या च मामेतीत्यर्थः । विवेक्तव्यमिति । अनेन हि ब्रह्मज्ञानेन
जीवगतानर्थनिवृत्तिरुक्ता सा च जीवब्रह्मणोरैक्ये सत्येव वक्तुं शक्येति विवेक्त-
व्यमित्यर्थः ॥ ९ ॥ ज्ञानतपसेति । किमुपैव तपोभिः स्वाद्यस्य ज्ञानमयन्तप

**यो ज्ञानतपसा पूता मद्भावमागताः ॥ १० ॥ ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् । मम वर्त्मानुवर्त्तन्ते मनुष्याः पार्थ सर्व्वशः ॥ ११ ॥ काङ्क्षन्तः कर्म्मणां सिद्धिं यजन्त इह देवताः । क्षिप्रं हि मानुषे लोके**

त्याह । वीतेति । एवंसति वीतास्त्यक्ता रागादयो येषान्ते मय्यहङ्कारसाक्षिणि सदाशिवे मनो येषान्ते तत्त्वतो मां ज्ञात्वा ज्ञानतपसा पूतास्सन्तो मद्भावम्मदीयम्परम्पदं यथोक्तम्भूमाख्यमागताः प्राप्ता भवन्तीत्यर्थः ॥ १० ॥ ननु त्वदन्यभावेन त्वद्भावेन वा कथं सदाशिवम्भजेदित्यहाङ्गिरोपासनयैवाह । ये यथेति । एवन्तर्हि स्थाणुम्वा पुरुषम्वापि देवम्वा यक्षमन्त्यजम् । यो यद्भावेन सञ्चिन्त्य भजेद्देवमनामयमित्यादिस्मृत्या ये यथा सदाशिवैकतादात्म्यात्परब्रह्मभावेन पृथग्भावेन दशावतारभावेन वा यथा मां सदाशिवम्प्रपद्यन्ते तांस्तथैव फलदानाय भजामीत्यर्थः । अथ नरनारायणयोश्शिवात्मजत्त्वेन तन्मार्गानुसरणत्वं जगतामपि युक्तमित्याह । ममेति । तद्यथोक्तं भागवते, धर्म्मस्य दक्षदुहितर्य्यजनिष्ट मूर्त्यां नारायणो नरऋषिः प्रवलः प्रशान्तः । नैष्कर्म्यलक्षणमुवाच चकार कर्म्म योद्यापि चास्तऋषिवर्य्यनिषेविताङ्घ्रिरित्यादि द्रष्टव्यम् ॥ ११ ॥ एवन्तर्हि तत्सम्प्रदायानुसारेण शिवशक्तिपूजनपूर्व्वकमेव सकलदेवपूजनमपि युक्तमित्याह । काङ्क्षन्त इति । एवंसत्यस्य लोकस्य कर्म्मभूमित्वेन क्षिप्रं यथा स्यात्तथेह कर्म्मजा सिद्धिर्भ-

---

इत्यादिश्रुतेरिति भावः । परम्पदमिति । तदेतत्स्कान्देप्युक्तम् । तद्यथा । पदं यत्परमं विष्णोस्तदेवाखिलदेहिनाम्पदम्परममद्वैतं सशिवस्याखविग्रह इत्यादि द्रष्टव्यम् ॥ १० ॥ नन्वमात्ये राजबुद्धिस्तु न दोषाय फलाय तदिति न्यायेन सर्व्वं च सदाशिवनिष्ठयैव किं न भजेत्किन्तु भजेदेवेत्याह । एवन्तर्हीति । तद्यथा, नाशिवं कश्चिदाधत्ते शिवमेवाखिलो जनः । तस्माच्छिवेन रूपेण सर्व्वमेतद्विचिन्तयेदित्यादि द्रष्टव्यम् ॥ ११ ॥ धर्म्मस्येति । तत्रैवं सति मूर्त्यां सगुणमूर्त्तौ धर्म्मस्य धर्म्ममूलस्य सदाशिवस्य पत्न्यां सतीरूपायां दक्षदुहितरि नारायणो विष्णुर्नरऋषिरर्जुनो वस्तुतो ऽजनिष्ट जात इत्यर्थः । तथा नैष्कर्म्यं भक्त-

सिद्धिर्भवति कर्म्मजा ॥ १२ ॥ चातुर्व्वर्ण्यं मया सृष्टं गुणकर्म्मविभागतः। तस्य कर्त्तारमपि मां विद्ध्यकर्त्तारमव्ययम् ॥ १३ ॥ न मां कर्म्माणि लिम्पन्ति न मे कर्म्मफले स्पृहा। इति मां योभिजानाति कर्म्मभिर्न्न स बद्ध्यते ॥ १४ ॥ एवं ज्ञात्वा कृतङ्कर्म्म पूर्व्वैरपि मुमु-

त्यन्यथा तु दक्षवद्विनश्येदेवेति भावः ॥ १२ ॥ ननु तव कर्तृत्वे ऽनीश्वरत्वापत्तिरकर्तृत्वन्तु पश्याम्येव नेत्याह। चातुर्व्वर्ण्यमिति। एवन्तर्हि तत्तद्गुणकर्म्मविभागसो यद्यपि चातुर्वर्ण्यं मयैव हिरण्यगर्भादिरूपेण शिवैकतादात्म्येन वा पूर्व्ववत्सृष्टन्तथापि, जानामि धर्म्मं न च मे प्रवृत्तिर्ज्जानाम्यधर्म्मं न च मे निवृत्तिः। केनापि देवेन हृदि स्थितेन यथा नियुक्तो ऽस्मि तथा करोमीत्यकर्त्तारमपि मांविद्धीति परमार्थः ॥ १३ ॥ एवन्त्वमप्येवमात्मानम्विजानीहीत्याह। नमामिति। एवं विश्वसर्गादीनि कर्म्माणि न मां लिम्पन्ति न वा समुद्रमापः प्रविशन्ति यद्वदिति स्मृतिन्यायेनाप्तकामत्वात्कार्म्मणां फलस्पृहापि ममास्तीति भावः। एवं मामिवात्मानं योभिजानाति सोपि कर्म्मभिर्न्न लिप्यतइति तथात्वेन त्वमप्यात्मानम्विजानीहीत्यर्थः। नह्यन्यज्ञानादन्यगतानर्थनिवृत्तिरित्ययमेवार्थो न्याय्य इत्यवधार्य्यम् ॥ १४ ॥ इह तु शास्त्रीयमर्य्यादायां पूर्व्वोक्तं सत्संप्रदायमपि दर्शयन्नुपसंहरति। एवमि-

---

द्राक्षधारणरूपं यत्समन्त्रकम्पाशुपतव्रतन्तच्चकार स्वप्रियेभ्यश्चोवाचेत्याशयः ॥ १२ ॥ ननु सृजत्येतज्जगत्सर्व्वं विष्णुस्तत्पश्यतीश्वर इत्यादिकूर्म्मस्मृत्या विष्णोः कर्तृत्वे का क्षतिरित्याशङ्कते। नन्विति। तथा च स्वीयभावेन भावेन कर्तृत्वं शिवैक्यतादात्म्येन तु साक्षित्वञ्चेत्युभयमपीश्वराधीनमिति जानामीत्यादिनावधार्य्यम् ॥ १३ ॥ आत्मानमिति। एवंसतीह, धारयिष्यति ते वेगं रुद्रस्त्वात्मा शरीरिणामित्याद्युक्तेरात्मशब्देन परं ब्रह्मैव गृह्यते तद्रूपेणैवात्मानमपि विजानीहीत्यर्थः। कथमन्यथा मामन्यस्त्वा शिवरूपम्विजानंस्त्वं मुक्तिमाप्स्यसीति स्फुटमन्यदित्याशयः ॥ १४ ॥ सत्संप्रदायमिति। एवं सति पारम्पर्य्येण चान्ये पाम्पाखण्डमतयो ऽपर इत्यादिस्मृत्या सम्प्रदायेष्वपि सत्सम्प्रदाय एव

क्षुभिः । कुरु कर्म्मैव तस्मात्त्वम्पूर्वैः पूर्व्वतरं
कृतम् ॥१५॥ किङ्कर्म किमकर्म्मेति कवयोप्यत्र
मोहिताः । तत्ते कर्म्म प्रवक्ष्यामि यज्ज्ञात्वा
मोक्ष्यसेऽशुभात् ॥ १६ ॥ कर्म्मणो ह्यपि बोद्ध-
व्यं बोद्धव्यञ्च विकर्म्मणः । अकर्म्मणश्च बोद्ध-
व्यङ्गहना कर्म्मणो गतिः ॥ १७ ॥ कर्म्मण्यक-

ति । तत्रैवंसति यतो नाहङ्कर्त्ता न मे कर्म्मफलस्पृहेति वस्तुतश्शिवज्ञानात्कर्म्म-भिर्न्न वध्येहमत एवन्त्वमप्यात्मानमकर्त्तारं ज्ञात्वा यद्ययातिप्रभृतिभिर्यदुभिः पूर्व्वै-रप्यतिक्रान्तैः कृतन्तत्कुरु न तु तूष्णीमासनं नापि कर्म्मणा सन्यासम्बेत्यर्थः ॥ १५ ॥ नन्वेतावतापि ऋष्यादिभिर्बहुतरङ्कृतमपि विपरीतमापन्नमिति कृत्वा क-र्म्मणस्सूक्ष्मगतित्वेन दुरुद्धरत्वं मन्यमानः पृच्छति । किङ्कर्म्मेति । एवंसति यद-त्र कर्म्मणि दुरुद्धरत्वन्तत्सर्व्वमत्र स्फुटम्वक्ष्यामि यज्ज्ञात्वा ऽशुभात्संसारबन्धना-न्मोक्ष्यसइत्यर्थः ॥ १६ ॥ ननु देहेन्द्रियादिव्यापारः कर्म्मेत्यहमेव लोकप्रसिद्धत्वा-ज्जानामीति किमत्र काठिन्यमित्यतो विभागेन तदववारयन्नाह । कर्म्मणो हीति । तथा चेह यतः कर्म्मणः शास्त्रविहितस्य तत्त्वम्बोद्धव्यमस्ति एवम्विकर्म्मण-स्तत्प्रतिषिद्धस्य तथाकर्म्मणस्तूष्णींभावस्य च तत्त्वम्बोद्धव्यमित्यत्र त्रिवि-धेष्वपि तत्त्वतो गहना दुर्ज्ञाना कर्म्माकर्म्मविकर्म्मणाङ्गतिरित्यर्थः ॥ १७ ॥ ननु कीदृशन्तर्हि कर्म्मादीनां तत्त्वमित्याह । कर्म्मणीति । तत्रैवंसति वेदविहिते कर्म्म-

---

वक्तुं शक्य इत्यवधेयम् । अकर्त्तारमिति । तत्रैवंसति देहेन्द्रियादिसङ्घातैर्जीवः कर्त्तेति श्रुतस्तस्याच्छिवैक्यतादात्म्यादकर्तृत्वं श्रुतिर्ज्ञगावित्यादिस्मृत्या परब्रह्मैक्यतादात्म्यापन्नाय यस्मिन्ज्ञाते न किञ्चित्कर्म्म क्रियतइत्यादिश्रुति-न्यायेन कर्म्माणि कुर्व्वित्याशयः ॥१५॥ सूक्ष्मगतित्वेनेति । इह यद्यप्युत्क्षेपणा-पक्षेपणाकुञ्चनप्रसारणगमनानि पञ्चैव कर्म्माणीति नियतन्तथापि तदवा-न्तरभेदेन फलाफलप्रदत्वेनानेकविधमिति दुरुद्धरत्वम्बोध्यम् ॥ १६ ॥ तत्त्व-म्बोद्धव्यमिति । तत्र तावत्तूष्णींभावस्यापि [तत्त्वं कुर्व्वन्नेवेह कर्म्माणीति श्रुत्युल्लङ्घनप्रयुक्तप्रायश्चित्तेनाप्यस्पृश्यः स्यादिति बोध्यम् ॥ १७ ॥ फलाभिस-

र्म यः पश्येदकर्म्मणि च कर्म्म यः । स बु-
द्धिमान्मनुष्येषु स युक्तः कृत्स्नकर्मकृ-
त् ॥ १८ ॥ यस्य सर्वे समारम्भाः कामसङ्क-
ल्पवर्ज्जिताः । ज्ञानाग्निदग्धकर्म्माणन्त-
माहुः पण्डितम्बुधाः ॥ १९ ॥ त्यक्त्वा कर्म-
फलासङ्गं नित्यतृप्तो निराश्रयः । कर्म्मण्यभि-

णि फलाभिसन्धिराहितत्वेनाकर्म्म यः पश्येदित्यर्थः । एवम्वेदविरुद्धानिष्टसाधनताके कर्म्मणि तस्य बन्धहेतुत्वात्कर्म्म यः पश्येद्यद्वा कुर्व्वन्नेवेहेति श्रुत्या प्राणिनाङ्कर्म-कर्तृत्वस्यावश्यकत्वे स्थिते तन्न कृतव्येन्निषेधोल्लङ्घनात्प्रत्यवैतीति तत्राकरणस्यापि बन्धहेतुत्वात्तदपि कर्म्मैवेति यः पश्यति स एव मनुष्येषु बुद्धिमांश्छिवैकतादात्म्ये-न युक्तो यस्मिन्कृते न किञ्चित्कर्म्म क्रियतइत्यादिश्रुतेः कृत्स्नकर्मकृच्चेत्यवधेयम् ॥ १८ ॥ ननु प्राक्तनानाम्प्रारब्धकर्म्मणां ज्ञानाग्निना नाशस्तथागामिनान्त्वसङ्क-ल्पादेवानुत्पत्तिः परन्तु ज्ञानोत्पत्त्यनन्तरमपि क्रियमाणानाङ्कर्म्मणां निवृत्तिरि-ष्टैवेत्याह । यस्येति । तथा च यस्य तत्त्वविदस्सर्व्वे समारम्भाः कर्म्माणि कामसङ्कल्प-वर्ज्जिताः क्रियन्तइति तमेवं ज्ञानाग्निदग्धकर्म्माणम्बुधाश्शुष्कशास्त्रवादिनः पण्डि-तं प्राहुरित्यर्थः ॥ १९ ॥ अथ छायाशरीरे प्रतिबिम्बगात्र इति स्मृतिन्यायेनान्त-स्त्यागी वाहिस्सङ्गीतिन्यायेन च शास्त्रसज्जनसम्पर्कैरित्यादिस्मृत्युक्तसप्तमभूमिकाश्रितस्य सौम्यदर्शिनो न किञ्चिद्बाधकमस्तीत्याह । त्यक्त्वेति । तथा च भूमिकात्रितयन्त्यक्त्वा भूमिकात्रितयम्पुनः सप्तमीम्भूमिमासाद्य यस्तिष्ठेत्स हि पण्डित इत्यादिस्मृत्या समा-

---

प्नोति । नन्वस्यापि कैवल्यफलकत्वात्कथम्फलाभिसन्धिरहितत्वमिति चेत्, शृणु । यस्मिन्कृते न किञ्चित्कर्म्म क्रियतइति श्रुतिन्यायेन । यस्मिन्कृते तदुत्तरं न हि कि-ञ्चित्कर्त्तव्यमस्ति स कामनया कृते तु कर्म्मणि पुनः कर्म्म कर्त्तव्यमेवास्तीत्य ता-वतैव फलाभिसन्धिरहितत्वमित्यवधार्य्यम् ॥ १८ ॥ पण्डितमिति । तद्यथा, परमात्मनि शिवे रक्तो यो रक्तो ऽपरमात्मनि । मुग्धश्चोविषयनिर्मुक्तास्तमाहुः पण्डितम्बुधा इत्यादि द्रष्टव्यम् ॥ १९ ॥ सौम्यदर्शिन इति । तद्यथा, "बहुधा श्रुतयः प्रवदन्ति यतो विपदादिरियं स्मृतलोयसमं, यदि चैकनिरन्तरसर्व्व-

प्रवृत्तोपि नैव किञ्चित्करोति सः ॥ २० ॥
निराशीर्य्यतचित्तात्मा त्यक्तसर्व्वपरिग्रहः ।
शारीरङ्केवलङ्कर्म कुर्वन्नाप्नोति किल्बिषम् २१॥
यदृच्छालाभसन्तुष्टो द्वन्द्वातीतो विमत्सरः ।

धिनिर्द्धूतमलस्य चेतस इत्यादिस्मृत्या च परमानन्दसन्दोहलाभेन नित्यतृप्तो देहेन्द्रियादिद्वैतादर्शनेन निराश्रयस्स चैवम्भूतो जीवन्मुक्तो योगी लौकिके वैदिके वा कर्म्मणि साङ्गोपाङ्गानुष्ठानेन परेच्छया प्रवृत्तोपि स्वेच्छया नैव किञ्चित्करोतीति परमार्थः ॥ २० ॥ ननु महात्यन्तविक्षेपहेतोर्ज्योतिष्टोमादेर्य्यदि तस्य न बाधकत्वन्तर्हि शरीरस्थितिहेतोः कर्म्मणः किम्बाधकत्वं नेत्याह । निराशीरिति । तत्रैवंसति निराशीर्यततृष्णस्स च पुनर्य्यतस्संय्यमितश्चित्तात्मा येन सः एवन्त्यक्तानि सर्व्वपरिग्रहोपकरणानि येन सः एवन्तर्हि यद्येतादृशो योगी प्रारब्धकर्म्मवशात्कदाचिच्छरीरस्थितिमात्रप्रयोजनं केवलङ्कर्तृत्वाभिमानशून्यङ्कर्म्म कुर्व्वन्नपि परमार्थतो नैव किञ्चित्करोतीति नैव तस्य किञ्चित्किल्बिषमित्यवधार्य्यम् ॥ २१ ॥ ननु स वीतरागो नित्यतृप्तो योगी जगत्याङ्कथम्विचरेदित्याह । यदृच्छयेति । तथासति यदृच्छया प्रारब्धेश्वरेच्छया यथालाभेन सन्तुष्टः पुनश्च द्वन्द्वानि शीतोष्णानि तेभ्यो ऽतीतो यतो नित्यानन्दे रसात्मनि शिवे तेषामभानात्तथा जगद्भोगस्य क्षुद्रत्वेन विमत्सरश्च स भवति अत एव च सिद्धासिद्धौ समावित्यतः कृत्वापि कर्म्मभिर्न्न निबध्यत इत्यर्थः । तदुक्तं स्मृतिसारोक्तम्मत्कृतनित्याह्निके । तद्यथा, न गृहैरनुबध्येत निर्म्म-

---

शिवमित्यादिरीत्या सौम्यदर्शिनः प्रत्यगात्मदर्शिन इत्यर्थः । परेच्छयेति । जानामि धर्म्मं न च मे प्रवृत्तिरिति स्मृतिन्यायेन परस्य स्वेष्टदेवस्य सर्व्वसाक्षिणस्सदाशिवस्येच्छयेत्यर्थः ॥ २० ॥ निराशीरिति । तथाशाप्रत्याशयोर्न्निर्गतो ऽस एव गततृष्णोपीत्यर्थः । नैव किञ्चिदिति । तत्रैवंसति नित्यतृप्तस्य योगिनस्तत्कामेनापि कर्म्मणा नैव किञ्चित्किल्बिषमित्यर्थः । २१ ॥ अभानादिति । तद्यथा, सन्न्यासनन्थो ऽथ परिव्रजन्वा मुक्तः परिक्षीणवितर्कजालः । संसारबीजक्षयमीक्षमाणः स्वाचित्यतृप्तो ऽमृतभागभोगीति स्मृतिन्यायेन तेषां द्वन्द्वादीनामभानादिति भावः । वक्ष्य इति । तद्यथा, भावहीनास्तु ये लोके पुत्रदारादिवर्जिताः । नपुंसकाश्च हृच्छाया नैव ते मुक्तिभागिन इत्यादिना नित्याह्निके दिग्विजये च

**समस्सिद्धावसिद्धौ च कृत्वापि न निबध्यते॥२२॥
गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः । य-
ज्ञायाचरतः कर्म समग्रम्प्रविलीयते ॥ २३ ॥
ब्रह्मार्पणम्ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् । ब्र-
ह्मैव तेन गन्तव्यम्ब्रह्मकर्मसमाधिना ॥ २४ ॥
दैवमेवापरे यज्ञं योगिनः पर्युपासते । ब्रह्मा-**

मो निरहङ्गतः । पुत्रदाराप्तबन्धूनां सङ्गमः पान्थ सङ्गम इत्यादि बहुशो द्रष्टव्यम् ॥ २२ ॥ ननु केन तत्त्वविवेकेन ज्ञानवान्कर्म्मभिर्न्न निबध्यतइत्याह । गतसङ्गस्येति । एवंसति मूर्त्तिरवेश्वरः कश्चिन्मूर्त्तौ तिष्ठति कश्चन । अमूर्त्तं मूर्त्तिमत्त्वेकं ज्ञात्वा पूज्यो विवेकिभिरित्यादिस्मृत्या त्रिविधेष्वाधिकारिषु तत्त्वविवेकिनो गतसङ्गस्य जीवन्मुक्तस्य ज्ञानावस्थितचेतसस्तृतीयस्य यज्ञाम्द्भवति पर्ज्जन्य इत्यत्रोक्ताय यज्ञायाचरतः कर्म्म समग्रम्परे ब्रह्माणि परमशिवे तुरीये प्रविलीयते समर्प्यतइत्यर्थः ॥ ॥ २३ ॥ नन्वेवमपि यज्ञमेव विवेकिभिः कर्त्तव्यन्तत्कथमिति स्पष्टङ्कुतो नोच्यतइत्याह । ब्रह्मार्पणमिति । तत्रैवंसति मातर्म्मेदिनि तात मारुतसख इति स्मृतिन्यायेनान्त्यः प्रणामाञ्जलिमुद्दिश्य तद्धे मनः शंभुपदारविन्दयोरित्यादिस्मृतिन्यायेन कुर्व्वाणो यस्मिन्कृते न किञ्चित्कर्म्म क्रियतइत्यादिश्रुत्यर्थानुसन्धानेन क्रियमाणेन कर्म्मणा ब्रह्मैवाप्यतइति ब्रह्मकर्म्मसमाधिरपीत्थमनेन विवेक्तव्य इति भावः ॥ २४ ॥ ननु कतिविधा यज्ञा यैस्सदाशिवस्सर्व्वत्राग्रभोक्तृत्वेन पूज्यतइत्याह । दैवमिति । एवन्तर्हि त्यक्ताश्रमो ऽविधेयात्मा त्रिदण्डमुपजीवति । सुरानात्मानमात्मस्थमीश्वरं हन्ति धर्म्महेत्यादिस्मृत्या यज्ञस्यावश्यकत्वे स्थिते तत्र तावद्रुचीनाम्वैचित्र्यादृजुकुटिलनानापथजुषामिति स्मृतिन्यायेन केचिद्योगिनो

---

बहुशो द्रष्टव्यमित्यर्थः ॥ २२ ॥ तृतीयस्येति । तत्रामूर्त्तं मूर्त्तिमत्त्वेकमव्यक्ततो ज्ञानिनश्चेत्यर्थः ॥ २३ ॥ विवेकिभिरिति । एवंसतोह विवेकत्वञ्च ब्रह्मतत्परादायोन्यत्रात्मनो वेदत्वन्तत्परादायोन्यत्रात्मनो वेदेत्यादिश्रुतिन्यायेन सर्वात्मदर्शिभिर्विवेकिभिरपि यथोचितङ्कर्म्म वक्ष्यमाणरीत्या कर्त्तव्यमेवेति भावः ॥२४॥ अग्रभोक्तृत्वेनेति । तद्यथा, दध्यक्तं शिवायोक्तं सिन्दूरं शक्तितुष्टये । अर्द्धं नारी

ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥ २५ ॥
श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्व-
ति । शब्दादीन्विषयानन्ये इन्द्रियाग्निषु जु-
ह्वति ॥ २६ ॥ सर्व्वाणीन्द्रियकर्म्माणि प्रा-
णकर्म्माणि चापरे । आत्मसंय्यमयोगाग्नौ
जुह्वति ज्ञानदीपिते ॥ २७ ॥ द्रव्ययज्ञा-
स्तपोयज्ञा योगयज्ञास्तथापरे । स्वाध्याय-

दैवं यज्ञम्पर्युपासते केचित्तु ब्रह्माग्नौ ज्ञानाग्नौ शिवे ब्रह्मार्पणम्ब्रह्महविरिति यथोक्त-रीत्या। यज्ञं यज्ञाधिष्ठातारं शिवं यज्ञेनैवोपजुह्वतीत्यर्थः ॥२५॥ अथापरानपि योगिन आह । श्रोत्रादीनीति । एवं सत्यन्ये योगिनश्श्रोत्रादीनीन्द्रियाणि तपश्चरणादिना संय्यमाग्निषु जुह्वतीत्यर्थः। एवमन्ये तु मुखे नामास्ति रूपम्वै चक्षुषीदं द्वयम्मत-मिति स्मृतिन्यायेन शब्दादीन्विषयानिन्द्रियाग्निषु जुह्वतीत्यर्थः॥२६॥ एवमपरानपि योगिन आह । सर्व्वाणीति । एवन्तर्ह्यपरे योगिन आत्मना बुद्धिमनोभ्यां सहितानि सर्व्वाणीन्द्रियकर्म्माणि प्राणकर्म्माणि च सप्तदशतत्त्वानि यमाद्यष्टाङ्गसंय्यमेन ज्ञानदीपिते ऽग्नौ जुह्वतीत्यर्थः॥ २७ ॥ एवन्त्रिभिश्श्लोकैः पञ्चयज्ञानुक्त्वा ऽधु-नैकेन श्लोकेन षड्यज्ञानप्याह । द्रव्ययज्ञा इति । तत्रैवंसति द्रव्यत्याग ए-

---

श्वरस्त्वेयम्पूजोक्ता कलशाग्रत इत्याद्यवधार्य्यम्॥२५॥ न्यायेनेति । तत्र, यथैकेन मृ-त्पिण्डेन सर्व्वं मृन्मयं विज्ञातम्भवति विकारो नामधेयं मृत्तिकेत्येव सत्यमित्यादि-श्रुतिन्यायेनापीत्थमेव विवेक्तव्यमित्यर्थः॥२६॥ संयमेनेति। तत्र तावत्पञ्च ज्ञानेन्द्रि-याणि पञ्च कर्मेन्द्रियाणि पञ्च प्राणा मनो बुद्धिश्च सप्तदशतत्त्वानि यमाद्यष्टाङ्गसंय-मेनेत्यर्थः । तत्र तावद्यमो नाम संसाराद्धि मनसो निवृत्तिः नियमो नाम प्रयोगानु-ष्ठानं आसनं नाम स्वस्तिकादि प्राणायामस्तु पूरककुम्भकरेचकभेदेन त्रिवि-धः प्रत्याहारस्तु तत्तद्विषयेभ्यो मनसो निग्रहः धारणा तु परात्मनि तुरीये शिवे मनसस्स्थापनं ध्यानं नाम परे ब्रह्मणि शिवे सर्व्वात्मनावस्थानं समा-धिर्नाम सम्प्रज्ञातो ऽसम्प्रज्ञातश्चेति द्विविध इत्यधिकमन्यत्र विस्तरः ॥ २७ ॥ पञ्चयज्ञानिति । तत्र श्रोत्रादीनि पञ्च ज्ञानेन्द्रियाणि शब्दादिपञ्चविषयेषु धर्म-

ज्ञानयज्ञाश्च यतयस्संशितव्रताः ॥ २८ ॥
अपाने जुह्वति प्राणम्प्राणे ऽपानन्तथाप-
रे। प्राणापानगती रुद्ध्वा प्राणायामपराय-
णाः ॥ २९ ॥ अपरे नियताहाराः प्राणा-
न्प्राणेषु जुह्वति। सर्वेऽप्येते यज्ञविदो यज्ञ-

व यथाशास्त्रं येषान्ते द्रव्ययज्ञाः एवं कृच्छ्रचान्द्रायणादितप एव यज्ञो येषां ते तपोयज्ञाः तथा योगश्चित्तवृत्तिनिरोध एव यज्ञो येषां ते योगयज्ञाः इह स्वाध्यायो मोक्षशास्त्राणामध्यापनम्। एवम्वेदार्थनिश्चयपरा ज्ञानयज्ञा इत्येवं षड्विधयज्ञेषु यतयो यत्नशीलास्संशितव्रतास्सम्यक्शितानि तीक्ष्णीकृतान्यतिदृढानि व्रतानि येषान्ते तथैवेत्यर्थः ॥ २८ ॥ एवम्प्राणायामाख्यं यज्ञान्तरमप्याह। अपानइति। तत्र तावत्केचिदपाने प्राणम्प्राणे चापानम्भस्त्रिकया मुद्रया जुव्हतीत्यर्थः।एवन्तत्र केचिद् द्वेगती रुध्वासनोत्थानार्थं जुव्हतीत्यर्थ इत्याधिकम्। कनीयस्या म्भवेत्स्वेदः कम्पो भवति मध्यमे। उत्तिष्ठत्युत्तमे प्राणो रोधे सिद्धासनं मुहुरित्यादिना मत्कृते योगसारामृते द्रष्टव्यम् ॥ २९ ॥ तथा तत्रैव विशेषानपरानप्याह। अपरइति। एवमपरे योगिनो युक्ताहारविहारस्येत्यादिरीत्या नियताहारा-

---

श्चास्त्र च संयमाग्निं जुह्वतीत्यर्थः। तप एवेति। तत्र तावत्तपसा कर्शितात्मा तु परमाप्नोति पूरुषमित्यादिस्मृत्यनुकूलया ऽतप्ततनूर्न तदामो ऽश्नुत इत्यादिश्रुत्या कृच्छ्रचान्द्रायणादितप एव यज्ञो येषामित्यर्थः। अन्यच्च तपसा च तनुर्यस्य स तप्ततनुरुच्यते। वह्निना च तनुर्यस्य स दग्धतनुरुच्यत इत्यधिकं मुद्राजटारचनमौढ्यवतां व्यर्थैवेत्यन्यत्र द्रष्टव्यम् ॥ २८ ॥ केचिदिति। इह तु षट्कर्मोत्तरश्चैव प्राणायामोत्तरं क्वचिद्राजयोगोत्तरं वापि सिद्धो भवति योगिराडित्यादिस्मृत्या यथाधिकारमापन्नानां हेतवे मतभेदेनोपपादनीयम् ॥ २९ ॥ द्वात्रिंशतेति। तत्र तावद् द्वाधिका विंशद्वाविंशत्तेन तत्संख्याकप्रणवादिमन्त्रोच्चारणेन तावत्कुम्भकम्। एवञ्चतुर्भिरधिका षष्टिस्तया चतुष्षष्ट्या कुम्भकम्। एवं षोडशसङ्ख्ययोच्चारणेन तु रेचकमित्यादि विवेकः। ननु किमर्थमेतावन्तो यज्ञा यद्यर्जुनाय श्रीकृष्णः प्राप्त एवेति चेन्नैवम्। मायामयमिदं देवि वपुर्मे नहि तात्त्विकम्। सृष्टिस्थित्युपसंहारं क्रियाजालोपबृंहितमतोम्यदात्मनो रूपं द्वैताद्वैतविव-

क्षयितकल्मषाः ॥ ३० ॥ यज्ञशिष्टामृतभुजो
यान्ति ब्रह्म सनातनम्। नायं लोकोऽस्त्ययज्ञ-
स्य कुतोऽन्यः कुरुसत्तम ॥ ३१ ॥ एवम्बहुविधा
यज्ञा वितता ब्रह्मणो मुखे ॥ कर्म्मजान्वि-
द्धि तान्सर्व्वानेवं ज्ञात्वा विमोक्ष्यसे ॥ ३२ ॥

श्रेयान्द्रव्यमयाद्यज्ञाद् ज्ञानयज्ञः परन्तप ।

स्ते तावद् द्वात्रिंशताचतुष्षष्ट्या क्रमात्षोडशसङ्ख्ययेति न्यायेन नियतप्राणायामपरायणा अपि प्राणान्प्राणेषु जुह्वतीत्यर्थः । एवंसति सर्व्वेप्येते यज्ञविदस्तत्कर्म्मकर्तृशालिनश्च यज्ञेन क्षयितङ्कल्मषं येषान्ते तथेत्यर्थः ॥ ३० ॥ तदेतदनेकविधानां योगिनाम्फलमप्याह । यज्ञशिष्टेति । तथा च यथोक्तान्यज्ञान्कृत्वावशिष्टे ऽमृतप्रायमन्नम्भुक्त्वा सत्वशुद्ध्या ज्ञानप्राप्तिद्वारेण ब्रह्म सनातनं सदाशिवम्प्रति यान्तीत्यर्थः । यस्तूक्तानां यज्ञानामन्यतमो यज्ञो न कृतस्तस्यायमल्पसुखप्रदोपि लोको नास्ति कुतोऽन्यो विशेषसाधनसाध्यः परलोकहेतुरुत्तमलोकहेतुरुत्तमलोकप्राप्तिकैवल्यन्तु तस्य दूरापास्तमिति भावः ॥ ३१ ॥ अथ किन्त्वया स्वोत्प्रेक्षामात्रेणेदमुच्यते, नहि वेद एवात्र प्रमाणमित्याह । एवमिति । एवं सतीह यथोक्ता बहुविधा यज्ञा ब्रह्मणो वेदस्य मुखे वितता विस्तृता इत्यर्थः । तदेतान्यज्ञान्कायिकवाचिकमानसकर्म्मोद्भवान्विद्धि जानीहीत्येवं ज्ञात्वा कृत्वा च विमोक्षसइत्यर्थः ॥ ३२ ॥ नन्विह सर्व्वेषान्तुल्यत्वनिर्द्देशात्कर्म्मज्ञानयोस्साम्याप-

---

र्व्जतमित्यादिलक्ष्मीम्प्रति विष्णुवाक्यादात्मनश्शिवज्ञानार्थं यज्ञानामावश्यकत्वादिति सिद्धान्तः ॥ ३० ॥ भुक्त्वेति । तदेतत्कूर्म्मपुराणे ब्राह्मणं प्रति सदाशिवेनोक्तम् । तद्यथा, नैवेद्यम्पुरतो न्यस्तं दर्शने स्वीकृतं मया । रसान् भक्तस्य जिह्वाग्रादश्नामि कमलोद्भव इत्यादि बहुशोऽन्यत्र विस्तरः ॥ ३१ ॥ कायिकेति । तच्च गङ्गायमुनयोर्मध्ये तरीमाद्य च्यवनतः । अहं ब्रह्म वधामीति कः पापिष्ठो समाधिक इति पृच्छन्तं वाल्मीकम्प्रति विष्णुनोक्तम् । तद्यथा । वाग्भिर्द्दत्तं मनोदत्तं दत्तं पापिकुशोदकं, चिद्दत्तं यो न दद्याद्वै स पापिष्ठस्ततोऽधिक इत्याद्यवधार्य्यम् ॥ ३२ ॥ ज्ञान एवेति । अत एव ज्ञानस्यैवोत्कृष्टत्वमादाय ज्ञानमेव

**सर्व्वङ्कर्म्माखिलम्पार्थ ज्ञाने परिसमाप्यते ॥ ३३ ॥ तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया । उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥ ३४ ॥ यज्ज्ञात्वा न पुनर्म्मोहमेवं यास्यसि पाण्डव । येन भूतान्यशेषेण द्रक्ष्य-**

त्ति,न्नैत्याह । श्रेयानिति । तत्रैवं सति द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञस्साक्षात्कैवल्यफलकत्वाच्छ्रेयान्प्रशस्ततर इत्यर्थः । यस्माच्च कारणात्सर्व्वङ्कर्म्मजातं ज्ञानएव परिसमाप्यते तमेतं वेदानुवचनेनेत्यादि श्रुतेरिति भावः ॥ ३३ ॥ नन्वेताढंश ज्ञानङ्कस्माल्लभ्यमित्याह । तद्विद्धीति । तथा च तदेतज्ज्ञानम्प्रणिपातो दीर्घनमस्कारस्तेन तथाबद्धोहङ्केनोपायेन मुक्तोहं स्यामित्येवमादिप्रश्नेन एवं सेवया भक्तिश्रद्धातिशयरूपेण सेवयेत्यर्थः । तथा तद्विज्ञानार्थं सद्गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियम्ब्रह्मनिष्ठमित्यादिश्रुतेः । एवं सति पदवाक्यप्रमाणगुरवोपि तत्त्वदर्शिनस्तस्मै विद्वानुपपन्नायात्मत्वम्प्राहेत्यादिश्रुतेर्वृत्तिव्याप्यत्वेन ज्ञानमुपदेक्ष्यन्तीत्यर्थः ॥ ३४ ॥ नन्वेवमतिप्रयाससाध्येन तत्त्वज्ञानेन किं स्यादित्याह । यज्ज्ञात्वेति । तदेवं यत्पूर्व्वोक्तोपदेशं ज्ञात्वा बन्धुवधादिनिमित्तजगद्ब-

---

सर्व्वतो गरिष्ठं मे देहीति स्तुवन्तम्प्रह्लादम्प्रति स्तम्भाविःसृतेन नृसिंहेनोक्तम् । ज्ञानं महेश्वरादिच्छेन्मोक्षमिच्छेज्जनार्द्दनादारोग्यम्भास्करादिच्छेद्धनमित्यादि प्रह्लादघट्टे काश्यां प्रह्लादेश्वरनाथपूजया च लोकमोक्षापेक्षया शिवज्ञानङ्गरिष्ठं लब्धमित्यवधेयम् ॥ ३३ ॥ बद्धोहमिति । तद्यथा । अहं बद्धो विमुक्तस्स्यामिति यस्यास्ति निश्चयः नात्यन्तमज्ञो नोतज्ज्ञस्सोस्मिन् शास्त्रेधिकारवानित्यादिस्मृत्याप्यवधार्य्यम् । सेवयेति । तदुक्तं स्मृतिसारे । तद्यथा । प्रशान्तचित्ताय जितेन्द्रियाय प्रक्षीणदोषाय यथोक्तकारिणे । गुणान्वितायानुगताय सर्व्वदा प्रदेयमेतत्सततं मुमुक्षवइत्यादि बोध्यम् । वृत्तिव्याप्यत्वेनेति । तदेतदप्युक्तम् । ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता । फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्न्निराकृतमित्यादिस्मृत्या विवेक्तव्यम् ॥ ३४ ॥ परमशिवेनेति । तच्च तावत्सर्व्वस्वरूपं वरदानं कृष्णाय परमशिवेन दत्तन्तदेतच्च द्रोणपर्व्वणि भारते दर्शितम् । तद्य-

स्यात्मन्यथो मयि ॥ ३५ ॥ अपि चेदसि
पापेभ्यस्सर्व्वेभ्यः पापकृत्तमः । सर्व्वं ज्ञान-
प्लवेनैव वृजिनं सन्तरिष्यसि ॥ ३६ ॥ यथै-
धांसि समिद्धोग्निर्भस्मसात्कुरुते ऽर्ज्जुन ।
ज्ञानाग्निस्सर्व्वकर्माणि भस्मसात्कुरुते त-
था ॥ ३७ ॥ नहि ज्ञानेन सदृशम्पवित्रमिह
विद्यते । तत्स्वयं योगसंसिद्धः कालेनात्मनि

न्धनिमित्तञ्चैवं मोहं पुनर्नैव यास्यसीत्यर्थः । हे पाण्डव येन ज्ञानात्मना परमशिवेन ब्रह्मादिस्तम्बपर्य्यन्तान्यशेषेणात्मनि स्वस्मिन्मयि च द्रक्ष्यसीत्यर्थः ॥ ३९ ॥ नन्वस्त्वेवम्परन्तु सर्व्वथा बन्धुवधकृतपापाद्बिभेम्यहमित्याह । अपीति । एवंसति सर्व्वेभ्यः पापकारिभ्योप्यतिशयेन पापकारीति पापकृत्तमोपि चेत्तदासर्व्वम्वृजिनम्पापं ज्ञानप्लवेनैव त्वन्तरिष्यसीत्यर्थः ॥ ३६ ॥ नन्वेवमपि समुद्रवत्तरणे कर्म्मणां नाशो न स्यादित्यतो ऽपरं दृष्टान्तमाह । यथैधांसीति । तत्रैवंसति यथैधांसि काष्ठानि समिद्धः प्रज्वलितोग्निर्भस्मसात्कुरुते तथा हे अर्ज्जुन ज्ञानाग्निरपि भूतभव्यवर्त्तमानरूपाणि सर्व्वाणि कर्माण्यपि भस्मसात्कुरुतइत्यर्थः ॥ ३७ ॥ ननु ततः किमित्याह । नहीति । तत्र यस्मादेवन्तस्माज्ज्ञानेन सदृशम्पवित्रं शुद्धि-

---

या । मत्प्रसादान्मनुष्येषु देवगन्धर्व्वयोनिषु । अप्रमेयबलात्मा त्वं नारायण भविष्यसीत्यादिना बहुशस्तत्रैव विस्तरः ॥ ३५ ॥ बिभेमीति । तदेतद्वृत्तन्तु, किं हे सर्व्वस्य भो विषादुस्त्रीभिस्त्यज्यते पूज्योच कः कुटुम्बं स्तु विनष्टन्तद् गृहं वदेति यद्वधास्त्रमर्य्यादया पृच्छन्तं राजानम्प्रति ग्रामाद्बहिर्निर्गत्य क चिद् वृक्षालये चिन्तयन्तं विपश्चितम्प्रति ब्रह्मराक्षसेनोपदिष्टम् । तद्यथा । सर्वस्य द्वे सुमतिकुमती सम्पदापत्तिहेतू वृद्धो यूथा सह परिचर्याज्यज्यते कामिनीभिः । एको गोत्रे स भवति पुमान्यः कुटुम्बं बिभर्त्ति स्त्रीपुंवच्च प्रभवति यतस्तद्धि गेहं विनष्टमित्याद्युक्त्या बन्धुनाशाभावाद्धमेक: प्रधानो गोत्रे स्यामित्यतो बिभेमीत्याशयः ॥ ३६ ॥ ३७ ॥ योगेनेति । योगात्सिद्धं इति क्षिप्रमपि सम्पापपञ्जरमित्यादिस्मृत्यन्तरादपीति भावः । कालेनेति । कस्य चिज्जायते शीघ्रश्चिरकालेन कस्य चि

विन्दति ॥ ३८ ॥ श्रद्धावांल्लभते ज्ञानन्तत्परस्संयतेन्द्रियः । ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥ ३९ ॥ अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति । नायं लोकोस्ति न परो न सुखं संशयात्मनः ॥ ४० ॥ योगसंन्यस्तकर्माणं ज्ञानसंछिन्नसंशयम् । आ-

कारकमिह वेदे लोके च नहि विद्यतइत्यर्थः । तदेतद्ज्ञानंयोगेन यमाद्यष्टाङ्गयोगेन संसिद्धशुद्धः चित्तस्सन्कालेन यथा कालकृतप्रयत्नेन विन्दतीत्यर्थः ॥ ३८ ॥ ननु कीदृशस्तस्य शिवज्ञानस्योपलब्धौ मुख्यो यत्न इत्याह । श्रद्धावानिति । तत्र तावच्छ्रद्धावांस्तत्रापि तत्परस्तत्रापि संय्यतेन्द्रियस्सन्ज्ञानं लभतइत्यर्थः । एवं स विशेषणत्रययुक्तोवश्यं ज्ञानं लभते लब्ध्वा च परां शान्तिमचिरेणाधिगच्छति तस्य तावदेव चिरम्भवति यावन्न विमोक्ष्यतइत्यादिश्रुतेरिति भावः ॥ ३९ ॥ इहार्थे संशयङ्कृत्वा तु विनश्यतीत्याह । अज्ञश्चेति । तत्र तावदनभ्यस्तयोगत्वेनात्मज्ञानशून्यो ऽज्ञः । तथा सद्गुरुवेदवाक्यापमानेन नास्तिकबुद्ध्याधिरश्रद्धा, एवमिदमेव तथ्यमन्यद्वेति सर्व्वत्र सन्देहाक्रान्तचित्तस्संशयी त्वज्ञ इत्यादित्रिविधदोषयुक्तस्तत्रापि संशयात्मा विशेषेण नश्यतीत्यर्थः । तस्य च त्रिविधदोषयुक्तस्य नायं लोको न परो नैव चात्मसुखमस्तीत्यवधार्य्यम् ॥ ४० ॥ एवमेतादृशस्य सर्व्वानर्थमूलस्य संशयस्य निराकर्त्तुमुपायमप्याह । योगेति । तत्रैवंसति योगेन योगाभ्यासादिना संन्यस्तम्फलांशत्वेन कर्म्म

---

दिति स्मृतेरित्यवधेयम् ॥ ३८ ॥ शिवज्ञानस्येति । तत्र शिवज्ञानसमं ज्ञानं यथा नास्ति श्रुतौ स्मृतौ । तथा वैदिकतुल्यन्तु नास्तितन्त्रावलंबिष्वित्यादिस्कान्दे स्मृत्यन्तरादपि बोध्यम् ॥ ३९ ॥ सद्गुर्विति । एवंसति ज्ञानहीनो गुरुस्त्याज्यो मिथ्यावादी विडंबकः । स्वविश्रान्तिं न जानाति परेषां स करोति किमित्यादिस्मृत्या सद्गुरुमेवाश्रयेन्नतु सुद्राजटेत्यादावुक्तम्पाखण्डिनमाश्रयेदित्यवधार्य्यम् । त्रिविधेति । एवमिह संशयविपर्य्ययासम्भवाख्यमप्यत्रैव बोद्धव्यम् ॥ ४० ॥ न निबध्नन्तीति । एवंसति त्यज धर्म्ममधर्म्मञ्च तथासत्यानृतेऽपि च । उभे सत्यानृते त्यक्त्वा ये न त्यजसि तं त्यजेति स्मृतिन्यायेन शिवमद्वैतन्तुरीयं मन्यन्तइत्यादिश्रु-

त्मवन्तं न कर्माणि निबध्नन्ति धन-
ञ्जय॥ ४१ ॥ तस्मादज्ञानसंभूतं हृत्स्थं ज्ञाना-
सिनात्मनः । छित्वैनं संशयं योगमाति-
ष्ठोत्तिष्ठ भारत ॥ ४२ ॥ इति श्रीभगवद्गीता-
सूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृ-
ष्णार्ज्जुनसंवादे ब्रह्मार्पणयोगो नाम
चतुर्थोध्यायः ॥ * ॥ अर्ज्जुन उवाच ॥ संन्या-
सङ्कर्मणांकृष्ण पुनर्य्योगं च शंससि । य-

यस्य तन्तथा ज्ञानेन संच्छिन्नसंशयो यस्य तमात्मवन्तमात्मनः परमशिवज्ञानिनङ्क-
र्म्माणि न निबध्नन्तीत्यर्थः ॥ ४१ ॥ अथ प्रकृतम्वक्तुमुपसंहरन्नाह । तस्मादिति ।
एवन्तर्ह्यज्ञानसम्भूतमात्मनो जीवस्य हृत्स्थ संशयं ज्ञानासिना छित्वा योगमातिष्ठ
युद्धाय चोत्तिष्ठेति परमार्थः ॥ ४२ ॥ इति श्रीमत्पद वाक्यप्रमाणयोगिवर्य्यविप्र-
राजेन्द्रविरचिते तत्वैकदर्शनभाष्ये ब्रह्मनिरूपणं नाम चतुर्थोध्यायः ॥ * ॥
कर्म कृत्वाथ संन्यासः फलानां नैव कर्मणः । नच दण्डादिना मुक्तिः पञ्चमे तु
निरूप्यते ननु न जानीमः किङ्कर्म्मणामुपदेशङ्करोष्यथ तत्त्यागेन ज्ञानो-
पदेशम्वा करोषीति सन्दिहान आह । संन्यासमिति । तत्रैवं सति न क-

तिवेद्यस्य परमशिवस्य ज्ञानिनं साक्षात्कुर्वन्तङ्कर्म्माणि लोकव्यवहारङ्कुर्वतः
परब्रह्मण इव न निबध्नन्तीत्याशयः ॥ ४१ ॥ संशयमिति । तस्मात्फलांशत्वेन
कर्म्म त्याज्यमुत सर्वभावेनेति संशयम्पूर्व्वोक्तोपदेशेन त्यजतो युद्धादेस्तस्तत्वस्थे-
त्यादिना ज्ञानिनोपि तत्कर्म्म कर्त्तुं युक्तमित्यवधेयम् ॥ ४२ ॥ इति श्रीमद्योगि-
वर्य्यविप्रराजेन्द्रात्मजविरचिते भाष्यप्रदीपे चतुर्थोध्यायः ॥ * ॥ नन्विहाध्याये सं-
न्यासयोगेन किं निरूप्यतइत्याह । कर्मेति । एवंसति वेदस्य त्रिकाण्डत्वात्कर्म-
योगोपासनयोश्च साधनत्वात्ताभ्यामेव ज्ञानान्मुक्तिरिति पर्य्यवसिते मैत्रेयी-
स्मृति, संन्यस्तान्वथ मैत्रयीं दृष्ट्वा क्रुद्धास्तु दण्डिनः। स्त्रीणां क्वास्ति च सन्यासः
सस्त्रीकः को न्यसेद्बुध इति काश्यां दण्डिभिरुक्तम् । तदनन्तरन्तु पुरुषेणसमास-
ङ्गात्कन्यापुत्रौ भविष्यतः। तव स्त्रिया तु संसर्गात्कन्यापुत्रौ भविष्यत इत्यादिमैत्रे-

च्छ्रेय एतयोरेकन्तन्मे ब्रूहि सुनिश्चितम् ॥ १ ॥ श्रीकृष्ण उवाच ॥ संन्यासः कर्मयोगश्च निश्श्रेयसकरावुभौ । तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते ॥ २ ॥ ज्ञेयस्स नित्यसंन्यासी यो न द्वेष्टि न काङ्क्षति । नि-

र्म्मणा न प्रजया धनेन त्यागेनैकेनामृतत्त्वमानशुरित्यादिश्रुत्या तस्य त्यागम्विवक्षितमेतम्वेदानुवचनेन यज्ञेन दानेन तपसानाशकेन ब्राह्मणा विविदिषन्तीत्यादिश्रुत्या च कर्म्मकर्त्तव्यतावश्यकत्त्वञ्चेति कर्म्मतत्त्यागयोर्म्मध्ये यदेकं श्रेयः प्रशस्ततरं मन्यसे तन्मे सुनिश्चितम्ब्रूहीत्युक्तानाशयः ॥ १ ॥ ननु ततः किङ्करणीयमस्तत्युत्तरमाह । सन्यास इति । तत्र तावत्कषायशुद्धिः कर्म्मभ्यो ज्ञाने तु परमा गतिः । कषाये कर्म्मभिस्त्यक्ते ततो ज्ञानम्प्रवर्त्ततइत्यादिस्मृत्या फलोत्पत्त्यनन्तरं कर्म्मणां संन्यासस्तदुत्पत्तेः पूर्व्वन्तु फलोत्पत्त्यर्थं कर्म्मयोगः कर्त्तव्य एवेति तावुभावपि निश्श्रेयस्करौ तथापि तयोर्म्मध्ये फलोत्पत्त्यनन्तरमपि कर्म्मणां त्यागात्कर्म्मयोगः कर्त्तव्य एवेति विशिष्यतइत्युत्तरमवधार्य्यम् ॥ २ ॥ ननु कीदृशस्संन्यासीति नाम्नेह प्रसिद्धदण्डी त्रिदण्डीति, नेत्याह । ज्ञेय इति । तथा चेह विरक्तो विषयद्वेष्टा रागी विषयलोलुपो ग्रहमोक्षविहीनस्तु न विरक्तो न रागवानित्यादिस्मृतिन्यायेन योसौ कर्म्मण्यभिप्रवृत्तोपि स नित्यसंन्यासी यतो न द्वेष्टि न वेहामुत्र वैकल्ये-

---

व्याप्युक्तमिति । एवमेव शङ्कराचार्य्यम्प्रति । वधार्थ्यशावरं रूपं दृष्ट्वा वीथ्याम्प्रकम्पितः । अविज्ञाय शिवं दण्डी गच्छगच्छेति चाब्रवीदिति तदुक्त्यनन्तरन्तु अस्मादन्नमयादन्नमयञ्चैतन्यमप्यथ किङ्गच्छगच्छेति ब्रूहि मां यष्टिमावहन्नित्यादिसदाशिवेनाप्युक्तमवधार्य्यम् ॥ १ ॥ कर्त्तव्यएवेति । बुद्धाद्वैतसतत्त्वस्य यथेष्टाचरणं यदीत्यादिस्मृत्यापि कर्म्मयोगो ज्ञानिनापि कर्त्तव्य एवेत्याशयः ॥ २ ॥ ननु तस्माद् ज्ञानप्रदात्तत्त्वं लब्ध्वाज्ञानं तु दुर्लभत्वात्तुर्व्वं पर्वं वसेत्क्वापि वेणुभिः किं यतिर्भवेदिति द्वयोर्निरासे महात्मनां किं स्वरूपलक्षणमस्तीति वक्तुमाह । तथा चेति । तच्चैवं सति तद्यथेह कर्म्मचितो लोकः क्षीयतइत्यादिश्रुत्या शुकसर्षादिवद्ज्ञानिनोपि स्वरूपकथनमात्रं न तत्र द्वेषो न वा राग इत्यप्युक्तम् ।

द्वन्द्वो हि महाबाहो सुखम्बन्धात्प्रमुच्यते॥३॥ साङ्ख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः । एकमप्यास्थितस्सम्यगुभयोर्विन्दते फलम् ॥ ४ ॥ यत्साङ्ख्यैः प्राप्यते स्थानन्तद्योगैरपि गम्यते । एकं साङ्ख्यञ्च योगञ्च यः पश्यति स पश्यति ॥ ५ ॥ संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः । योगयुक्तो

नाधिकम्प्राप्तुं स्वयमाङ्क्षतीत्यर्थः। अत एव रागद्वेषादिराहितत्वेन निर्द्वन्द्व एव स एव हे महाबाहो सुखं यथा स्यात्तथा बन्धादन्तःकरणाशुद्धिकृताद्बन्धात्प्रमुच्यतेइत्यर्थः ३॥ ननु यः कर्म्मण्यभिप्रवृत्तश्चेत्स कथं संन्यासीति ज्ञातव्यः कर्म्मतत्त्यागयोस्स्वरूपभेदादर्थानर्थयोः फलभेदाच्चेत्त्याह। साङ्ख्ययोगाविति। तथा चेह साङ्ख्यकर्म्मयोगयोर्मध्ये स्वाधिकारानुरोधेन यथाशास्त्रं सम्यगास्थितश्चेद् ज्ञानोत्पत्तिद्वारेणोभयोः फलम्विन्दतइत्यर्थः ॥ ४ ॥ नन्वेकस्यानुष्ठानात्कथमुभयोः फलन्विन्दतइति स्पष्टम्पुनराह । यत्साङ्ख्यैरिति । तत्रैवंसति यत्साङ्ख्यैर्ज्ञाननिष्ठैर्य्यमादियोगाभ्यासेन स्थानङ्कैवल्याख्यम्प्राप्यते तदेव स्थानं यथाधिकारं निस्सङ्गत्वेन कुर्व्वद्भिः कर्म्मयोगीभिरभिगम्यतइत्यर्थः । एवंसति साङ्ख्यं ज्ञानं योगः-कर्म्मयोगञ्च कैवल्यफलांशत्त्वेनैकं यस्तत्त्वज्ञः पश्यति स एव पश्यति दुरुद्धरत्वान्नैवेतरो जन इत्याशयः ॥ ५ ॥ ननु ज्ञाननिष्ठाया हेतुत्त्वेनाशुद्धान्तःकरणोपि कर्म्मणां संन्यास एव कुतो न क्रियतइति, नेत्याह । संन्यासास्त्विति । एवन्तर्ह्ययोगतोन्तःकरणशो-

---

तद्यथा, सावधानतया भक्त्या ज्ञानेनाप्यासन्वैभवाः। विराजन्ते विमानस्थाः यतिः सा गृहमेधिनामित्याद्यन्यच्च भारतेपि द्रष्टव्यम् ॥३॥ कर्मतत्त्यागयोरिति । तच्च श्रुतिश्च, तद्यथा कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः एवन्त्वयि नान्यथेतोऽस्ति न कर्म्म लिप्यते नर इत्यादि द्रष्टव्यम् ॥ ४ ॥ यथाधिकारमिति । एवंसति तपोवृत्त्यात्तु विप्रस्याप्रजाधर्म्मो नृपस्य तु तः। दानधर्म्मो हि वैश्यः स्याच्छूद्रस्त्विविधसेवयेत्यादिस्मृत्या पूर्व्वजन्मनि नारदादिवच्च यथाधिकारं निस्सङ्गत्वेन कुर्व्वद्भिस्सर्वैरपि कर्म्मयोगिभिः कैवल्यं लभ्यतइत्यवधेयम् ॥ ५ ॥ मुनिरिति ।

**मुनिर्ब्रह्म न चिरेणाधिगच्छति ॥ ६ ॥ योग-**
**युक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः ।**
**सर्व्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥७॥**
**नैव किञ्चित्करोमीति युक्तो मन्येत तत्त्ववित् ।**

धको यः कर्म्मयोगस्तम्विना संन्यासस्तु दुःखमाप्तुमेव भवति अशुद्धान्तःकरण-
त्वेन तस्य ज्ञननिष्ठाया असम्भवादिति भावः । एवंसति कर्म्मयोगयुक्तस्तु शुद्धान्तः
करणत्वेन मुनिर्म्मननशीलस्सन्सत्यज्ञानादिलक्षणं शिवमद्वैमन्तुरीयमचिरेण शीघ्र-
मेव गच्छतीत्यर्थः अन्यथा कर्म्मब्रह्मोभयभ्रष्टत्वेन परमसङ्कटापत्तेरित्यवधेयम्
॥६॥ ननु ततः किङ्करणीयमस्तीत्यवधार्य्य वक्तव्यमित्याह । योगयुक्तइति । तत्रै-
वंसतीह शास्त्रीयङ्कर्म्म युज्यते स्वाभीष्टं न स योग इत्युच्यते तत्र तेन योगेन
युक्तः प्रथमाम्विशुद्धात्मा सन्विजितात्मा जितेन्द्रियश्च भवति ततो निर्म्मलान्तःकर-
णस्सन्विजितात्मा स्ववशीकृतसर्व्वबाह्येन्द्रियश्च भवति तथा च यत्किञ्चेदमार्द्र-
मित्यादिबृहदारण्यकश्रुतेर्ज्जडाजडात्मकं सर्व्वम्परब्रह्मैवेति पश्यन्ब्रह्मार्पणन्याये-
न कर्म्म कुर्व्वन्नपि परदृष्ट्या न लिप्यते स्वदृष्ट्यापि तदभावादिति छायाशरीरे प्रति-
बिम्बगात्रइत्यादाविव द्रष्टव्यम् ॥ ७ ॥ एतदेव विवृणोति । नैवेति । यत्र त्वस्य सर्व्व-
मात्मैवाभूत्तत्केन कम्पश्येत्तत्केन कं जिघ्रेत्केन कमभिवदेदित्यादिश्रुतेरिति भावः । अ-
त्र यद्यप्यभ्युत्थानदशायाम्पश्यति तथापि तच्छुद्धोसि बुद्धोसिनिरामयोसि संसारमा-
यापरिवर्ज्जितोसि । संसारस्वप्नन्त्यज मोहनिद्रां मदालसा वाक्यमुवाच पुत्रमित्यादिवद-

---

तद्यथा, निर्व्वीजः स्वीयधर्मज्ञो वेदज्ञस्तत्त्वपारगो विरक्तो वेषनिर्मुक्तः षड्भि-
र्य्योगी मुनिर्भवेदित्यादि बोध्यम् । भ्रष्टत्वेनेति । तथा च स्मृतिः, न कर्म्माणि
त्यजेद्योगी कर्मभिस्त्यज्यते ह्यसौ । कर्मब्रह्मोभयभ्रष्टं तन्त्यजेदन्त्यजं यथेत्याद्यव-
धार्य्यम् ॥६॥ नन्विदानीं ज्ञानङ्कर्म वेत्युभयोर्मध्ये किमारभ्योन्नीयमिति निर्द्धा-
रयितुमाह । तत्रैवंसतीति । तद्यथा अशुद्धात्मा शुचिर्लीभाज्ज्ञानन्तन्नावधारये-
त्पतत्येवोभयोर्भ्रष्टश्शूद्रो ह्यध्ययनादिवदित्यादि द्रष्टव्यम । आर्द्रमिति । अव्यक्तं
व्यक्तमाधत्ते व्यक्तं सर्वं प्रसत्यलमिति स्मृतिन्यायेन यत्किञ्चसर्वमार्द्रं द्रवात्मकं ब्रह्मै-
वेति पश्यन्नित्यर्थः ॥ ७ ॥ केनकम्पश्येदिति । तदिह समाधिकाले तु योगी
समाधिकाले तु न शृणोति न पश्यति न जिघ्रति न जानाति तत्पदं किञ्चिभा-

पश्यञ्शृण्वन्स्पृशञ्जिघ्रन्नश्नन्गच्छन्स्वपञ्श्वसन् ॥ ८ ॥ प्रलपन्विसृजन्गृह्णन्नुन्मिषन्निमिषन्नपि । इन्द्रियाणीन्द्रियार्थेषु वर्त्तन्तइति धारयन् ॥ ९ ॥ ब्रह्मण्याधाय कर्माणि सङ्गन्त्यक्त्वा करोति यः । लिप्यते न स पापेन पद्मपत्त्रमिवाम्भसा ॥ १० ॥ कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि । योगिनः

वधार्य्यम् ॥८॥ एवमिह पूर्व्वोक्तशेषमेव विवृणोति । प्रलपन्निति । तत्रेत्थंसति पूर्वं यथा चक्षुरादिज्ञानेन्द्रियैः पश्यन्नित्याद्युक्तन्तथेह वागादिकर्म्मेन्द्रियैरपि प्रलपन्नित्याद्यन्तःकरणचतुष्टयेन तत्तच्चेष्टासु क्रियमाणास्विन्द्रियाण्येवेन्द्रियार्थेषु स्वस्वविषयेषु प्रवर्त्तन्ते न त्वमिति धारयन्नैव किञ्चिद्वस्तुतः करोमीति युक्तो ब्रह्मैक्यतादात्म्यापन्नस्सन्मन्येत तत्वविद् विचारयेदित्यर्थः ॥ ९ ॥ ननु कथन्तत्त्ववित्तत्त्वैकशरणस्सन्कर्म्म कुर्य्यादिति पुनरवधारयति । ब्रह्मण्याधायेति । तथा च परे ब्रह्मणि निष्कले यस्मिन्कृते न किञ्चित्कर्म्म क्रियतइत्यादिश्रुतिन्यायेन कर्म्माण्याधाय समर्प्य कर्म्मणां सङ्गं लौकिकफलाभिसन्धिन्त्यक्त्वा जानामि धर्म्मं न च मे प्रवृत्तिरितिन्यायेन यः करोति स पुरुषः पापेन जन्ममरणप्रदेन कर्मणा पद्मपत्रमिवाम्भसा न लिप्यतइति परमार्थः ॥ १० ॥ प्रत्युत निस्सङ्गेन कर्म्मणा शिथिलमपि ज्ञानम्पुष्टम्भवतीत्याह । कायेनेति । तथा चात्मानं रथिनं प्राहुश्शरीरं रथमेव

---

वयेत्यादि द्रष्टव्यम् ॥ ८ ॥ शेषमिति । ज्ञानकर्म्मयोगयोर्म्मध्ये शेषमवशिष्यमाणङ्कर्म्म विवृणोतीत्यर्थः । तद्यथा । ज्ञानोत्तरन्ततः पूर्वं न विना कर्म्मणः स्थितिः । तस्मात्कर्म्म तु कुर्वन्ति मुनयः पारदर्शिन इति । ननु ज्ञानिनोपि कर्म्म कर्त्तृत्वावश्यकत्वे स्थिते त्वनीश्वरत्वापत्तिः कुतो नु ब्रह्मात्म्यैक्यं स्यादित्याह । नत्वमिति । तत्रैवंसति नाहम्प्राणो नैव शरीरं न मनोहं नाहं बुद्धिर्नाहमहङ्कारधियौ च योत्र ज्ञांशस्सोस्म्यहमेवेति विदुर्य्येमित्यादिस्मृतिन्यायेनाकर्त्तारं स्वात्मानं ब्रह्मैक्यतादात्म्येन विज्ञातव्यमिति भावः ॥ ९ ॥ १० ॥ पुष्टम्भवतीति । तदुक्तमात्मोपनिषत्प्रदीपे । तद्यथा, ब्रह्मज्ञानेप्यवश्यं वै कर्म कर्तुं स युज्यते । स्व-

**कर्म्म कुर्वन्ति सङ्गन्त्यक्त्वा ऽऽत्मशुद्धये ॥ ११ ॥ युक्तः कर्म्मफलन्त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् । अयुक्तः कामकारेण फले सक्तो निबध्यते ॥ १२ ॥ सर्व्वकर्म्माणि मनसा संन्यस्यास्ते सुखम्वशी । नवद्वारे पुरे देही नैव कुर्व्वन्न कारयन् ॥ १३ ॥ न कर्त्तृत्वं न क-**

तु । बुद्धिन्तु सारथिंविद्धि मनः प्रग्रहमेव तु । इन्द्रियाणि हयान्याहुर्व्विषयांस्तेषु गोचरान्ज्ञात्वात्मानम्पृथग्भूतङ्कुसविष्टिगृहीतवदितिस्मृतिन्यायेन कायेन मनसेत्यादिना सङ्गन्त्यक्त्वा ऽऽत्मशुद्धये योगिनो युक्ता युञ्जानाश्च कर्म्म कुर्व्वन्तीत्यर्थः ॥ ११ ॥ ननु तेनैव कर्म्मणा कश्चित्तु बध्यते तत्र तु कर्तृत्वाभिमानसाम्येपि तयोर्व्वैषम्ये को हेतुरित्याह । युक्त इति । तत्र तावद्यस्मिन्कृते न किञ्चित्कर्म्म क्रियतइति श्रुत्युक्तन्यायेन कर्म्मफलासङ्गन्त्यक्त्वा कुर्व्वाणो नैष्ठिकीङ् कैवल्याख्यां शान्तिमाप्नोतीत्यर्थः । यस्तु पुनरयुक्तस्स्वार्थाभिकाङ्क्षी स तु ममाभीष्टफलायेदमैहिकङ्कर्म्म करोमीति फले शक्तो क्षीणे पुण्ये मर्त्यलोके विशन्तीतिश्रुतिन्यायेन निबध्यतइत्यर्थः ॥ १२ ॥ नन्वशुद्धचित्तस्य कर्म्मकर्त्तव्यतावश्यकत्वमुक्तमेवं शुद्धचित्तस्यापि तत्कर्त्तव्यमेवेत्याह । सर्व्वेति । तत्र तावन्निषिद्धन्तु तत्वज्ञानी न करिष्यत्येव तस्य तत्वतो रागाभावात्परन्तु नित्यं नैमित्तिकङ्काम्यञ्चेति सर्व्वाणि कर्म्माणि मनसा फलानभिकाङ्क्षी सन्कुर्व्वन्सुखम्वशी नामात्मसुखाभिषिक्तश्चास्ते तत्रात्मानं रथिनम्प्राहुरिति न्यायेन नवच्छिद्रात्मके द्वारे देही देहभिन्नात्मदर्शी प्रवासीव परगृहे यथा नैव कुर्व्वन्न कारयन्नास्तइति पुनरन्वयः॥ १३॥ ननु प्रथमं सहज-

---

न्यथा कर्म्ममालिन्यादात्मज्ञानन्न पश्यतीत्यादि द्रष्टव्यम् । युक्ता युञ्जानाश्चेति । तत्र तावद्युक्तास्तु योगिनः कर्म्म कुर्वन्ति पश्यन्तस्स्वप्नवज्जगदिति स्मृतिन्यायेन युञ्जानास्तु यथायथा प्रत्यगवस्थितं मनस्तथातथा मुञ्चति बाह्यवासनेत्यादिस्मृतिन्यायेन च कुर्वन्तीत्याशयः ॥ ११ ॥ १२ ॥ प्रवासी वेति । तद्यथा, यथादर्शे स्थितं विम्बं नादर्शात्पृथगीक्षते । ब्रह्मीभूतस्तथा योगी पश्यत्यन्यशरीरवदित्यादि द्रष्टव्यम् ॥ १३ ॥ माययेति । तत्र तावदिह मायाशब्दे नबुद्धिर्मनो बुद्धित्त-

**कर्माणि लोकस्य सृजति प्रभुः । न कर्मफल-**
**संयोगं स्वभावस्तु प्रवर्त्तते ॥ १४ ॥ नादत्ते**
**कस्य चित्पापं न चैव सुकृतं विभुः । अज्ञाने-**
**नावृतं ज्ञानन्तेन मुह्यन्ति जन्तवः ॥ १५ ॥**

स्वब्रह्ममायया शून्यमागतं शून्यात्प्रकृतिरीशश्च महदाद्यास्ततो जगदित्यादिस्मृत्या सहजाख्यस्य सदाशिवस्य साक्षित्वङ्कर्तृत्वम्वेति सन्दिहान आह । न कर्तृत्वमिति । एवन्तर्हि साक्षिणस्तु परात्मत्वं नेशत्वङ्कर्तुरीरितं यस्माच्च पूज्यते सर्व्वैर्ब्रह्माद्यैरखिलेश्वर इत्यादिभारतोक्त्या सदाशिवः परात्मा लोकस्य न कर्तृत्वं न कर्म्माणि न वा कर्म्मफलसंयोगञ्च सृजति किन्तु तस्य स्वस्यात्मनो भाव इव भावशून्याज्जायमाना प्रकृतिरेव तज्जन्येश्वर एवावान्तरो जगताङ्कर्त्री कर्त्ता चेत्यवधार्य्यम् ॥ १४ ॥ नन्वज्ञो जन्तुरनीशोयमात्मनस्सुखदुःखयोरीश्वरप्रेरितो गच्छेत्स्वर्गम्वाश्वभ्रमेव वेत्यादिस्मृत्येश्वरः कारयिता जीवस्तु कर्त्तेति तत्राह । नादत्तइति । तत्रैवंसति परमार्थतः परमेश्वरस्सदाशिवस्सहजाख्यः कस्य चित्पापं सुकृतम्वा नैवादत्तइत्यर्थः । ननु कथन्तत्रार्थं एष ह्येव कर्म कारयतीत्यादिश्रुतिस्मृतिलोकव्यवहारश्चेति, तत्राप्याह । अज्ञानेनेति । अत एवोक्तं बृहदारण्यके यत्र त्वस्यं सर्वमात्मैवाभूत्तत्केन कम्पश्येदित्यादिश्रुतितोवधार्य्यम् ॥ १९ ॥

---

श्चेति पञ्चविंशतितत्त्वात्मिका मूलप्रकृतिस्ततश्च शून्यमुत्पन्नन्ततश्च कार्य्यात्मिका विन्दुप्रकृतिस्ततश्च द्वासुपर्णेति श्रुतिवेद्यसमष्टिभावेनेश्वरो व्यष्टिभावेन च जीव इति व्यवहिताव्यवहितसाधारण्येन प्रकृतेर्महान्महतोहङ्कारादिरुत्पद्यतइत्याशयः ॥ १४ ॥ कारयतीति । नन्वेतावतापि प्रेरकत्वेनापि तत्कर्तृत्वमीशेऽस्मिमिति चेच्छृणु । तच्चैवं सति द्वासुपर्णासयुजासखायासमानंवृक्षम्परिषस्वजाते तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो ऽभिचाकशीतिश्रुतौ सुपांसुलुगिति डादेशेन द्वौ सुपर्णौ पक्षिणौ सयुजौ सहयुक्तौ सखायौ मित्रभावापन्नौ समानं वृक्षं संसारजातम्परिषस्वजाते संश्रतौ तयोर्ज्जीवेश्वरयोर्मध्ये ऽन्यः एको जीवः पिप्पलङ्कर्म्मोपार्ज्जितफलं स्वादु यथा स्यात्तथात्ति तथान्यस्त्वीश्वरो ऽभिचाकशीत्यर्थश्रवणेनेश्वरस्य साक्षित्वमेव श्रूयते नतु कर्तृत्वमिति तेनैव कर्तृत्वमारोपितमित्यवधार्य्यम् ॥ १५ ॥ १६ ॥ परात्मनीति । तत्र य-

**ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः । ते-**
**षामादित्यवद्‌ ज्ञानम्प्रकाशयति तत्परम्॥१६॥**
**तद्‌बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।**
**गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः१७॥**
**विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि ।**

ननु सर्व्वेषामनाद्यविद्यावृतत्वात्कथं संसारबन्धनिवृत्तिस्स्यादित्याह । ज्ञानेनेति ॥ तथा च तमेतम्वेदानुवचनेनेत्यादिश्रुत्युक्तसाधनमार्गेण प्रशान्तचित्ताय जितेन्द्रियायेत्यादिस्मृत्या च गुरूपदिष्टमर्य्यादया जीवस्य रज्जुसर्पादिवत्तदज्ञानं नाशितं येषान्तेषामन्तःकरणे त्वादित्यवत्परम्पदाख्यं ज्ञानं यमेवैष वृणुते तेन लभ्य इत्यादिश्रुत्या च प्रकाशयतीति लभ्यतइत्याशयः ॥ १६ ॥ ननु कथमिदं शिवमद्वैतं लभ्यम्भविष्यतीति तस्योपलब्ध्यर्थमुपायमाह । तद्‌बुद्धय इति । तथासति तस्मिन्नेव परात्मनि शिवे ऽविनाशिनि बुद्धिर्य्येषान्ते तद्‌बुद्धयस्तथा तस्मिन्नेवात्मान्तःकणं येषान्ते तदात्मानस्तथा तस्मिन्नेव परात्मनि निष्ठा मनसास्स्थितिर्य्येषान्ते तथाभूतास्तदेवाद्वैतन्तुरीयम्पदं वेदान्तवेद्यमयनं येषान्तएव ज्ञानेन निर्धूतङ्कल्मषं येषान्तेऽपुनरावृत्तिलक्षणं कैवल्यं तुरीयं गच्छन्तीत्यर्थः ॥ १७ ॥ नन्वेतादृशं ज्ञानं लब्ध्वा कीदृशी जीवन्मुक्तिस्सिद्ध्यतीत्याह । विद्येति । तत्र तावद्विद्या पुराणन्यायमीमांसाधर्म्मशास्त्राङ्गमिश्रितैर्व्वेदैश्चतुर्दशेत्युक्तमुपवेदास्तथाष्टादशेतिस्मृत्याष्टादशरूपा तथेह विनयो ऽनहङ्कारत्वन्तत्सम्पन्ने पुरुषे तथा ब्रह्मणो ब्रह्मत्वे जातीविशिष्टे गवि नाम संस्कारहीनायां शुनि श्वपाके चात्यन्तपातके ऽधमेपि समात्मदर्शिनः पण्डिता

---

ध्यमात्वे राजबुद्धिस्तु न दोषाय फलाय तदिति न्यायेन परतत्त्वात्मना सर्वस्य परब्रह्मरूपत्वन्तथापि स्वतः परात्मत्वं शिवस्यैवेति स्कान्दे ऽप्युक्तम् । तद्यथा । सात्त्विकत्वन्तुरीयत्वमविनाशित्वमेव च । साक्षित्वम्परदेवत्वं शिवत्वञ्च शिवे स्मृतमित्याद्यवधार्य्यम् ॥ १७ ॥ पुराणेत्यादि । तत्र तावन्मद्वयं भद्वयञ्चैव ब्रत्रयं वचतुष्टयमनया लिङ्गकुस्कन्दपुराणान्यष्टादशैव हीति । एवमिह शिक्षाकल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति षडङ्गानि । तथा ऋग्वेदो यजुर्वेदस्सामवेदोऽथर्ववेदश्चेति चतुर्व्वेदः एवमायुर्व्वेदो धनुर्व्वेदो गान्धर्व्वेदो ऽथर्ववेदश्चेत्युप-

शुनि चैव श्वपाके च पण्डितास्समदर्शि-
नः ॥ १८ ॥ इहैव तैर्ज्जितस्सर्गो येषां सा-
म्ये स्थितं मनः । निर्द्दोषं हि समम्ब्रह्म त-
स्माद्ब्रह्मणि ते स्थिताः ॥ १९ ॥ न प्रहृष्ये-
त्प्रियम्प्राप्य नोद्विजेत्प्राप्य चाप्रियम् । स्थि-
रबुद्धिरसंमूढो ब्रह्मविद्ब्रह्मणि स्थितः ॥ २० ॥
बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत्सु-

भवन्ति नतु तएव समा भवन्तीत्यर्थः । अन्यथा बुद्धाद्वैतसतत्वस्येतिस्मृतिन्यायेन तत्त्वदृग्धर्म्मविलोपापत्तेरित्यवधार्य्यम् ॥ १८ ॥ नन्वेवंस्वरूपस्य योगिनो जीवन्मुक्तस्य किं लक्षणमस्तीति पुनरवधारयति । इहैवेति । तथा च येषां साम्ये समत्वभूमिकायां स्थितं मनस्तैस्त्विहैव सर्गःसृष्टिक्रमस्समुद्रमापः प्रविशन्तीति न्यायेन जित इत्यर्थः । यतो ह्यसङ्गोयम्पुरुष इत्यादिश्रुतेर्न्निर्दोषं दोषगन्धेनापि शून्यं यतश्च व्योमवत्समम्व्यापकम्ब्रह्म यस्मात्तस्मिन्नैक्यरूपेण ब्रह्मणि स्थितास्तस्मात्तेपि जीवाभेदेन तथेत्याशयः ॥ १९ ॥ नन्वेवमप्यत्र स जीवन्मुक्तशरीरचेष्टया कथं लक्षणीय इत्याह । न प्रहृष्येदिति । एवन्तर्हि प्रियं वस्तु स्रग्यन्नपानस्रक्चन्दनादि प्राप्य न प्रहृष्येत नवा स्वाभीष्टविपरीतमप्रियम्प्राप्योद्विजेदित्यर्थः । यतः परात्मनि शिवे स्थिरबुद्धिर्य्यतश्च तत्रासम्मूढो ज्ञानवान्ब्रह्मवित्समाधिना ब्रह्मणि स्थितश्चेत्यर्थः । ॥ २० ॥ नन्वेवमपि तस्य किन्त्यागमात्रेणैव ज्ञातृत्वन्तर्हि त्यागेनैकेन प्रकृतिषु

---

वेदैश्चतुर्भिस्सहाष्टादशविधेत्यवधेयम् ॥ १८ ॥ समत्वमिति । शास्त्रसज्जनसम्पर्को विचारो ऽसङ्गभावना । समता स्वच्छता सौम्या सप्तधा भूमिका मतेत्यत्र सप्तभूमिकागतत्वं समत्वमित्यर्थः । व्योमवदिति । इह निरवयवत्वेन भेदघटितमेव सादृश्यमन्यथा बहुधा श्रुतयः प्रवदन्ति यतो विपदारियं मृगतोयसममित्यादिस्मृत्या व्योम्ना मिथ्याभूतेन सादृश्यं न घटेतेत्यवधेयम् ॥ १९ ॥ न प्रहृष्येदिति । तद्यथा, अहौ वा हारे वा बलवति रिपौ वा सुहृदि वा मणौ वा लोष्टे वा कुसुमशयने वा दृषदि वा । तृणे वा स्त्रैणे वा मम समदृशो यान्तु दिवसाः क्वचित्पुण्यागारे शिवशिवशिवेति प्रलपत इत्यादि द्रष्टव्यम् ॥ २० ॥ राजयोगेति ।

खम् । स ब्रह्मयोगयुक्तात्मा सुखमक्षयमश्नु-
ते ॥ २१ ॥ ये हि संस्पर्शजा भोगा दुःखयो-
नय एव ते । आद्यन्तवन्तः कौन्तेय न तेषु
रमते बुधः ॥ २२ ॥ शक्नोतीहैव यस्सोढुम्प्राक्
शरीरविमोक्षणात् । कामक्रोधोद्भवम्वेगं

विलय इत्यादिश्रुतिविरोधादुपेक्ष्यं स्यादित्याह । बाह्येति । एवंसति यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम्ब्रह्माक्षयसुखस्याप्तेः कलां नार्हन्ति षोडशीमित्यादिस्मृत्या बाह्यस्पर्शेषु शब्दस्पर्शादिष्वसक्तात्मा सन्शमादिना यावत्सुखमात्मन्यन्तःकरणावच्छेदेन विन्दति स एव ब्रह्मयोगयुक्तात्मना नाम राजयोगयुक्तात्मा सन्नक्षयम्ब्रह्मसुखमश्नुतइत्यर्थः ॥ २१ ॥ नन्वेतावतापि बाह्यसुखनिवृत्तावात्मसुखस्याप्तिस्तथात्मसुखस्याप्तौ बाह्यसुखनिवृत्तिरित्यन्योन्याश्रयस्तत्परिहरन्नाह । ये हीति । तथासति यावन्तः कुरुते जन्तुसम्बन्धान्मनसः प्रियांस्तावन्तोस्य निखन्यन्ते हृदये शोकशङ्कव इत्यादिस्मृत्यापि हि यस्माद्ये संस्पर्शजा विषयेन्द्रियसंबन्धजा भोगास्ते सर्वे प्याद्यन्तवत्त्वेनेहामुत्रगा रागद्वेषादिव्याप्तत्वेन च दुःखयोनय एव तइति तत्र बुधो नासक्त्या रमतइत्यर्थः ॥ २२ ॥ ननु कस्तर्हि जीवन्मुक्त इति स्पष्टङ्कुतो नोच्यतइत्याह । शक्नोतीति । तत्रैवंसति यथा मरणादूर्ध्वम्विलपन्तीभिर्य्युवतीभिरालिङ्ग्यमानोपि प्राणशून्यत्वात्तद्वेगं सहते तथा प्राणात्प्रागपि जीवन्नेव य-

---

त्र च तावद्धौतिर्व्वस्तिस्तथा नेतिरित्यादिना हठयोगो दर्शितो राजयोगस्य परत्वन्तु स्कान्दे तत्त्वसंहितायामुक्तम् । तद्यथा । योगो हि द्विविधः प्रोक्तो हठयोगोऽपरस्तयोः । तीव्राधिकारमापन्नो राजयोगंसमभ्यसेदित्याद्यवधार्य्यम् । शमादिनेति । शमदमोपरतितितिक्षाश्रद्धासमाधानाख्यषट्सम्पत्तिरूपयेत्यर्थः ॥ २१ ॥ शोकशङ्कव इति । तद्यथा तत्रैवोक्तम् । ग्रन्थिर्हि द्विविधा जन्तोर्व्विद्याविद्याप्रभेदतः । तत्राविद्यान्तु शङ्खाख्यां भिद्याद्योगैर्हठव्रतैरित्यादि बहुशः ॥ २२ ॥ मरणादिति । तत्रैवं सत्यणु हि जीवम्प्रतिदेहभिन्नं शरीरसंयोगवियोगयोग्यमित्येवंलक्षणान्मरणादूर्ध्वमित्यर्थः । एवन्ततः परत्वान्तरमाहुरीश्वरस्ततोप्यनन्तं जगदीश्वरं शिवमित्यादिविशेषणावधार्य्यम् । सहतइति । तदेतदप्यहो वा द्वारे वा

सयुक्तस्स सुखी नरः ॥ २३ ॥ योन्तस्सुखो-
न्तरारामस्तथान्तर्ज्योतिरेव यः । स योगी
ब्रह्मनिर्व्वाणम्ब्रह्मभूतोधिगच्छति ॥ २४ ॥
लभन्ते ब्रह्मनिर्व्वाणमृषयः क्षीणकल्मषाः ।
छिन्नद्वैधायतात्मानस्सर्वभूतहिते रताः ॥२५॥
कामक्रोधवियुक्तानां यतीनां यतचेतसाम् ।

सहते स एव परे परब्रह्मणि युक्त इत्यर्थः । तदुक्तं योगवाशिष्ठे । तद्यथा, प्राणे गते यथा देहस्सुखं दुःखं न विन्दति । तथा चेत्प्राणयुक्तोपि स कैवल्याश्रयो भवेदित्यादि द्रष्टव्यम् ॥ २३ ॥ ननु किम्वृक्षादिवत्सहिष्णुतामात्रमेवापेक्षितमपि तु ब्रह्मसुखस्यावाप्तिरपीत्याह । योन्तरिति । तथासत्यन्तःकरणावच्छेदेन सुखं यस्य स तादृशस्समाधिनिर्धूतमलस्य चेतसो निवेशितस्यात्मनि यत्सुखम्भवेदित्यादिश्रुत्या प्रमाणीभूतो योन्तस्सुखस्तथान्तरारामस्स्थितिर्य्यस्य स तथान्तर्ज्योतिरेव यः स योगी यमनियमाद्यष्टाङ्गयोगाभ्यासशीलो ब्रह्मनिर्व्वाणम्ब्रह्मीभूतस्सन्नचिरेण स्वल्पकालेनैवाभ्यासपाटवाद् गच्छतीत्यर्थः ॥ २४ ॥ ननु कैवल्यहेतोर्ज्ञानस्य साधनानि पुनः स्मारयन्नाह । लभ्यन्तइति । तत्र तावद्यज्ञादिभिः क्षीणकल्मषास्ततोन्तःकरणशुद्ध्या ऋषयः सूक्ष्मवस्तुविवेचनसमर्थास्तएव कर्म्मणाम्फलांशत्यागेन संन्यासिनः ततश्च श्रवणादिपरिपाकेणाछिन्नद्वैधानिवृत्तसर्व्वसंशयास्ततो निदिध्यासनपरिपाकेण संयतात्मानश्शिवे परमात्मन्येवैकाग्रचित्ताः एतादृशाश्च द्वैतादर्शित्वेन शिवैकतादात्म्यात्सर्व्वभूतहिते रता ब्रह्मैव सन्ब्रह्मनिर्व्वाणं लभन्तइत्यर्थः । यस्मिन्सर्व्वाणि भूतान्यात्मैवाभूद्विजानतस्तत्र को मोहः कश्शोक एकत्वमनुपश्यतइत्यादिश्रुतेरिति भावः ॥ २५ ॥ अथ पूर्व्वं कामक्रोधयोरु-

---

बलवति रिपौ वेत्यादिसमनन्तरमेवोक्तं न विस्मर्त्तव्यम् ॥ २३ ॥ अचिरेणेति । कस्य चिज्जायते शीघ्रञ्चिरकालेन कस्य चिदित्यादिना यथा तीव्रातीव्राद्यभ्यासवलेनावधार्य्यम् ॥२४॥ संन्यासिन इति । ननु दण्डधारिण इत्यर्थः । तद्यथा । नाद्यापि पुरुषो जातः पुंस्त्वं वो नैव निश्चितं, स्वं स्वयं नैव जानीध्वम्वेषतः किं यतिर्भवेदित्यादि दण्डिनम्प्रति मैत्रेय्युक्त्यावधार्य्यम् ॥२५॥ अनुत्पत्तिरेवे-

**अभितो ब्रह्मनिर्वाणं वर्त्तते विदितात्मना-म् ॥ २६ ॥ स्पर्शान्कृत्वा बहिर्बाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः । प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ॥ २७ ॥ यतेन्द्रियम-नोबुद्धिर्मुनिर्मोक्षपरायणः । विगतेच्छाभ-यक्रोधो यस्सदा मुक्त एव सः ॥ २८ ॥ भो-**

त्पन्नयोरपि तयोर्व्वेगस्सोढव्य इत्युक्तमिदानीन्तु तयोरुत्पत्तिप्रतिबन्ध एव वर्ण्यतइत्याह । कामेति । तत्रैवंसति कामक्रोधयोर्व्वियोगस्तदनुत्पत्तिरेव येषान्तेषां यतीनां यतशीलानां यतचेतसां संयतचित्तानाम्विदितात्मनां साक्षात्कृततत्त्वानामभितो ब्रह्मनिर्व्वाणम्वर्त्ततइत्यर्थः ॥ २६ ॥ एव-मिह बहुशस्तत्वज्ञानस्य बहिरङ्गसाधनान्युक्तानीदानीन्तु तस्यान्तरङ्गसाधना-न्यप्याह । स्पर्शानिति । तथा चेहादौ बहिर्बाह्यान्शब्दादीन्बहिर्भवान्पुनर्बहि-रेव कृत्वा परम्वैराग्येण भ्रुवोरन्तरे ऽर्द्धनिमीलनेन चक्षुषी परात्मनि चिदाकाशे स्प-र्शयोगस्तु नामैष दुर्ल्लभो हि कुयोगिनामित्यादिस्मृतिगम्ये स्पर्शे निधाय तथा प्रा-णापानौ समौ नाम तुल्यावूर्ध्वाधोगत्यौदासीन्येन नाशाभ्यन्तरचारिणौ कृत्वेत्यर्थः ॥ २७ ॥ नन्वत्रातः परङ्किङ्करणीयमस्तीत्याह ॥ यतेन्द्रियेति ॥ तथा चैवम्प्रका-रेण यतास्संयता इन्द्रियमनोबुद्धयो यस्य स तथा मननशीलस्सन्ब्रह्मविद्यापरायण एव मोक्षपरायण इत्यर्थः । एवंसति ततोप्यभ्यासपाटवाद्विगतेच्छाभयक्रोधो यस्सदा स मुक्त एवेति परमार्थः । उक्तं हि निमिषार्द्धं न तिष्ठन्ति वृत्तिम्ब्रह्ममयीम्विना । यथा तिष्ठन्ति ब्रह्माद्यास्सनकाद्याश्शुकादय इत्याद्यधिकम्मत्कृतसर्व्वशास्त्रार्थदर्शने-न्यत्र च बहुशो द्रष्टव्यम् ॥ २८ ॥ नन्वेवं योगयुक्तः कथं ज्ञात्वा विमुच्यतइत्या-

---

ति । एतदप्युक्तम् । यथोत्तमं रसं लब्ध्वा स क्षुद्रैर्नावसीदति, तद्वद्ब्रह्मसुखं लब्ध्वा लौकिकैर्नावसीदतीत्यादि विवेक्तव्यम् ॥ २६ ॥ चिदाकाश इति । इह यच्च तु परे ब्रह्मणि चिदाकाशे विश्वं दर्पणदृश्यमाननगरीतुल्यं निजान्तर्गतम्पश्य-न्नात्मनि मायया बहिरिवोद्भूतं यथा निद्रयेत्याद्यवधार्यम् । चारिणाविति । ए-वमिह षट्शतानि दिवारात्रौ सहस्राण्येकविंशतिः । हंसस्सोहमिमं मन्त्रं जीवो जपति सर्व्वदेत्यप्यनुसन्धेयमिति ध्यानस्य गूढाभिसन्धिरिति भावः ॥ २७ ॥ २८ ॥

**क्तारं यज्ञतपसां सर्व्वलोकमहेश्वरम् । सुहृदं सर्व्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥२९॥ इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्ज्जुनसंवादे संन्यासयोगो नाम पञ्चमोध्यायः ॥ * ॥ श्रीकृष्ण उवाच ॥ अनाश्रितः कर्म्मफलङ्कार्य्यङ्कर्म क-**

ह । भोक्तारमिति । एवन्तर्हि मायान्तु प्रकृतिम्विद्यान्मायिनन्तु महेश्वरन्तस्यावयवभूतेन व्याप्तं सर्व्वमिदं जगदित्यादिश्रुत्या सर्व्वजगतां साक्षिणं लोकमहेश्वरन्तथाध्वरे ह्यग्रभोक्तारं सर्व्वेषाम्पश्यताम्प्रभुमित्यादिभारतोक्तस्मृत्या च सर्वेषां यज्ञानामग्रभोक्तारन्तपसाञ्च फलप्रदन्तथा हिरण्यगर्भादीनां सर्व्वलोकानां महेश्वरं सदाशिवं ज्ञात्वा शान्तिमृच्छतीत्यर्थः । एवं यस्य देवे परा भक्तिर्य्यथा देवे तथा गुरौ, तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मन इत्यादिस्मृत्या च सर्व्वभूतानां सुहृदं पालनकर्तृत्वेनोपकारकन्त्वमेवं मां ज्ञात्वा च शान्तिमृच्छतीति परमार्थः ॥ २९ ॥ इति श्रीमत्पदवाक्यप्रमाणयोगिवर्य्यविप्रराजेन्द्रविरचिते तत्वैकदर्शनभाष्ये संन्यासयोगनिरूपणं नाम पञ्चमोध्यायः ॥ * ॥ आत्मज्ञानाद्भवेन्मुक्तिस्तथापीन्द्रियसंयमात् । मुक्तिरेवात्मनिष्ठस्य षष्ठे त्वेतन्निरूप्यते । ननु जपाच्छान्तः पुनर्ध्यायेद् यथा-

---

हिरण्यगर्भादीनामिति । तथैवंसति यो देवानाम्प्रभवश्चोद्भवश्च विश्वाधिको रुद्रो महर्षिर्हिरण्यगर्भञ्जनयामास पूर्व्वं स नो बुद्ध्याशुभया युनक्तिवत्यादिश्रुत्या हिरण्यगर्भादीनां सर्व्वलोकानां महेश्वरं मां ज्ञात्वेत्यर्थः । पालनकर्तृत्वेनेति । तथैवन्तु त्वं पालनकर्तृत्वेनोपकारको विष्णुर्न तु कर्त्तेति जघन्यं मन्यमानोपि शिवाधिक्यमविज्ञाय ब्रह्मनारायणौ पुरा, अहम्ब्रह्मत्वमहस्वेति विभ्रान्त्या गुरुतारणन्वङ्गता ब्राह्मणा नित्ये त्रिपुण्ड्रे भस्मगुण्ठने भवेयुर्व्विमुखा नित्यं वेदसिद्धे विमुक्तिद इत्यादिना शिवाधिक्यमजानतोर्द्वयोर्व्विवादोप्यभूदित्यन्यत्र विस्तरः ॥ २९ ॥ इति श्रीमद्योगिवर्य्यविप्रराजेन्द्रात्मजविरचिते भाष्यप्रदीपे पञ्चमोध्यायः ॥ * ॥ नन्वात्मा जीवश्शिवश्चेति मनोदेहेन्द्रियाणि चेत्यात्मशब्दस्यानेकार्थत्वेपीह, धारयिष्यति ते वेगं रुद्रस्त्वात्मा शरीरिणां, यस्मिन्नोतमि-

रोति यः । स संन्यासी स योगी च न निरग्निर्न्न चाक्रियः ॥१॥ यं संन्यासमिति प्राहुर्य्योगन्तं विद्धि पाण्डव । नह्यसंन्यस्तसङ्कल्पो योगी भवति कश्चन ॥ २ ॥ आरुरुक्षोर्मुनेर्योगङ्कर्मकारणमुच्यते । योगारूढस्य तस्यैव

नाच्छान्तः पुनर्ज्जपेज्जपध्यानाभियोगेन पश्येदात्मानमात्मनेत्यादिस्मृत्यात्मत्वे लब्धे किमिह संन्यासशब्देनोच्यतइत्याशङ्कयाह । अनाश्रित इति । तत्रैवंसति कुटीचको गृहस्थस्स्याद् ब्रह्मचारी बहूदको वानप्रस्थोथ हंसस्स्यात्परहंसस्तु ज्ञानवानित्यादिस्मृत्या गृहाश्रमएव वस्तुतस्त्रिविधाश्रमाणामन्तर्भूतत्त्वात्सर्व्वकर्म्मणाम्फलमनाश्रितस्सन्यः कार्य्यं शास्त्रेण कर्त्तव्यतया विहितं नित्याग्निहोत्रादिकं कर्म्म करोति स संन्यासीत्युच्यते संन्यासो हि त्यागो योगश्च चित्तवृत्तिनिरोधस्तौ च यस्य विद्येते स संन्यासी योगीत्यभिधीयते । नतु निरग्निस्स्वाहास्वधेत्यादिधर्म्मविवर्ज्जितो नवा स्नानसन्ध्यादिषट्कर्म्मशून्योपीति मुद्राजटेत्यादावुक्तं न विस्मर्त्तव्यम् ॥ १ ॥ अथ संन्यासयोगयोः को विशेष इत्याशङ्कयाह । यमिति । तत्र तावद्उर्व्वारुकमिवेति श्रुतिन्यायेन ऋणत्रयविमोक्षादूर्ध्वं सर्व्वकर्म्मणाम्फलत्यागं संन्यासमिति श्रुतयः प्राहुरित्यन्वयः । यतस्तत्पूर्व्वकमेव चित्तवृत्तिनिरोधाख्यं योगमपि तमेव विद्धि हे पाण्डव हि यस्मादसंन्यस्तसङ्कल्पः कश्च न कश्चिदपि योगी न भवत्यपि तु निस्सङ्कल्प एवेति यत्किञ्चिदपि सङ्कल्पान्नरो दुःखे निमज्जतीत्यादिस्मृत्यन्तरादपि द्रष्टव्यम् ॥ २ ॥ नन्वस्त्वेवम्परन्त्वारुरुक्षोर्म्मुनेः प्रथमतः किङ्करणीयमस्तीत्याह । आरुरुक्षोरिति । तत्रैवंसति पूर्व्वोक्तरीत्या सं-

---

दम्प्रोतं विश्वं शाटीव तन्तुष्वित्याद्युक्तप्रत्यगभिन्नेन सदाशिवस्यैवाभिधानादिति भावः । बहूदक इति । तत्र बहूनि जलान्नविद्यादीन्युपलभ्यन्ते येन स बहूदक इत्यर्थः । एवं वायवत्परस्या बुद्धिस्थितिर्यस्य नीरनीरयोर्विवेकवद्या बुद्धिर्यस्येत्यर्थः ॥ १ ॥ ऋणत्रयेति । तद्यथा, देवोपासनया देवं पैत्रन्तु पुत्रतो जयेद् व्रतोपासनया त्वार्षं त्रिभिस्तु परमं जयेदित्यादिस्मृत्युक्तक्रमेणेत्याशयः ॥२॥ आस्त्रसञ्जनेति । तथा चेह शास्त्रसञ्जनसम्बन्धो विचारो ऽसङ्गभावना । प्रमत्ता

शमः कारणमुच्यते ॥ ३ ॥ यदा हि नेन्द्रिया-
र्थेषु न कर्मस्वनुषज्जते । सर्वसङ्कल्पसंन्या-
सी योगारूढस्तदोच्यते ॥ ४ ॥ उद्धरेदात्मना-
त्मानं नात्मानमवसादयेत् । आत्मैव ह्या-
त्मनो बन्धुरात्मैव रिपुरात्मनः ॥ ५ ॥ ब-

न्यासयोगयोरेकफलकत्वेनादौ योगमारुरुक्षोर्म्मुनेर्म्मननशीलस्य शास्त्रविहितङ्कर्मै-व योगप्राप्तिसाधनत्वेन कर्त्तव्यमिति युक्तन्तथा तस्यैव योगारूढस्य शास्त्रसज्ज-नसंपर्क इत्यादिक्रमेण पञ्चम्यां भूमिकायां शमत्वं प्राप्य षष्ठ्यां भूमिकायां प्राप्स्य-तीति तत्र शमः कारणमुच्यतइत्यवधार्य्यम् ॥ ३ ॥ नन्वेवं कदा स योगारू-ढो भविष्यतीत्याह । यदेति । एवन्तर्हि यदा यस्मिश्चित्तसमाधानकाले नित्यनै-मित्तिककाम्यलौकिकप्रतिषिद्धेष्विन्द्रियार्थेषु शैथिल्येनात्मध्यायी नानुषज्जते तत-स्सर्व्वसङ्कल्पसंन्यासी सन्पूजाकोटिसमं स्तोत्रं स्तोत्रकोटिसमो जप इतिस्मृति-न्यायेन क्रमादेव वृत्तिवर्द्धयतीति तदा योगारूढ इत्युच्यतइत्यर्थः ॥ ४ ॥ अथ यो यदेवं योगारूढो भवति तदात्मनैवात्मनो धृतो भवतीत्याह । उद्धरेदिति । तत्रैवंसत्यात्मना विवेकयुक्तेन मनसात्मानं जीवं संसारसमुद्रे पतितं यथोक्त-कर्मणोद्धरेन्नत्वनवधानचेतसात्मानमवसादयेदित्यर्थः । हि यस्मात्संसारबन्धनान्मो-चनहेतुर्य्यथोक्तन्यायेनात्मैव बन्धुस्त्राता स एव च वैपरीत्येन जगद्बन्धहेतुरित्यर्थः ॥५॥

---

स्वच्छता सौम्या सप्तधा भूमिका मतेत्यस्य सद्गुणा शास्त्रसम्पर्कस्ततस्सज्जन-स्य विज्ञानप्रदस्य गुरोश्च सम्पर्क इत्यादिरर्थः ॥ ३ ॥ क्रमादेवेति । तत्र ता-वत्पूजाकोटिसमं स्तोत्रं स्तोत्रकोटिसमो जपः । जपकोटिसमं ध्यानं ध्यानको-टिसमो लय इत्येवंक्रमादेवेत्यर्थः । तत्र तु यथायथा प्रत्यगवस्थितं मनस्त-थातथा मुञ्चति बाह्यवासनेत्यादिरीत्या गुरूपदिष्टमार्गेण चित्तवृत्तिरुवर्द्धय-तीत्याशयः ॥ ४ ॥ उद्धरेदिति । एवंसति तिष्ठत्ययङ्कथं देह इति शङ्कावतो ज-डान्समाधातुम्बाह्यदृष्ट्या प्रारब्धं वदति श्रुतिरित्यादिस्मृत्या प्रारब्धं विसृज्यो-द्यमस्साहसं धैर्य्यम्बलम्बुद्धिः पराक्रमः षडिमे यस्य तिष्ठन्ति स सर्व्वम्प्राप्नुया-त्पुमानित्यादिस्मृत्युक्तरीत्या निदिध्यासनप्राबल्येन सद्गुरूपदिष्टमार्गेणोद्धरे-देव नात्मानमनवधानचेतसावसादयेदित्यर्थः ॥ ५ ॥ अनेकार्थत्वेनेति । इन्द्रात्मा

बन्धुरात्मात्मनस्तस्य येनात्मैवात्मना जितः ।
अनात्मनस्तु शत्रुत्वे वर्त्तेतात्मैव शत्रुवत् ॥६॥
जितात्मनः प्रशान्तस्य परमात्मा समाहि-
तः । शीतोष्णसुखदुःखेषु तथा मानापमान-
योः ॥ ७ ॥ ज्ञानविज्ञानतृप्तात्मा कूटस्थो
विजितेन्द्रियः । युक्त इत्युच्यते योगी सम-

इदानीं किंलक्षण आत्मनो बन्धः किंलक्षणश्च रिपुरित्याह । बन्धुरि-
ति । एवन्तर्हि तस्य जीवस्य बन्धुरात्मैव मन एव यतोनर्थेन मनसा प्रेरितो
विषं भुङ्क्ते कूपे पतति यतश्च सौहार्देन मनसा यथोक्तसाधनेन कैवल्यङ्ग-
च्छतीत्यात्मनैव मनसा जीवात्मा जित इत्यात्मशब्दस्य हर्य्यादिवदनेकार्थत्वमव-
धार्य्यम् । एवं देहान्तरस्यानात्मनस्तु शत्रुत्वे त्वात्मैव शत्रुवद्भवेदित्यत आत्मौपम्येन
सर्व्वत्र समं पश्यति योऽर्ज्जुन, सुखं वा यदि वा दुःखमित्यादिवद्विवक्तव्यम् ॥ ६ ॥
नन्वस्त्वेवम्परन्तु जितात्मत्वे किम्फलमित्याह । जितात्मन इति । एवंसति जिता-
त्मनः प्रशान्तस्यैव परङ्केवलमिहात्मा महद्भयं वज्रमुद्यन्तमित्यादिश्रुतेः रुद्रशब्दा-
भिधेयो धारयिष्यति ते वेगमित्यादिस्मृतेश्च सदाशिवस्समाहितो भवति नान्यस्या-
जितात्मन इत्यतश्शीतोष्णसुखदुःखादौ जितात्मा प्रशान्तश्च भवेदित्यर्थः ॥ ७ ॥
ननु कीदृशो ज्ञानविज्ञानयोर्ज्ञातो योगीत्युच्यते, तदाह । ज्ञानेति । तत्रैवंसति
यच्छास्त्रीयमौपदेशिकन्तज्ज्ञानमित्युच्यते तत्र विज्ञानन्तु गुर्व्वेकलब्धोपनिषत्सु च-
क्षुषेति न्यायेनानुभाविकन्तु विज्ञानमित्युच्यते तथा च तयोर्ज्ञातृत्वेन परे ब्रह्म-

---

जीवश्शिवश्चेति समनन्तरमेवोक्तत्वादिति न विस्मर्त्तव्यम् । विवेक्तव्यमिति ।
तच्चैवंसति कैवर्त्ताय धनं दत्वा तत्पापान्नु पतिर्हत इत्यादिराजधर्म्माविरुद्धधर्म्म-
विवेकेनैवात्मौपम्यं नेत्यादि विवेक्तव्यमित्याशयः ॥ ६ ॥ महद्भयमिति । तद्यथो-
क्तम् । भीषास्माद्वातः पवते भीषोदेतिसूर्य्यः भयादग्निश्च वायुश्च मृत्युर्द्धाव-
ति पञ्चम इत्यादिस्मृतिप्रबन्धेन रुद्रशब्दाभिधेयस्य शिवस्यैव साक्षात्परब्रह्म-
रूपत्वं स्फुटीकृतम् ॥ ७ ॥ जनकादिवदिति । तद्यथा । राजा तु वैदिकांस्स-
र्व्वांस्तान्त्रिकानखिलानपि, असङ्कीर्णतया नित्यं स्थापयेन्मतिमत्तमः, अनपा-

लोष्टाश्मकाञ्चनः ॥ ८ ॥ सुहृन्मित्रार्युदा-
सीनो मध्यस्थो द्वेष्यबन्धुषु । साधुष्वपि च
पापेषु समबुद्धिर्विशिष्यते ॥ ९ ॥ योगी यु-
ञ्जीत सततमात्मानं रहसि स्थितः । एका-
की यतचितात्मा निराशीरपरिग्रहः ॥ १० ॥
शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।

णि शिवे तृप्तात्मा स च पुनः कूटस्थो विषयसन्निधानेपि विकारशून्यस्तथा जितेन्द्रियश्च स युक्त इत्युच्यते । अत एव हेयोपादेयबुद्धिशून्यत्वेन समानानि मृत्पिण्डपाषाणकाञ्चनानि यस्य स योगी परहंस इत्याख्यायते जनकादिवदित्यवधार्य्यम् ॥ ८ ॥ ननु तस्य योगिनः किं स्वरूपलक्षणमस्तीत्याह । सुहृदिति । तत्र तावत्प्रत्युपकारकस्सुहृदित्युच्यते एवं मित्रन्त्वतिताटस्थ्येन स्वसमानवृत्तिः तत्रारिस्स्वभावक्रौर्य्येणापकर्त्ता उदासीनो विवदमानयोरुभयोरप्युपेक्षकः मध्यस्थोपि विवदमानयोरपि तयोर्हितैषी तत्र द्वेष्यस्तु कृतापकारकः तथा बन्धुस्संबन्धेनोपकारकः एवञ्चैतेष्वष्टविधेषु तथा साधुषु शास्त्रविहितकारिषु पापेषु तत्प्रतिषिद्धकारिषु चकारादन्येषु च सर्वेषु समबुद्धिर्विशिष्यतइत्यर्थः ॥ ९ ॥ अथ योगारूढस्य लक्षणमुक्त्वा तत्प्रकारमप्याह । योगीति । तत्र तावद्रहसि स्थितस्सन्सततमात्मानं शिवं युञ्जीतेत्यर्थः । स च पुनरेकाकी निराशीरपरिग्रहश्च यताचित्तात्मा भवतीत्यर्थः ॥ १० ॥ अथ तत्र योगाभ्यासे त्वासनादेर्न्नियमं दर्शयति । शुचा-

---

नादिभिर्व्वस्त्रैस्सर्व्वान्राजाभिरर्चयेत्, वैदिकस्तु विशेषेण ज्ञानिनन्तु विशेषत इत्यादि द्रष्टव्यम् ॥ ८ ॥ समबुद्धिरिति । सा च पाशाष्टकं त्यक्त्वैव भवतीति पुराणसमुच्चये । तद्यथा । घृणा शङ्का भयं लज्जा जुगुप्सा चेति पञ्चकम् । कुलं शीलञ्च वित्तञ्च त्वष्टौ पाशाः प्रकीर्तिता इत्यादि द्रष्टव्यम् ॥ ९ ॥ रहसि स्थित इति । ननु तत्र स्थित्वा किङ्कुर्य्यादित्युक्तं स्कान्दे तत्त्वसंहितायाम् । तद्यथा । शिवस्थानेस्मिन् स्थितोपि स्वात्ममायया दुःखादिसागरे सुह्यमानश्च शोचति अधिष्ठानं समस्तस्य जगतस्सत्यचिद्घनम् । सोहमस्मीति निश्चित्य वीतशोको भवत्ययमित्यधिकमत्र विस्तरः ॥ १० ॥ शुचौ देश इति । तद्यथा, सुराज्ये

नात्युच्छ्रितं नातिनीचञ्चैलाजिनकुशोत्तर-
म् ॥ ११ ॥ तत्रैकाग्रं मनः कृत्वा यतचित्ते-
न्द्रियक्रियः। उपविश्यासने युञ्ज्याद्योग-
मात्मविशुद्धये ॥ १२ ॥ समं कायशिरोग्रीवं
धारयन्नचलं स्थिरः। सम्प्रेक्ष्य नासिकाग्रं
स्वं दिशश्चानवलोकयन् ॥ १३ ॥ प्रशान्ता-
त्मा विगतभीर्ब्रह्मचारी व्रते स्थितः। मन-

विति। तत्रादौ जनसमुदायरहिते निर्भये शुचौ देशे अत्मनश्शरीरात्मन आसनं स्थिरं निश्चलम्प्रतिष्ठाप्यात्मविशुद्धये योगं युञ्ज्यादिति परेणान्वयः तत्रासनन्तु नात्युच्छ्रितं नात्युच्चं नाप्यतिनीचञ्चैलाजिनञ्च व्युत्क्रमेण कुशोत्तरम्बोध्यमित्यर्थः ॥ ११ ॥ एवमासनङ्कृत्वा किङ्कुर्य्यादित्याह। तत्रेति। तथा च तत्रैवासने उपविश्य मनश्च यतचित्तेन्द्रियक्रियस्सन्नेकाग्रङ्कृत्वा योगं युञ्ज्यादिति पुनरन्वयः ॥ १२ ॥ अथ तदर्थमान्तरमासनमुक्त्वा बाह्यं शरीरधारणमप्याह। सममिति। तत्र तावत्कायशिरोग्रीवमचलं यथा स्यात्तथा समं धारयन्स्थिरश्च सन्स्वं नासिकाग्रं सम्प्रेक्ष्य दिशश्चानवलोकयन्काष्ठवद्यष्टिवाचासीतेत्युत्तरेण सम्बन्धः ॥ १३ ॥ ननु पुनः कथम्भूतस्सन्परात्मानं शिवं ध्यायेदित्याह। प्रशान्तेति। तथा च प्रकर्षेण शान्त आत्मान्तःकरणं यस्य सः एवं शास्त्रीयनिश्चयदार्ढ्याद्विगतभीः तथा ब्रह्मचारी कान्ताकनकाद्यनपेक्षितव्रते स्थितः एवं यस्य देवे परा भक्तिर्य्यथा देवे तथा गुराविति श्रुतिन्यायेन मय्येव परमशिवतत्वोपदेष्टरि गुरौ चित्तं यस्य सः

---

धार्म्मिके देशे सुभिक्षे निरुपद्रवे। धनुःप्रमाणपर्य्यन्ते शिलाग्निजलवर्ज्जिते इत्येवंरूपे शुचौ देश इत्यर्थः। व्युत्क्रमेणेति। कुशोत्तरमजिनञ्चैलञ्चेत्यर्थः। तद्यथा। पाषाणे मृत्युमाप्नोति काष्ठे नानाविधान्गदान्। कृष्णाजिने भवेन्मुक्तिर्व्याघ्रः श्रीर्व्याघ्रचर्म्मणीति द्रष्टव्यम् ॥ ११ ॥ १२ ॥ नासिकाग्रमिति। एतदप्युक्तम्। चिदाकाशमयं लक्ष्यङ्कृत्वा चिन्मात्रमव्ययम्। दृष्टिस्तत्रैव कर्त्तव्या न नासाग्रविलोकने इत्यवधार्य्यम् ॥१३॥ दोग्धृत्वेनेति। तदेतदुक्तम्। सर्व्वोपनिषदो गावो दोग्धा गोपालनन्दनः। पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतं महदित्यत्र

स्संयम्य मच्चित्तो युक्त आसीत मत्परः ॥१४॥ युञ्जन्नेवं सदात्मानं योगी नियतमानसः । शान्तिं निर्व्वाणपरमां मत्संस्थामधिगच्छ-ति ॥ १५ ॥ नात्यश्नतस्तु योगोस्ति न चैका-न्तमनश्नतः । न चास्तिस्वप्नशीलस्य जाग्र-तो नैव चार्ज्जुन ॥ १६ ॥ युक्ताहारविहार-स्य युक्तचेष्टस्य कर्मसु । युक्तस्वप्नावबोधस्य

यतोहमेव दोग्धृत्वेन परं साधनं यस्य स मत्परस्सन्गीतार्थामृते सदाशिवे युक्त-स्सन्नासीतेति परमार्थः ॥ १४ ॥ एवं सति पूर्व्वोक्तं समाधिमेवोपसंहरन्नाह । यु-ञ्जन्निति । एवन्तर्ह्यभ्यासवैराग्याभ्याम्परे ब्रह्मणि शिवे नियतं मानसं यस्य स योगी सदात्मानं शिवं युञ्जन्सन्नहमेव ध्यानकर्तृत्वेन स्थितो यस्यान्तां शान्तिं निर्व्वाणपरमां निर्गुणाख्यां मत्संस्थामधिगच्छतीत्यर्थः ॥ १५ ॥ एवं योगाभ्यास-निष्ठस्याहारादिनियममप्याह । नात्यश्नत इति । तत्र तावल्लोभेनाधिकमश्नतो न चैकान्तमनश्नतो नाप्यत्याहारादत्यल्पाहाराद्वा योगः किन्तु पूरयेदशोनार्द्धन्तृती-यमुदकेन तु । वायोस्सञ्चरणार्थन्तु चतुर्थमवशेषयेदिति स्मृत्युक्तरीत्याश्नीयादित्यर्थः । एवं हे अर्ज्जुन न चातिस्वप्नशीलस्य न चातिजाग्रतश्चेत्यादि प्रतिबन्धकयुक्तस्य योगिनो योगोस्तीति भावः । तदुक्तम्मार्कण्डेयपुराणे । तद्यथा । नाध्मातः क्षुधितः श्रान्तो न च व्याकुलचेतनः । युञ्जीत योगं राजेन्द्र योगी सिद्ध्यर्थमात्मन इत्यादि बहुशः ॥ १६ ॥ नन्वेवमपि तत्कथङ्कुर्य्यादिति स्पष्टङ्कुतो नोच्यतइत्याह ।

---

दोग्धृत्वेन परं साधनमित्यर्थः ॥ १४ ॥ ध्यानकर्तृत्वेनेति । तदुक्तङ्कूर्मपुराणे तद्यथा, क्षण एव हि प्रष्टव्यो यन्नैषेष सनातनः । सर्व्वरूपभवं ज्ञात्वा लिङ्गं योर्च्चयति प्रभुमित्यादि द्रष्टव्यम् ॥ १५ ॥ स्मृत्युक्तेति । न तु स्वता नारो दरि-द्रैस्तु दूषिताः पापबिन्दवः स्वादन्नभक्ष्यकामेन वेषं धृत्वा पराङ्मुखा इत्येवं-स्मृत्युक्तरीत्यर्थः । सिद्ध्यर्थमात्मन इति । एवन्तर्हि शमश्चैव दमश्चेति तितिक्षा-श्रद्धयान्विता । समाधानं मुमुक्षुत्वं षट्सम्पत्तिस्तु सिद्धये इत्यादि स्मृत्युक्तप्रका-रेणात्मनोयोगसिद्ध्यर्थं योगी युञ्जीतेत्यर्थः ॥ १६ ॥ अथ तत्र साधनान्यपि क-

योगो भवति दुःखहा ॥ १७ ॥ यदा विनिय-
तञ्चित्तमात्मन्येवावतिष्ठते । निःस्पृहस्सर्व-
कामेभ्यो युक्त इत्युच्यते तदा ॥ १८ ॥ यथा
दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।
योगिनो यतचित्तस्य युञ्जतो योगमात्म-
नः ॥ १९ ॥ यत्रोपरमते चित्तं निरुद्धं योग-

युक्तेति । तथा च युक्तौ नियतावाहारविहारौ यस्य स तस्य एवं युक्ता नियता चेष्टा शरीरार्थङ्कर्म्मसु प्रवृत्तिर्य्यस्य तथा युक्तौ नियतौ स्वप्नावबोधौ यस्य स तस्यैव युञ्जतो योगिनो योगो दुःखहा संसारबन्धनिवृत्तिप्रयोजक इत्यर्थः ॥ १७ ॥ एवं सम्प्रज्ञातसमाधिमभिधायासम्प्रज्ञातसमाधिमप्याह । यदेति । तत्रैवंसति यदा यस्मिन्काले विशेषेण नियतम्वृत्तिनिरोधेन निगृहीतञ्चित्तमात्मन्येव निष्कले शिवे ऽवतिष्ठते तदा तस्मिन्सर्व्ववृत्तिनिरोधकाले युक्तो योगी समाहित इत्युच्यते । ततश्चैवम्भूतो यः स सर्व्वकामेभ्यो निस्स्पृहो नाम सर्व्वेभ्यो दृष्टादृष्टकामेभ्यो दोषदर्शनेन स्पृहा या तृष्णा सा निर्गता यस्य स परम्वैराग्यमाश्रित इत्यर्थः ॥ १८ ॥ तत्रासम्प्रज्ञातस्यास्य समाधेर्ल्लक्षणं दृष्टान्तेनावधारयति । यथेति । तत्र तावद्यथा वा तेन रहिते देशे दीपो नेङ्गते न कम्पते तथा योगं युञ्जतो योगिनो यतचित्तस्यात्मनो मनसस्सोपमा स्मृतेत्यन्वयः । तद्यथा । योगी समाधिकाले तु न शृणोति न पश्यति न जिघ्रति न जानाति तत्पदङ्किञ्चिभावयेति लक्षणघटितो ऽसम्प्रज्ञातो बोध्यः ॥ १९ ॥ एवं सामान्येन समाधिद्वय-

---

तिविधानीति वक्तुं विवृणोति । तथा चेत्यादि । स्पष्टमन्यदिति विवेकः ॥१७॥ दृष्टादृष्टेति । तदेतत्साङ्ख्यसूत्रेऽप्युक्तम् । तद्यथा । तद्यथेहेतिश्रुत्यापि स्वर्गोऽपि दृष्टवदनित्यत्वयातिशययुक्तत्वाच्छिवज्ञानन्ततो मतमित्यादि द्रष्टव्यम् । परम्वैराग्यमिति । तद्यथा, त्यागः प्रपञ्चभूतस्य चिदात्मत्वावलोकनात् । त्यागो हि महतां पूज्यो न गिरिर्न गुहान्तरमिति । अत एव पितुराज्ञया परीक्षार्थमागतं शुकम्प्रति स्वचर्मणा परीधानो जीविनस्त्वं कथं त्यजेस्तस्मान्मनोमयम्विश्वं त्यक्त्वा यास्यसि तत्पदमित्यादि जनकेनोक्तमिति विवेक्तव्यम् ॥ १८ ॥ १९ ॥

**सेवया । यत्र चैवात्मनात्मानम्पश्यन्नात्मनि तुष्यति ॥ २० ॥ सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम् । वेत्ति यत्र न चैवायं स्थितश्चलति तत्वतः ॥ २१ ॥ यं लब्ध्वा चापरं लाभं मन्यते नाधिकन्ततः । यस्मिंस्थितो न दुःखेन गुरुणापि विचाल्यते ॥ २२ ॥**

मुक्त्वा विशेषेण निरुद्धसमाधेर्ल्लक्षणमप्याह । यत्रेति । तथा च यत्र यस्मिन्परिणामविशेषे योगसेवया योगाभ्यासपाटवेन निरुद्धं सच्चित्तमुपरमते निरिन्धनाग्निवदुपशाम्यति पुनश्चान्ततो यत्र चैवात्मनान्तःकरणेन सह वृत्तिव्याप्त्यात्मानं सदाशिवन्तुरीयम्पश्यन्नात्मन्येव यस्मिन्नोतमिदम्प्रोतम्विश्वं शाटीव तन्तुष्वित्यादिस्मृतिगम्ये परे शिवे समाधिनिर्द्धूतमलस्येत्यादिस्मृतिन्यायेन च तत्र निरुद्धाख्ये कैवल्यसमाधौ तुष्यतीति तात्पर्य्यम् ॥ २० ॥ एतदेव तत्वं क्रमेण स्पष्टं दर्शयति । सुखमिति । तत्र तावद्यस्मिन्नवस्थाविशेषे सुखमात्यन्तिकं निरतिशयं यत्तद्वृत्तिव्याप्यत्वेन बुद्धिग्राह्यम्फलव्याप्यत्वेन त्वतीन्द्रियम्पुनश्च यत्र चैवायं योगी स्थितस्तत्वतो न चलतीत्यर्थः । तद्यथोक्तं, लीयते तु सुषुप्तौ तन्निगृहीतं न लीयते । नास्वादयेत्सुखन्तत्र निस्सङ्गः प्रज्ञया भवेदित्यादि बोध्यम् ॥ २१ ॥ अथ तदेव तत्त्वं स्थिरमुपपादयति । यं लब्ध्वेति । तथा च यम्विनिद्राविनिस्स्वासाः काङ्क्षन्ते मोक्षकाङ्क्षिण इत्यादिस्मृतिगम्यं यमात्यन्तिकं सुखं लब्ध्वा ततः परं नाधिकञ्चापरं लाभं न सुखं देवराजस्येति स्मृतिन्यायेन मन्यते यस्मिंश्चिदम्बरसमाधौ स्थितो योगी शीतातपादिना विद्युच्छस्त्रादिना वा गुरुणापि दुःखेन न विचाल्यतइत्यर्थः ॥ २२ ॥ नन्वस्यान्तिमस्य महायोगस्य किम्फलमि-

---

वृत्तिव्याप्येति । तद्यथा । ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता । फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निराकृतमिति तत्रान्तःकरणवृत्तौ स्वत एव स्फुटम्भासमानत्वं वृत्तिव्याप्यत्वन्तथान्तःकरणवृत्तौ तद्गतचिदाभासेन भासमानत्वं फलव्यत्वमिति विवेकः । तात्पर्य्यमिति । तद्यथा, सज्ज्ञानस्थोथ परिव्रजन्वेत्यादिलक्षणलक्षिते समाधौ तिष्ठतीति तात्पर्य्यमित्यर्थः ॥ २० ॥ न विचाल्यतइति ।

**तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम्। स निश्चयेन योक्तव्यो योगो निर्विण्णचेतसा ॥ २३ ॥ सङ्कल्पप्रभवान्कामांस्त्यक्त्वा सर्वानशेषतः। मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ॥ २४ ॥ शनैश्शनैरुपरमेद्बुद्ध्या धृतिगृहीतया। आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत् ॥ २५ ॥ यतोयतो नि-**

त्याह। तम्विद्यादिति। तत्रैवंसति तं योगसंज्ञितं समाधिं जन्ममरणादिसंसृतिरूपदुःखसंय्योगस्य वियोगम्विद्यादित्यर्थः। एवंसति स एवानावृत्तिप्रयोजको योगो निश्चयेन निर्व्विण्णचेतसा निरालस्यचेतसा योक्तव्यो ऽभ्यसनीयो न त्वहहोपरतो ऽस्मीति वृथोपरमेदिति तात्पर्य्यम् ॥ २३ ॥ ननु कथङ्कृत्वा स योगोभ्यसनीय इत्याह । सङ्कल्पेति। तथा च सङ्कल्पेन प्रभवान्कामान्कामक्रोधलोभमोहमदमात्सर्य्यान्षड्वर्गांस्तदतिरिक्तानप्यशेषतस्सर्व्वांस्त्यक्त्वा मनसैव चेन्द्रियग्रामं समूहं समन्ततो विनियम्य धृतिगृहीतया बुद्ध्या शनैश्शनैरुपरमेदित्यर्थः। एवंसति तत्रात्मा शिवस्तत्रस्थं मनस्सुखेन स्तब्धीभूतङ्कृत्वा न किञ्चिदपि चिन्तयेदिति धर्ममेघाख्यस्य समाधेर्ल्लक्षणमवधार्य्यमिति द्वयोरर्थः ॥ २४ ॥ २५ ॥ नन्वेवमपि सम्प्रज्ञातसमाधौ चेतसश्चाञ्च-

---

तदुक्तमष्टावक्रसंहितायाम्। तद्यथा, अन्तस्त्यक्तकषायस्य निर्द्वन्द्वस्य निराशिषः यदृच्छया गतो भोगो न दुःखाय न तुष्टयइत्यधिकमन्यत्रापि विस्तरः। वियोगमिति। तथैवं सत्यणु हि जीवम्प्रतिदेहभिन्नं शरीरसंयोगवियोगयोग्यमित्येवंजन्ममरणादिसंसृतिरूपदुःखसंयोगस्य वियोगमित्यर्थः। न पुनरावर्त्तते न पुनरावर्त्तं तइत्यादिश्रुत्यन्तरादिति भावः ॥ २३ ॥ शनैश्शनैरिति। तद्यथा। यथायथा प्रत्यगवस्थितं मनस्तथातथा सुञ्चति बाह्यवासनामित्यादिरीत्या शनैश्शनैरुपरमेदिति तात्पर्य्यम्। धर्ममेघाख्यस्येति। तद्यथा, वर्षत्येष यतो धर्मान्नतधारास्सहस्रशः धर्ममेघमिमम्प्राहुस्समाधिं योगवित्तमा इत्यादि द्रष्टव्यम्। ॥ २४ ॥ २५ ॥ सम्प्रज्ञातेति। इह तयोर्लक्षणन्त्वित्थम्। सम्प्रज्ञातो भवेद्यत्र वि-]

श्चरति मनश्चञ्चलमस्थिरम् । ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥ २६ ॥ प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् । उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥ २७ ॥ युञ्जन्नेवं सदात्मानं योगी विगतकल्मषः । सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ॥ २८ ॥

स्याद्विषयाकारतापि स्यादित्याह । यतोयत इति । तत्रैवंसति शब्दादीनाञ्चित्तविक्षेपहेतूनां मध्ये यतोयतो यस्माद्यस्मान्निमित्ताच्छब्दादेर्विषयाच्च यतोऽस्थिरमत एव चञ्चलम्विक्षेपाभिमुखं सन्मनो निश्चरति ततस्ततो निद्राया लोकवार्त्तायाश्चानवसरं दत्वैतन्मनो नियम्यात्मन्येव यथोक्ते वशं नयेदित्यर्थः ॥ २६ ॥ एवं योगाभ्यासबलादात्मन्येव परे शिवे मनः प्रशाम्यतीत्याह । प्रशान्तेति । एवन्तर्ह्यौदासीन्यामृतेनापि वर्द्धमाने दिनेदिने । उन्मूलिते मनो मूले जगद्वृक्षः पतिष्यतीत्यादिरीत्या कामादिभिः प्रशान्तमनसं हि यत एनं योगिनमुत्तमं सुखं प्रशान्तरजसम्ब्रह्मभूतमकल्मषं शिवमुपैतीत्यर्थः । यथा मनः प्रशमने शममोक्ष एवावशिष्यतइत्यादि योगवाशिष्ठादपीत्यवधार्य्यम् ॥ २७ ॥ तथोक्तन्ब्रह्मसुखमेव योगिनस्स्फुटीकरोति । युञ्जन्निति । एवमिह मनसैवेन्द्रियग्राममित्याद्युक्तक्रमेण प्रणवाद्यभ्यासपूर्वकमात्मानं शिवं युञ्जन्योगी विगतकल्मषस्सन्सुखेनानायासेन ब्रह्मसंस्पर्शजं सुखमत्यन्तमृतिव्याप्त्या बुद्धिग्राह्यमतीन्द्रियं यदुक्तन्तत्समश्नुतइत्यर्थः ॥ २८ ॥ ननु ज्ञानचक्षुषा प्राप्ततत्वः कथमात्मानं शिव-

---

षयाकारता क्वचित् । तन्निवृत्तेतरः प्रोक्तो यत्र ब्रह्मैव भासतइत्यवधेयम् ॥२६॥ मनः प्रशमन इति । ननु किन्तर्हि मनसः स्वरूपमितिचेच्छृणु । तत्र त्वं सोहमिदं तन्मे एतावन्मात्रकं मन इत्युक्त्वा सत्सङ्गो वासना त्यागो ऽध्यात्मविद्याविचारणा । प्राणस्पन्दनिरोधश्चेत्युपायास्तस्य जय इत्यादि बहुग्रस्तन्निराकरणार्थमप्युक्तं द्रष्टव्यम् ॥ २७ ॥ ब्रह्मसंस्पर्शजमिति । समाधिनिर्धूतमलस्य चेतसो निवेशितस्यात्मनि यत्सुखम्भवेदित्यादिश्रुतेः स्पर्शयोगस्तु नामैष योगिनामपि दुर्लभ इत्यादिस्मृतेश्चेत्यर्थः ॥ २८ ॥ ननु घोरं जाग्रन्मयचित्तं मूढं स्वप्ने व्यवस्थितं,

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥२९॥
यो मां पश्यति सर्वत्र सर्वञ्च मयि पश्यति ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्य-
ति ॥ ३० ॥ सर्वभूतस्थितं यो मां भजत्येक-
त्वमास्थितः । सर्वथा वर्त्तमानोपि स योगी

म्पश्यतीत्याह । सर्व्वेति । तत्रैवंसति विश्वं दर्प्पणदृश्यमाननगरीतुल्यं निजा-न्तर्गतम्पश्यन्नात्मनि मायया वहिरिवोद्भूतं यथा निद्रयेत्यादिरीत्या सर्व्व-भूतस्थमात्मानम्परमशिवं सर्वभूतानि चात्मनीति योगयुक्तात्मा सर्व्वत्र समदर्शनस्स-न्समीक्षतइत्यर्थः ॥ २९ ॥ अथ यस्य देवे परा भक्तिर्यथा देवे तथा गुराविल्या-दिश्लोकरूपया श्रुत्या स्वस्यापि तद्रूपत्वेनाह । यो मामिति । एवंसति ब्रह्मतम्परा-दाद्योन्यत्रात्मनो वेदक्षत्रपरादाद्योन्यत्रात्मनो वेदेत्यादिवृहदारण्यकश्रुत्या यस्तु परम-शिवज्ञानी स सर्व्वम्प्रपञ्चजातं स्वस्मिन्पश्यन्मामपि सर्व्वत्र पश्यति सर्व्वञ्च म-यि सर्वत्र पश्यति सर्वं च मयि स्फूर्तिरूपेण पश्यति तथा च तस्याहं न प्रणश्यामि नादृश्यो भवामि स च सोपि मे न प्रणश्यतीति परमार्थः ॥३०॥ अथ दत्तात्रेयमयं शान्तं शिव-म्विद्धि सनातनमित्यादिस्मृतिन्यायेन गुरुदैवतयोरेकत्वेनाप्याह । सर्व्वभूतेति । ए-वन्तर्हिं सीताञ्च पार्व्वतीम्पश्येद्रामञ्चैव त्रिलोचनमित्यादि रामरहस्योपनिषद्री-त्येहापि तावत्स्वयमेकत्वमास्थितोपि यो मां सर्व्वभूतस्थितं शिवरूपम्भजति स

---

शान्तं सुषुप्तिमापन्नन्त्विभिर्हीनं स्वतश्चवेदिति चावस्थातीतं शिवमद्वैतन्तु रो-यञ्चथञ्च न चक्षुषा विजानीयादित्याग्रहते । नन्विति । ननु ज्ञानचक्षुषा कथ-मिदम्प्रपञ्चजातम्पश्यतीति सर्वं वसतीत्यादिनावधार्य्यम् ॥ २९ ॥ स्वस्यापी-ति । इहापि नात्मनात्मानमपि शिवम्विजानीयादित्युक्तम्भवति कथमन्यज्ञाना-दन्यगतानर्थस्य निवृत्तिरिति गूढाकूतमवश्यमभ्युपगन्तव्यम् । ब्रह्मतमिति । तत्र तावद्ब्रह्म ब्राह्मणास्तम्पुरुषम्परादात्कौ वल्मात्मस्वन्विनञ्च्यैयाद्योन्यत्रात्मनो वे-देत्यर्थः । एवं क्षत्रं नाम क्षत्रियस्तम्परादादित्यादिरनेकधा ॥ ३० ॥ एवमिहा-पि सर्व्वात्मत्वमुपपादयन्नाह । अथेति । एवन्तर्हिं देहभावेन दासोहं जीवभा-

मयि वर्त्तते ॥ ३१ ॥ आत्मौपम्येन सर्वत्र समम्पश्यति योऽर्ज्जुन । सुखं वा यदि वा दुःखं स योगी परमो मतः ॥ ३२ ॥ अर्ज्जुन उवाच ॥ योयं योगस्त्वया प्रोक्तस्साम्येन मधुसूदन । एतस्याहं न पश्यामि चञ्चलत्वात्स्थितिं स्थिराम् ॥ ३३ ॥ चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम् । तस्याहं निग्रहं

घ सर्व्वथा वर्त्तमानो नित्यमुक्तोपि योगी मयि वर्त्ततएव तथाहं ग्रन्थकर्त्ता तथान्योपि तत्वज्ञ इति सोहं स च त्वं स च सर्व्वमेतदात्मस्वरूपन्त्यज भेदमोहमित्यादि स्मृत्युक्तरीत्यावधार्य्यम् ॥ ३१ ॥ ननु गुरुशिष्ययोः क्षुद्राक्षुद्रयोश्च कथमेकत्वमित्याह । आत्मौपम्येनेति । तत्रैवंसति समाधेर्व्युत्थानकाले जीवन्मुक्तो योगी सुखमनुभवन्नपि सर्व्वत्र प्राणिजातेषु सुखम्वा यदि वा दुःखमात्मौपम्येन यः पश्यति स एव योगी मम परमो न तु सामर्थ्याधिक्याज्जगद्विच्छेदकारीत्यवधेयम् ॥ ३२ ॥ अत्रोक्तमेवार्थमाक्षिपन्नाह । योयमिति । तत्र तावद्योयं योगस्त्वया साम्येन समत्वेन प्रोक्तो हे मधुसूदन तदेतस्य योगस्य स्थितिं स्थिरां न पश्यामि मनसश्चञ्चलत्वादिति भावः ॥ ३३ ॥ एतदेव पुनः स्पष्टमुपपादयन्नाह । चञ्चलं हीति । तत्र हे कृष्ण हीति प्रसिद्धमेवैतद्यतो मनश्चञ्चलम्पुनश्च प्रमाथि प्रमथितुं शीलमस्य तत्पुनश्च बलवद् दृढञ्चेति तस्याहं

---

वे तदंशकः स्वात्मभावे तदेवाहमिति जानीहि सत्तमेत्यादिरीत्या परस्परं सर्व्वस्य परब्रह्मरूपत्वे स्थिते सर्व्वं खल्विदं ब्रह्मेत्यवधारितम्भवतीति भावः ॥ ३१ ॥ आत्मौपम्येनेति । तद्यथा, ज्ञानात्पूर्व्वं यथा स्वस्य सुखं दुखं ह्यभूत् खलु तथैवान्यशरीरेपि विज्ञातव्यम्विवेकिभिरित्यादि बोध्यम् ॥३२॥ निग्रहंमन्यइति । नन्वेवन्तर्हि मनसश्चञ्चलत्वमेव कथं ब्रह्मणाकृतमिति चेच्छृणु । स्तब्धीभूतो यदि स्याद्वै लौकिकवैदिकन्त्विदङ्कार्य्यं न स्यात्ततो नित्यञ्चञ्चलं हि मनः कृतमिति । तच्चैवं सति समुद्रं शोषयेद्यस्तु टिट्टिभो हि यथा पुरा निर्द्दीपं दीपितङ्कुर्य्यात्स्थितन्तस्य मनो भवेदित्याद्युक्त्या मनसो निग्रहं मन्ये न योगमित्याशयः ॥३३॥

मन्ये वायोरिव सुदुष्करम् ॥ ३४ ॥ श्रीकृष्ण उवाच ॥ असंशयं महाबाहो मनो दुर्निग्रहञ्चलम् । अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥ ३५ ॥ असंयतात्मना योगो दुष्प्राप इति मे मतिः । वश्यात्मना तु यतता शक्यो वाप्तुमुपायतः ॥ ३६ ॥ अर्ज्जुन उवाच ॥ अयतिश्श्रद्धयोपेतो योगाच्चलितमा-

साधारणो भूत्वा निग्रहं मन्ये न योग्यामित्यर्थः । यतस्तन्मनो वायोरिव निग्रहीतुं सुदुष्करमित्यर्थः ॥ ३४ ॥ अथ तमाक्षेपम्परिहरन्नाह । असंशयमिति । तत्रैवं सति सम्यग्विदितन्ते चेष्टितं यन्मनो निग्रहीतुं शक्ष्यसीति सन्तोषप्राबल्येन सम्बोधयति हे महाबाहो इति यतो दुर्न्निग्रहञ्चञ्चलमपि मनोऽभ्यासेन वैराग्येण च गृह्यतइत्यर्थः । एवमेवाभ्यासवैराग्याभ्यान्तन्निरोध इति योगसूत्रेप्युक्तमवधार्य्यम् ॥ ३५ ॥ नन्वयत्नसाध्य एव योगः कुतो नेति चेन्नैवमित्याह । असंयतात्मनेति । एवतन्र्ह्यात्मा वारे द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्यादिश्रुतेरात्मोपलब्ध्यर्त्थं श्रवणमनननिदिध्यासनादेरावश्यकत्वे स्थिते न संयतो निरुद्ध आत्मान्तःकरणं येन तेनासंयतात्मना योगो दुष्प्राप इति मे मतिर्न्निश्चितेत्यर्थः । ननु कथन्तर्हि स देवः प्राप्यो भविष्यतीत्याह । वश्यात्मनेति । तत्र तावद्वैराग्यपरिपाकेनोपरतौ सत्याम्वासनाक्षये सति वश्यस्स्वाधीनो विषयपारतन्त्र्यशून्य आत्मान्तःकरणं यस्य तेन तु शक्यो वाऽवश्यमाप्तुन्तथा गुरूपदिष्टयोगयुक्तितश्चेत्यर्थः ॥ ३६ ॥ ननु रोगादालस्यात्प्रारब्धभोगप्राबल्या

---

॥ ३४ ॥ ३५ ॥ अयत्नसाध्य एवेति । तथा च स्वतश्चेदीश्वरस्यास्तिश्चेदित्थं बहुधा-ध्वन नैव कोपीह दुःखी स्यान्मायैषा किङ्करिष्यतीत्यादिस्मृत्या सायिकस्य बन्धस्यावश्यकत्वे स्थिते तस्य विनिर्मुक्तिर्यत्नस्विना न भविष्यतीति तदावश्यकत्वं स्फुटीकृतम् । गुरूपदिष्टयोगेति । तद्यथा, वेदान्ततर्कोक्तिभिरागमैश्च नानाविधैश्शास्त्रकदम्बकैश्च । ध्यानादिभिस्सत्करणैरपि नैव गम्यश्चिन्तामणिस्त्वेकगुरुं विहायेत्यादि द्रष्टव्यम् ॥ ३६ ॥ ३७ ॥ नश्यतीति । नन्विह सुदाजटेत्याद्यु-

नसः। अप्राप्य योगसंसिद्धिं काङ्गतिं कृष्ण गच्छति ॥ ३७॥ कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति। अप्रतिष्ठो महाबाहो विमूढो ब्रह्मणः पथि॥ ३८॥ एतन्मे संशयं कृष्ण छेत्तुमर्हस्यशेषतः। त्वदन्यस्संशयस्यास्य च्छेत्ता नह्युपपद्यते॥ ३९॥ श्रीकृष्ण उवाच॥ पार्थ नैवेह नामुत्र विनाशस्तस्य वि-

द्या रुरुक्षोस्सिद्ध्यभावश्चेत्तस्य का गतिरित्याह। अयतिरिति। तत्रैवंसति श्रवणादीनि कर्त्तुमारभमाणश्श्रद्दधानोऽप्यायुषोऽल्पत्वेन यत्नापरिज्ञानाद्वाऽलब्धज्ञानपरिपाकत्वेन योगाच्चलितमानसः पुरुषोऽप्राप्य योगसिद्धिं सुगतिं दुर्गतिम्वा काङ्गतिं हे कृष्ण गच्छतीति प्रश्नः॥ ३७॥ अथैतदेव संशयबीजम्विवृणोति। कच्चिदिति। तत्र तावत्कच्चित्किङ्कर्म्ममार्गाज्ज्ञानमार्गाच्चोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यत्यपि तु न नश्यतीत्यर्थः। यतो ब्रह्मणः पथि परब्रह्मणाशिवतत्वस्य विचारे विमूढोऽत एव चाप्रतिष्ठ इत्यर्थः॥ ३८॥ तत्रोपदर्शितसंशयच्छेत्तारम्प्रतिजानीते। एतन्मइति। एवं सति हे कृष्ण एतत्पूर्वोक्तं मे संशयमशेषतस्त्वमेव च्छेत्तुमर्हसि यतस्त्वदन्यस्संशयस्यास्य छेत्ता नह्युपपद्यते ममान्यश्शिवैकतत्वशास्ता गुरुस्त्वत्तो नास्तीत्यर्थः॥ ३९॥ तत्रोपदर्शितसंशयापहरणाय तावदाह। पार्थेति। एवन्तर्हि हे पार्थ तस्यारुरुक्षोर्य्योगिनो नैवेह नामुत्र वा यथाशास्त्रङ्कृतवतोस्य विनाशो विद्यतइत्यर्थः। ननूभयत्रापि तस्य विनाशो नास्तीत्यत्र को हेतुरित्याह। नहीति। हि यस्मात्कल्याणकृच्छास्त्रविहितकारी कश्चिदपि दुर्गतिं हे तात हे प्रिय न गच्छति कि-

---

न्नोभयतो भ्रष्टश्छिन्नाभ्रमिव नश्यत्यपि तु वैदिकमर्थ्यादया तिष्ठन् सा ब्राह्मी स्थितिरिति स्मृतिन्यायेन परीक्षिदिव न नश्यतीत्याशङ्काकूतमवधार्यम्॥ ३८॥ शास्तेति। सर्वोपनिषदो गावो दोग्धा गोपालनन्दन इत्यादि स्मृतिन्यायेनामृतशब्दाभिधेयस्य शिवैकतत्वस्य शास्ता गुरुर्मम नास्तीत्याशयः॥ ३९॥ कल्याणकृदिति। तद्यथा, रमणीयचरणाः रमणीयां योनिमापद्यन्ते पुण्यचरणाः पुण्यां योनिमा-

द्यते । नहि कल्याणकृत्कश्चिद् दुर्गतिन्तात ग-
च्छति ॥ ४० ॥ प्राप्य पुण्यकृतां ल्लोकानुषि-
त्वा शाश्वतीस्समाः । शुचीनां श्रीमताङ्गेहे
योगभ्रष्टोभिजायते ॥ ४१ ॥ अथ वा योगि-
नामेव कुले भवति धीमताम् । एतद्धि दुर्ल-
भतरं लोके जन्म यदीदृशम् ॥ ४२ ॥ तत्र

मुत वक्तव्यन्त्वं मम प्रियो गमिष्यसीति भावः ॥ ४० ॥ तदेवं योगभ्रष्टस्य विनाशाभावेपि तस्य शुभकारित्वेन किम्भविष्यतीत्याह । प्राप्येति । तत्रैवं सत्यर्चिरादिमार्गेण पुण्यकृतान्ब्रह्मलोकादीन्प्राप्य तत्परिमाणेन शाश्वतीः समाः संवत्सरानुषित्वा वा समनुभूय शुचीनां श्रीमतां विभूतिमतां गेहे कुले भोगवासनावशेषभावादजातशत्रुजनकादिवद्योगभ्रष्टोभिजायतइत्यर्थः ॥ ४१ ॥ यदि श्रद्धादिगुणाधिक्याद्भोगवासनाविरहस्तदा त्वाह । अथ वेति । तथा चेह जन्मापि चेत्तर्हि योगिनाम्ब्रर्षीणाङ्गृहे तत्रापि धीमतां शिवैकतत्वनिष्ठानाम्ब्रह्मविद्यावताङ्गृहे भवतीत्यर्थः । तदुक्तम्पाद्मे । तद्यथा जातस्य जायमानस्य गर्भस्थस्यापि देहिनो मा भून्मम कुले जन्म यस्य शम्भुर्न्न दैवतमित्यादिरामचन्द्रम्प्रत्यगस्तिवाक्यमभिप्रेत्याह । एतद्धीति । श्रुतिश्च, धिग्भस्मरहितम्भालं धिग् ग्राममशिवालयं, धिगनीशार्च्चनं जन्म धिग्विद्यामशिवाश्रयामित्यादि बहुशः ॥ ४२ ॥ ननु कदा चिदिह जन्मोत्तरं संसर्गाद्बुद्धिमतो-

---

पद्यन्तइत्यादिस्मृतेरिति भावः ॥ ४० ॥ विनाशाभावेपीति । स चायं योगाच्चलितमानसत्वेन योगभ्रष्टो नतु मुद्राजटेत्यादिवत्स्वधर्माच्चलितमानस इत्यतस्तस्य विनाशाभावेपीत्याशयः । अर्च्चिरादीति । एवन्तर्हि द्वाविमौ पुरुषौ लोके सूर्य्यमण्डलभेदिनौ । निष्कामो योगयुक्तो यस्सङ्ग्रामेष्वपलायित इत्यादिस्मृतेर्य्योसावादित्ये पुरुषस्सोहमस्मीत्यादिश्रुतेश्चेत्यवधेयम् ॥४१॥ शिवतत्वेकेति । तद्यथोक्तम् । स्वेषु स्वेषु च धर्म्मेषु यत्र वर्णाश्रमास्तथा । निष्ठावन्तो हि तिष्ठन्ति शिवतत्वकपालिनः । श्रुतिहीना द्विजा नैव दानहीना न भूमिपाः शिवहीना क्रिया नैव कलिस्तत्र न चेत्तदित्यादिस्मृत्यन्तरादपीत्याशयः ॥ ४२ ॥ यतते

तं बुद्धिसंयोगं लभते पौर्वदेहिकम् । यतते च
ततो भूयस्संसिद्धौ कुरु नन्दन ॥ ४३ ॥ पू-
र्वाभ्यासेन तेनैव ह्रियते ह्यवशोपि सः ।
जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्त्तते ॥ ४४ ॥
प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः ।
अनेकजन्मसंसिद्धस्ततो याति पराङ्गतिम् ॥ ४५ ॥

पि वैपरीत्यं स्यादित्याह । तत्रेति । तथा चेह द्विःप्रकारेपि जन्मनि पूर्व्वदेहे भवम्पौर्व्वदेहिकं शिवनिष्ठापूर्व्वकब्रह्मात्मैक्यया बुद्ध्या संयोगन्तं लभतइत्यर्थः । तत्र न केवलम्पुनर्ज्जन्मैव लभते किन्तु भूयो जन्म प्राप्य जीवात्मैक्यज्ञानलक्षणा या सिद्धिस्तदर्थं यतते चेत्यर्थः ॥ ४३ ॥ नन्विह जन्मनि कदाचिज्जनसंसर्गाद्विषयान्तरेपि तस्य प्रवृत्तिस्स्या,न्नेत्याह । पूर्व्वाभ्यासेनेति । एवं तर्हि पूर्व्वजन्मकृताभ्यासेन तेनैव हि यतो दृढाभ्यासेनावशोपि सुकृतेस्मिंश्छिवार्च्चने ब्रह्मविद्याविचारे च ह्रियते प्राप्यते यतो योगस्य जिज्ञासुरपि शब्दवेदस्तमतिक्रम्य परम्ब्रह्म वर्त्तते प्राप्यतइत्यर्थः । तद्यथा । द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परञ्च यच्छब्दे ब्रह्मणि निस्स्नातः परब्रह्माधिगच्छतीत्यादिश्रुत्यन्तरादिति बोध्यम् ॥ ४४ ॥ ननु तदन्तरम्पूर्व्वसंस्कारवशादपीह जन्मनि किङ्करिष्यतीत्याह । प्रयत्नादिति । एवं सति योगभ्रष्टस्तु पूर्व्वोपचितसंस्कारप्राबल्येन प्रयत्नाद्यतमानस्तु स योगी संशुद्धिकिल्विषस्सन्ब्रह्मविद्यामवाप्नोतीत्यर्थः । यतश्चानेकजन्मसंसिद्धस्ततो याति पराङ्गतिमित्यस्यायमेवार्थ इति बोध्यम् ॥ ४९ ॥ ननु पू-

---

चेति । एवन्तर्हि दिक्कालाद्यनवच्छिन्ने ऽनन्तचिन्मात्रमूर्त्तये यतते चेत्याशयः ॥ ४३ ॥ नेत्याहेति । अत एव महानुभावसम्पर्कात्संसारार्णवलङ्घने । युक्तिस्सम्पद्यते राम दृढा नौरिव नाविकादित्यादियोगवाशिष्ठेपि दर्शितम् । शब्दे ब्रह्मणीति । तदेतदेव शास्त्रसज्जनसम्पर्क इत्यादौ सप्तभूमिकायामप्युक्तन्द्रष्टव्यम् ॥ ४४ ॥ ब्रह्मविद्यामिति । तदेतदुक्तन्तु निमिषार्द्धं न तिष्ठन्ति वृत्तिं ब्रह्ममयीं विना यथा तिष्ठन्ति ब्रह्माद्यास्सनकाद्याश्शुकादय इत्येवंरूपा योगिनः पूर्व्वजन्मार्ज्जितसंस्कारबलादेव प्रव्रजन्त्यकृतोद्वाहाः परम्वैराग्यमाश्रिताः । गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषा इत्याद्यवधेयम् ॥ ४५ ॥ अधिक इत्यर्थः

तपस्विभ्यो ऽधिको योगी ज्ञानिभ्योपि मतो-
धिकः। कर्मिभ्यश्चाधिको योगी तस्माद्योगी
भवार्जुन ॥ ४६ ॥ योगिनामपि सर्वेषां
मद्गतेनान्तरात्मना । श्रद्धावान्भजते यो
मां स मे युक्ततमो मतः॥ ४७॥ इति श्री-
मद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योग-
शास्त्रे श्रीकृष्णार्जुनसंवादे ऽध्यात्मसंयम-

र्वत्र बहुशो योगिनाम्वृत्तमुक्तन्तेषु कस्तर्हि श्रेष्ठ इत्याह । तपस्विभ्य इति । तत्र तावत्तपस्विभ्यः कृच्छ्रचान्द्रायणादितपःकर्तृभ्यो योगी योगाभ्यासशीलोधिक इत्यर्थः । एवं ज्ञानिभ्यश्शास्त्रजन्यज्ञानसंस्कारयुक्तेभ्योप्यधिको योगीत्यर्थः । तथा कर्म्मिभ्यस्सन्ध्या स्नानं जपो होमो देवतानाञ्च पूजनमातिथ्यम्वैश्वदेवञ्च षट् कर्म्माणि दिनेदिनइति यत्कर्म्मयुक्तेभ्यश्चाधिको योगीति सर्व्ववासनाक्षयमूलो योगाभ्यासस्तदर्थं योगी योगाभ्यासशीलस्तत्सिद्धिभाक् च गुरूपदिष्टमार्गेण भवेति परमार्थः ॥ ४६ ॥ एवन्तर्हि वेदान्ततर्कोक्तिभिरागमैश्च नानाविधैः शास्त्रकदम्बकैश्च ध्यानादिभिस्सकरणैरपि नैव गम्यं चिन्तामणिन्त्वेकगुरुम्विहायेत्यादिस्मृत्या सर्व्वासिद्धिप्रयोजकत्वं ज्ञानोपदेष्टुर्गुरोरेवेत्यभिप्रेत्याह । योगिनामिति । तत्रैवंसति यस्य देवे परा भक्तिर्य्यथा देवे तथा गुरावित्यादिश्रुत्या मदाज्ञानुकूलेनान्तरात्मना यो मां शिवतत्त्वोपदेष्टारङ्गुरुम्भजते नाम निर्व्याजी स्वीयधर्म्मज्ञो वेदज्ञस्तत्त्वपारगो विरक्तो वेषानिर्म्मुक्तस्त्रिभिर्य्योगी मुनिर्भवेदिति स्मृतिन्यायेन मम वर्त्मानुरोधेन मदाज्ञाङ्कुरुते स मे युक्ततमो मत इति शिवम् ॥ ४७ ॥ इति श्रीमत्पदवाक्यप्रमाणयोगिवर्य्यविप्रराजेन्द्रविरचिते तत्त्वैकदर्शने

---

ध्वति। तदुक्तम्। पूजाकोटिसमं स्तोत्रं स्तोत्रकोटिसमो जपः जपकोटिसमं ध्यानं ध्यानकोटिसमो लय इत्यादिरीत्याप्यधिको योगीत्याशयः ॥ ४६ ॥ मम वर्त्मानुरोधेनेति। तद्यथा बहुशश्शिवलिङ्गानि स्थापयामास भूतले। रामचन्द्रस्तथा कृष्णो ब्रह्मापि चतुराननः। प्रह्लादेशो ध्रुवश्च वाल्मीकिश्वरस्तथा लक्ष्मीश्चो द्रौपदीशश्च रुक्मिणीशाद्यनेकशः इत्यादि प्रत्यक्षतोपि द्रष्टव्यम् ॥ ४७॥

योगी नाम षष्ठोऽध्यायः॥*॥ श्रीकृष्ण उवाच ॥
मय्यासक्तमनाः पार्थ योगं युञ्जन्मदाश्रयः।
असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु।
॥ १ ॥ ज्ञानन्ते ऽहं सविज्ञानमिदम्वक्ष्याम्यशेषतः। यज्ज्ञात्वा नेह भूयो ऽन्यद् ज्ञातव्य-

भाष्ये संयमयोगनिरूपणं नाम षष्ठोध्यायः ॥ * ॥ शास्त्रजन्यम्भवेद् ज्ञानम्विज्ञानन्त्वात्मबोधजम्। तयोर्न्निरूपणञ्चाद्य सप्तमे त्विह दर्शये॥ अथ गुरुदैवतयोरभेदेनैवोपासनायुक्तेत्यभिप्रेत्याह। मयीति। तथा चेह मन्ये त्वाङ्कालमीशानमित्यादिस्मृत्या परमशिवभिदमाश्रित्य महादेवञ्चिदाकाशङ्गुरूणाम्प्रथमङ्गुरुमित्यादिस्मृत्यापि सर्व्वदेवगुर्व्वभिन्ने मयि परमशिवे त्वासक्तम्मनो यस्य स तथाभूतो मदाश्रयश्च सन्योगं युञ्जन्सर्व्वं खल्विदम्ब्रह्मेति विज्ञानं सोहं स च त्वं स च सर्व्वमेतदितिरीत्या समग्रं मामेव यथा स्यात्तथा ज्ञास्यसीति तत्त्वतश्शृण्वित्यर्थः ॥ १ ॥ ननु ज्ञास्यसीत्युक्तेः परोक्षमेव तद्ज्ञानं स्यादित्याशङ्काम्व्यावर्त्तयन्नाह। ज्ञानमिति। एवन्तर्हि यतो विज्ञानेन सहितमतो ऽपरोक्षमेवेदं ज्ञानं शास्त्रजन्यमपि ते तुभ्यमशेषतो वक्ष्यामीत्यर्थः। तथा च यज्ज्ञात्वा भू-

---

इति श्रीमद्योगिवर्य्यविप्रराजेन्द्रात्मजविरचिते भाष्यप्रदीपे षष्ठोध्यायः ॥ * ॥
ननु शिवो देवो द्विजो ब्रह्मा क्षत्रियस्तु हरिः स्मृतः इन्द्रो वैश्यस्तथैवान्ये यथायथाश्शूद्रजातय इत्यादिभारतोक्त्या कथं ब्रह्मादीनामिह देवत्वमित्याह। मन्य इति। तत्र मन्ये त्वां कालमीशानमनादिनिधनम्विभुं समञ्चरन्तं सर्व्वं च भूतानां यस्मिथः कलिरिति महाभारतोत्तरं हस्तिनापुरे श्रीकृष्णम्प्रति कुन्तीप्रभृतीनास्वचनम्। तत्रापि त्वां कालः कालकरो हर इत्यादिस्मृत्या त्वां कालमीशानं मन्ये न तु देवकीसुतं यतस्त्वदाशिवादिह भूतानाङ्कलिः कलहस्त्वत्प्रसादेन पाण्डवानां जयश्चेति हि तदर्थश्च। अत एव पादार्घ्येण स्वयम्विष्णुस्त्वाचान्तेन प्रजापतिः भोजनेन महादेवस्त्रयस्तृप्यन्ति ब्राह्मणैरित्यादिस्मृत्या ब्राह्मणानाम्भूदेवत्ववद्ब्रह्मादीनामपीह सर्व्वेषां शिवध्यानार्च्चनज्ञानादेवत्वञ्च प्रजापतेरित्यादिस्मृत्या का क्षतिरित्यवधेयम् ॥ १ ॥ तत्रैवं सतीति। तत्र तावत्षष्ठ्यर्थे सप्तमीत्याह। विश्व इति। तथा चेह विश्वस्य विश्वाधिकस्यामृतस्य मृत्युञ्जयत्वे नास्तः

मवशिष्यते ॥ २ ॥ मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये । यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥ ३ ॥ भूमिरापो ऽनलो वायुः खं मनो बुद्धिरेव च । अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ ४ ॥ अपरे-

यः पुनरपि गुर्वन्तराज्ज्ञातव्यं नावशिष्यतइत्याशयः ॥ २ ॥ ननु किमस्ति यदनेकजन्मकृतसुकृतसम्पादितं शिवैकतत्त्वममृतशब्दाभिधेयं यतो ज्ञातव्यं नावशिष्यतइत्याह । मनुष्याणामिति । तत्रैवंसति शृण्वन्ति विश्वे अमृतस्य पुत्रा आये धामानि दिव्यानि तस्थुरित्यादिश्रुत्यामृतशब्दाभिधेयं सर्व्वोत्तमं शिवङ्गीतामृतम्प्राप्तुङ्कश्चिदेव मनुष्याणां सहस्रेष्वनेकविधेषु यतति तत्र श्रवणादिकर्तॄणां यततामप्यनेकेषाङ्कश्चिदेव तत्त्वतो नाम परमशिवाभेदेन वेत्तीत्यर्थः ॥३॥ ननु कस्त्वं यतस्तत्त्वत एव त्वां ज्ञात्वा मुक्तिमाप्स्यामि न स्वरूपत इति चेत्तत्राह । भूमिरिति । एवं सत्वं रजस्तमो विष्णो जगदण्डं जनार्दन । तस्य कारणमाहुस्त्वां साङ्ख्यास्तत्वविदो हरे इत्यादिहरिवंशोक्त्या हिरण्यगर्भाख्यस्य महाविष्णोर्भूमिराप इत्याद्यष्टधापि प्रकृतिर्मत्त एव विभिन्नाः पृथग्भूता इत्यर्थः ॥ ४ ॥ एवं श्रोतारमभिमुखीकृत्यापराम्प्रकृतिम्प्रदर्श्य क्षेत्रज्ञलक्षणाम्पराम्प्रकृतिमप्युपन्यस्यति । अपर इति । तत्रैवं सति सांख्यैर्हि पञ्चतन्मात्राण्यह-

---

शब्दाभिधेयस्य च शिवस्य पुत्रा गणेश्वरादयो ये दिव्यानि धामान्यातस्थुरिति तं सदाशिवस्तद्दर्शनाय जगत्यां दध्यचतं शिवायोक्तमित्यादि शृण्वन्तीति मन्त्रार्थः । स्कान्दे स्मृतिश्च, शिवलोकाच्च गोलोकादुमालोकाच्च सर्व्वशः । कुमारलोकाद्वैकुण्ठात्सत्यलोकात्समन्ततः । तपोजनमहर्भ्यश्च सर्व्वे स्वर्लोकवासिनः । स्नातुं माघे समायान्ति प्रयागमरुणोदयइत्यादिस्मृत्यापि परमशिवलोकस्य सर्व्वतः परत्वं दर्शितम् ॥ ३ ॥ मत्त एवेति । एवंसति बुद्धिर्मनोहच्छित्तञ्च मूलाख्या प्रकृतिस्तथा । द्विधेन्द्रियाणि भूतानि वायवः पञ्चविंशति रित्यादिस्मृत्या पञ्चविंशतितत्त्वेषु मूलभूतादक्षरात्मनो महाविष्णोर्मत्त एव यच्च किंच जगत्यचेति श्रुत्याप्यष्टधा विभिन्ना इत्यधिकमन्यत्र विस्तरः ॥ ४ ॥ क्षेत्रज्ञलक्षणामिति । तत्र द्वासुपर्णा सयुजा सखाया समानं वृक्षम्परिषस्वजाते

यमितस्त्वन्याम्प्रकृतिम्विद्धि मे पराम्। जीव-
भूतां महाबाहो ययेदं धार्यते जगत्॥ ५ ॥
एतद्योनीनि भूतानि सर्व्वाणीत्युपधारय ।
अहं कृत्स्नस्य जगतः प्रभवः प्रलय-
स्तथा ॥ ६ ॥ मत्तः परतरं नान्यत्किञ्चिदस्ति

ह्ङ्कारो महानव्यक्तमित्यष्टौ प्रकृतयः तथा पञ्चमहाभूतानि पञ्च कर्म्मेन्द्रियाणि पञ्च ज्ञानेन्द्रियाणि चोभयसाधारणं मनश्च तत्र षोडशविकारा अप्युच्यन्तइत्येतान्येव चतुर्विंशतितत्वानीति सविकारात्मिका परेयम्प्रकृतिरुक्ता। अथेतः परन्त्वन्यां जीवभूताम्प्रकृतिम्विद्धीत्यर्थः। तत्र हे महाबाहो यया प्रकृत्या ममात्मरूपया क्षेत्रज्ञलक्षणयेदं जगदचेतनं धार्य्यते ऽनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति श्रुतेरपीति भावः। एवंसति द्वासुपर्णा सयुजा सखायावित्यादिश्रुतेस्समष्टिचिदम्बराभासरूपेणाहमीश्वरो व्यष्ट्याभासरूपेण च जीव-इति प्रकृत्या तद्विकारान्तैश्च सहितं सर्व्वम्प्रपञ्चजातं चिज्जडात्मकमहमेवेत्यवधेयम्॥ ५ ॥ ननु किमस्ति सर्व्वात्मकं स्वरूपन्तदाह। एतदिति । एवं सति यच्च किञ्च जगत्यत्रेत्यादिश्रुत्यापि परापरत्वरूपेण प्रागुक्ते क्षेत्रक्षेत्रज्ञलक्षणे प्रकृती योनिर्य्येषान्तान्येतद्योनीनि भूतानि सर्व्वाणि चेतनाचेतनात्मकानीत्युपधारय जानीहीत्यर्थः। एवमव्यक्तादीनि भूतानीति स्मृत्याहं सर्व्वेश्वरो मायोपाधिः कृत्स्नस्य सर्वस्य क्षेत्रक्षेत्रज्ञलक्षणस्य मायिकस्य प्रभव उत्पत्तिकारणम्प्रलयो विनाशकारणञ्चेत्यर्थः॥ ६ ॥ ननु यस्मादेवन्तस्मात्किमित्याह। मत्त इति। तत्रैवंसति हे धनञ्जय यथोक्तरीत्या मत्तः परतरङ्किञ्चिद्ज्ञातव्यं नास्ति ज्ञप्तिमात्रन्तु परंब्रह्म पृथगेवेत्यर्थः। न-

---

तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्यो ऽभिचाकशीति श्रुतौ समष्टिरूपेणैक एव हि भूतात्मा भूतेभूते व्यवस्थितः। एकधा बहुधा चैव दृश्यते जलचन्द्रवदित्येकधारूपेणावस्थितां चेतनलक्षणाम्प्रकृतिं महाविष्णुः साङ्ख्योक्तामिति समन्तरोक्तं न विस्मर्त्तव्यम्॥ ५॥ एवंसतीति। इह तु यदुक्तं द्वासुपर्णेति यदप्युक्तमेक एव हि भूतात्मेत्यादि तच्च तयोर्म्मिलित्वा चिज्जडात्मकत्वेन यच्च किञ्चेत्युक्तमित्याश्रित्यैवावान्तरभेदेन परापरत्वमभ्युपगन्तव्यमिति भावः॥ ६ ॥ पृथगेवेति। त-त्रैवंसतीह यच्च किञ्च जगत्यत्र दृश्यतइत्यादिश्रुत्या मत्तः परतरङ्किमपि विज्ञा-

**धनञ्जय। मयि सर्व्वमिदम्प्रोतं सूत्रे मणिगणा इव ॥ ७ ॥ रसोहमप्सु कौन्तेय प्रभास्मि शशिसूर्य्ययोः। प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु ॥ ८ ॥ पुण्यो गन्धः पृथिव्याञ्च तेजश्चास्मि विभावसौ। जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु ॥ ९ ॥ बीजं मां सर्व-**

नु किंरूपस्त्वं यतस्त्वमप्येवं मृद्घटादिवन्नामरूपात्मकं सर्व्वङ्कल्पितमित्याह। मयीति। एवन्तर्हि हिरण्यगर्भस्समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीदित्यादिश्रुत्या क्षेत्रक्षेत्रज्ञरूपेण विष्णुरेवाहं सर्व्वमिति बोध्यम् ॥ ७ ॥ नन्वबादीनां रसादिप्रोतत्वप्रतीतेः कथन्त्वयि सर्व्वमिदम्प्रोतमिति चेत्तत्राह। रसोहमिति। एवन्तर्हि रसादिरूपेणापि ममैव स्थितत्वात्पुण्यो मधुरो रसस्तन्मात्ररूपस्सर्व्वास्ववान्वनुगतश्चाहमेव हे कौन्तेय प्रभाप्रकाशश्शशिसूर्य्ययोरहमेवेत्यर्थः। एवं समस्तम्व्यस्तन्त्वां शरणद गृणात्योमिति पदमित्यादिस्मृत्या प्रणवबोध्यत्वम्परमशिवस्यैव तद्रूपत्वन्तु ममैवेत्योङ्कारो वै सर्व्वावागितिश्रुतेरोङ्कारस्य नामरूपात्मकत्वमपि सामान्यरूपेण ममैवेत्यभिहितम्भवति एवं खे व्योम्नि शब्दरूपेणाहमेवानुस्यूतो नृषु पौरुषम्पुरुषत्वञ्चाहमेवेति विशेषरूपेणावधार्य्यम् ॥८॥ एवमपरमप्याह। पुण्य इति। एवमिहापि पुण्यः पवित्रो गन्धो यः पृथिव्यां विभावसौ सूर्य्ये यत्तेजस्समष्टिव्यष्टिरूपेणेश्वरजीवरूपेण सर्व्वभूतेषु यज्जीवनं तपस्विषु यत्तपश्च तत्समस्तन्त्वहमेवेत्यर्थः ॥ ९ ॥ ततश्च किम्पर्य्यवसितमित्याह। बीज-

---

तत्त्वं नास्ति परन्तु ज्ञातृज्ञानज्ञेयविहीनन्तु यो वेदादौ स्वरः प्रोक्त इत्यादिश्रुतिवेद्यं शिवमद्वैतन्तुरीयं पृथगेवेत्यवधेयम् ॥ ७ ॥ नन्वस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकमाद्यन्त्रयं ब्रह्मरूपं जगद्बीजन्ततो द्वयमित्यादिश्रुत्या श्यामो दीर्घश्चतुर्बाहुरित्यादिवत्सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिश्रुत्याप्यस्तिभातीत्याद्युक्त्या शिवमद्वैतन्तुरीयमवधारितं सत्याह। तद्रूपत्वन्त्विति। अत एव हरिवंशे सदाशिववाक्यम्। तद्यथा। गोविन्द तव नामानि यानि लोके महान्त्यपि। तान्येव मम नामानि नात्र कार्य्या विचारणेत्यादिस्मृत्यापि सकलनाम्नामोङ्काररूपत्वेनोङ्कारस्य च सकलवाङ्मूलत्वाच्चेति स्पष्टमन्यदिति विवेकः ॥ ८ ॥

भूतानां विद्धि पार्थ सनातनम्। बुद्धिर्बुद्धिमता-
मस्मि तेजस्तेजस्विनामहम् ॥ १० ॥ ब-
लं बलवतामस्मि कामरागविवर्ज्जितम्। ध-
र्म्माविरुद्धो भूतेषु कामोस्मि भरतर्षभ ॥ ११ ॥
ये चैव सात्त्विका भावा राजसास्तामसा-
श्च ये। मत्त एवेति तान्विद्धि न त्वहन्तेषु ते
मयि ॥ १२ ॥ त्रिभिर्गुणमयैर्भावैरेभिस्सर्व-

मिति। तत्रैवंसति सर्व्वभूतानां स्थावरजङ्गमानां समष्ट्याभासरूपेणापि बीजं सक-
लसृष्टिप्रवर्त्तकं सनातनं हे पार्थ मामेव विद्धीत्यर्थः। एवं सर्व्वेषु प्राणिजातेषु
बुद्धिमतां मध्ये बुद्धिस्तेजस्विनां मध्ये तेजश्चाहमेवेत्यर्थः ॥ १० ॥
एवं यद्यपि सर्व्वरूपत्वं मेस्ति तथापीह विशेषरूपेणाह। बलमिति। तथा काम-
रागविवर्ज्जितम्बलवताम्बलमहमेव एवं सर्व्वभूतेषु धर्म्माविरुद्धः कामोप्यहमेवा-
स्मि हे भरतर्षभेत्यर्थः ॥ ११ ॥ ननु किमेवम्परिगणनेन ये चान्ये शास्त्राविरु-
द्धास्सात्त्विकादयस्त्रिविधाभावास्ते मत्त एव तान्विद्धीत्याह। ये चैवेति। एवंसति
नत्वहन्तेषु तेषां मद्रूपत्वादिति ते मय्येव मृद्घटादिवन्नामरूपात्मना भासन्तइत्यर्थः
॥ १२ ॥ ननु यदि सर्व्वम्प्रपञ्चजातञ्चराचरात्मकं सामान्याविशेषरूपेण त्वमेव

---

समष्ट्याभासरूपेणापीति। इहापि नाव्यष्टिरूपेणाप्यहमेवेति मनसैतानि भू-
तानि प्रणमेद्बहुमानयन्नीश्वरो जीवकलया प्रविष्टो भगवानित्यादिना
स्पष्टमेवोक्तत्वादिति भावः। एवन्तर्हि क्षत्रियादयः परस्परम्प्रणमन्तु
नाम परन्तु ब्राह्मणास्तु शिवमेवेत्यप्युक्तम्। तद्यथा। देवानां यो गुरुः प्रोक्त-
स्तस्यापि गुरुरीश्वरस्सदाशिवो न चान्यो हि गुरुश्शास्ता परात्पर इति। एवमु-
पमन्युस्तु कृष्णस्य गर्गस्त्वस्ति पुरोहितः। पादावनेजनैर्गेहं सिञ्चनीयन्त-
योः स्वस्त्वित्याद्यन्यच्चापि शिवो देवो द्विजो ब्रह्मेत्यादावप्युक्तं न विस्मर्त्त-
व्यम् ॥ १० ॥ ११ ॥ मत्त एवेति। तत्रैवंसति सत्वरजस्तमसां ये भावास्ते स-
र्व्वेपि मत्त एवेति पर्य्यवसिते तत्र रुद्रस्तु सर्व्वत्रैकादशेन्द्रियाधिपतित्वेन पृ-
थगेवेति गुणातीतत्वन्नावधार्य्य इति विवेक्तव्यम् ॥१२॥ सर्व्वं स्वरूपमिति। इ-

मिदं जगत् । मोहितो नाभिजानाति मामे-
भ्यः परमव्ययम् ॥ १३ ॥ दैवी ह्येषा गुणम-
यी मम माया दुरत्यया । मामेव ये प्रपद्यन्ते
मायामेतां तरन्ति ते ॥ १४ ॥ न मां दुष्कृति-
नो मूढाः प्रपद्यन्ते नराधमाः । मायया प-

तर्हि कथं न त्वामेवैतादृशं ज्ञात्वा विमोक्षतइत्याह । त्रिभिरिति । एवन्तर्हि सत्वं रजस्तमो विष्णो जगदण्डं जनार्द्दन इत्याद्युक्तस्मृत्या च कार्य्यकारणभावेन मम सर्व्वस्वरूपन्तथाप्यहङ्गिरोपासनया मामेभ्यः परमव्ययमविनाशिनं शिवस्वरूपं यथोक्तमायया विमोहितो नाभिजानातीत्यर्थः॥१३॥ ननु कस्त्वङ्का च भवतो मायेत्याह । दैवीति । तथा च मायान्तु प्रकृतिम्विद्यान्मायिनन्तु महेश्वरमित्यादिश्रुत्यां देवस्य परब्रह्मणस्सदाशिवस्य माया दैवी माया सैव मम स्वामिनी माया देवकीतिवद्व्याख्येयम् । हि यतो गुणमयी त्रिगुणात्मिका दुरत्यया च ताञ्चैको देवस्सर्व्वभूतेषु गूढ इत्यादिश्रुतिवेद्यम्परमशिवाभेदेन मामेव ये प्रपद्यन्ते तएव गुरुदैवतभक्तानां सर्व्वेषां सुलभम्भवेदित्यादिस्मृतिन्यायेनेमां मायान्तरन्तीत्यर्थः । अन्यथा मामेवंरूपेण त्वत्प्रभृतयो जानन्त्येवेति किन्तत इत्यवधार्य्यम् ॥ १४ ॥ ननु प्रवृत्तिलक्षणो धर्म्मो वासुदेव इतीरितो निवृत्तिलक्षणो धर्म्मस्सदाशिव इति स्मृत इत्यादिस्मृत्या कैवल्यार्थिभिर्व्विष्णुम्मां सदाशिवरूपेणैवोपासयेन्नत्वन्यथेत्याह । नमामिति । तत्रैवंसति सीताञ्च पार्व्वतीम्पश्येद्रामञ्चैव त्रिलोचनमित्यादिश्रुतिन्यायेन सदाशिवरूपेणैव विष्णुं मामुपास्यतां न तु नरकादिजनकमासुरम्बौद्धमताव-

ह तु यद्यपि यच्च किञ्च जगत्यत्र दृश्यते श्रूयते वेत्यादिश्रुत्या नारायणः परो व्यक्तो मायारूप इति श्रुतिरित्यादिस्मृत्या च कार्य्यकारणात्मकं मम सर्व्वस्वरूपम्भवति तथापि यदहङ्गिरोपासनागम्यं मत्परम्पदं शिवमद्वैतन्तज्ज्ञात्वा तु विमुच्यते नान्यथेत्यवधार्य्यम् ॥ १३ ॥ व्याख्येयमिति । तत्र देवकस्य राज्ञ इयं देवकी दाक्षायणीति वरस्वामिनी पूज्या सा देवकी सर्व्वजगन्निवासनिवासभूता नितरां नरेजइत्युदीरणादित्यवधेयम् । किन्तत इति । इह यदि त्वं परमशिवं स्वम्परम्पदं नोपदेक्ष्यसि तर्हि त्वन्तु प्राप्त एवेति किन्तत इत्यर्थः । १४ ॥ बौद्धमतेति । तत्र यद्यपि बौद्धेन स्वशिष्यद्वारैकादशप्रकारेणोक्तमि-

**हृतज्ञाना आसुरम्भावमाश्रिताः ॥ १५ ॥ चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन। आर्त्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥ १६ ॥ तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते। प्रियो हि ज्ञानिनोऽत्यर्थमहं स च**

लम्बिनम्भावमाश्रितास्सन्तो मामुपास्यतामित्यर्थः ॥ १५ ॥ अथ यदुक्तम्प्रवृत्तिलक्षणो धर्म्मो वासुदेव इतीरित इति तमेवन्त्रिविधन्तावत्प्रतिजानीते। चतुर्विधा इति। तत्रैवंसति प्रल्हादेशो ध्रुवेशश्च वाल्मीकेश्वरस्तथा, लक्ष्मीशो द्रौपदीशश्च रुक्मिणीशाद्यनेकश इत्याद्युक्तस्तत्रादौ त्रयोपि यदि शिवाविरोधेनैव भजेयुस्तदैव तत्तत्फलभागिनो न त्वन्यथा, अत एव मदुक्तिस्सदाशिवम्प्रति पाद्मे, तद्यथा। तव निन्दाम्प्रकुर्व्वाणो मद्भक्तिङ्कुरुते यदि। स मे द्वेष्यो न सन्देहस्सत्यंसत्यम्वदाम्यहमित्यादि द्रष्टव्यम् ॥ १६ ॥ एवन्तर्हि यत्पादपद्मं महतां मनोलिभिर्न्निषेवितम्ब्रह्मरसासवार्थिभिल्लोकस्य यद्वर्षति चाशिषोर्थिनस्तस्मै भवान्द्रुह्यति विश्वबान्धव इत्यादिभागवतोक्तेरिहामुत्रफलप्रदत्वं ज्ञानप्रदत्वञ्च सदाशिवस्यैवेत्यभिप्रेत्याह। तेषामिति। नन्वस्त्वेवन्तथापि ज्ञानप्रदत्वम्विशेषतो निवृत्तिलक्षणत्वेन सदाशिवस्यैवेति प्रह्लादम्प्रति नृसिंहरूपेण मयोक्तम्। तद्यथा। ज्ञानं महेश्वरादिच्छेन्मोक्षमिच्छेज्जनार्द्दनादारोग्यम्भास्करादिच्छे-

---

ति मत्कृतवर्णाश्रमधर्म्मनिरूपणे द्रष्टव्यम्। तद्यथा, गृह्णन्तु सर्व्वेपि हि तप्तमुद्रां मुञ्चन्तु भस्मानि ललाटपट्टे। कुर्व्वन्तु सर्वेपि हि विष्णुभक्तिं त्यजन्तु कर्म्माणि पुरातनानीत्यादिना वासांसि जीर्णानीति न्यायेन तर्कमाकल्प्य वेदबाह्यं दृढीकृतमित्यादि तत्रैव विस्तरः ॥ १५ ॥ सत्यंसत्यमिति। तदेतद् बृहन्नारदीयेपि विष्णुवाक्यम्। तद्यथा। म्लेच्छे ध्यानं जिनेऽहिंसा वैष्णवे भक्तिरुत्तमा। चीर्ण्णेतान्मोचयिष्यामि हिंसाशुचिशिवेतरानित्यादि द्रष्टव्यम्॥ १६॥ विश्वबान्धव इति। तद्यथा। श्रुतिहीना द्विजा नैव दानहीना न भूमिपाः। शिवहीना क्रिया नैव कलिस्तत्र न चेच्चत इत्यादि विश्वबन्धुत्वं शिवस्यैव दर्शितम्। अत एव दक्षं दण्डयित्वानुगृह्य च यज्ञादौ दध्यच्चतं शिवायोक्त

**मम प्रियः॥ १७॥ उदाराः सर्वएवैते ज्ञानी त्वा त्मैव मे मतम्। आस्थितस्स हि युक्तात्मा मामेवानुत्तमाङ्गतिम्॥ १८॥ बहूनां जन्मना- मन्ते ज्ञानवान्माम्प्रपद्यते। वासुदेवस्सर्व्व- मिति स महात्मा सुदुर्ल्लभः ॥ १९॥ कामै-**

द्धनमिच्छेद्धुताशनादित्याद्यत्रधार्य्यम् ॥ १७ ॥ ननु किमार्त्तादयस्तव न प्रियाः किन्तु सामान्यरूपेणैवेत्याह। उदारा इति। तत्रैवंसति यद्यप्यार्त्तादय- स्सर्व्वेप्युदारा भक्ता एव तथापि ज्ञानिनस्सर्व्वोत्कृष्टत्वं यतो ज्ञानी ममैवात्मैवे- ति मतामिष्टामित्यर्थः। तदेतदुक्तम्भारते। स एष रुद्रभक्तश्च केशवो रुद्रसम्भवः। स- र्व्वरूपम्भवं ज्ञात्वा लिङ्गे योर्च्चयति प्रभुमित्यादि द्रष्टव्यम्॥ १८ ॥ ननु य- स्मिन्कृते न किञ्चित्कर्म्म क्रियते तन्मे मनश्शिवसङ्कल्पमस्त्वित्यादिश्रुतिवेद्य- मन्तिमज्ञानं कदा प्राप्नोतीत्याह। बहूनामिति। तथा च किञ्चित्किञ्चित्पुण्यो- पचयहेतूनाम्बहूनां जन्मनामन्ते ज्ञानवान्सदाशिवाविरोधेन प्रपद्यतइत्यत एवा- ह। वासुदेव इति। तद्यथा वसद्धा तु सर्व्वत्र वसुः प्रोक्तस्सदाशिवस्स एव देवो यस्यास्ति शैवो वार्ष्णेय ईरित इति, एवङ्गोविन्दाष्टकेप्युक्तम्। शैवं शा- न्तम्प्रणमत गोविन्दम्परमानन्दमित्यादि द्रष्टव्यम् ॥ १९ ॥ तदेवमार्त्तादिभक्त- त्रयापेक्षया हरे मध्यगते सूर्य्यगणेशगिरिजाच्युतानग्निनैर्ऋत्यवायव्यैशानेषु परि- पूजयेदित्यादि पृथग्भावापेक्षया चैकभक्तिरेव गरीयसीत्याह। कामैरिति। ए-

---

सिन्दूरं शक्तितुष्टये अर्धनारीश्वरस्येयम्पूजोक्ता कलशायत इत्यादि निश्चित- म्॥ १७॥ ममैवात्मेति। तदेवमात्मशब्दस्यानेकार्थत्वेपि परमशिवाभिधे- यत्वं धारयिष्यति ते वेगं रुद्रस्त्वात्मा शरीरिणामित्यादि भागवतेप्युक्तम्बोध्य- म्॥ १८॥ अविरोधेनेति। तद्यथा, यतो नाहं शिवेत्युक्त्या भीतिरेव गरी- यसी। तस्माज्जीवेन चाभेदश्शिवेनेवेह शासनमित्याद्युक्त्या सदाशिवेनेव स- र्व्वैरपि जीवजातैरभेदे स्थिते वासुदेवोपि नाशिवो भवितुमर्हतीति सदाशि- वाविरोधेनेत्युक्तम्भवति। एवं सति गौतमेनाभिशप्तास्ये ये च शप्ता दधीचिना कलौ ते प्रभविष्यन्ति महादेवविनिन्दका इत्यादिविस्तरेण सर्वशास्त्रार्थदर्श- ने तद्भाष्ये च द्रष्टव्यम्॥ १९॥ शिवाराधनेनेति। तथैवं सति वासुदेवा-

कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः । तन्तं नियममास्थाय प्रकृत्या नियतास्स्वया ॥२०॥ यो यो यां यान्तनुम्भक्तश्श्रद्धयार्च्चितुमिच्छति । तस्यतस्याचलां श्रद्धान्तमेव विदधाम्यहम् ॥ २१ ॥ स तया श्रद्धया युक्तस्तस्याराधनमीहते । लभते च ततः कामान्मयैव विहितान् हितान् ॥ २२ ॥ अन्तवत्तु फलन्तेषान्त-

वन्तर्हि त्रिनेत्रेषु रविस्तद्वद्गणेशो नाभिगस्स्मृतः । वामभागे उमा शक्तिर्व्विष्णुस्सोमेन पञ्चधा । शिवे च पूजिते देवाः पूजितास्सर्व्वे एव हि । ज्ञानार्थी वा तदन्यार्थी पूजयेदेकमीश्वरमित्येकभक्तिम्विष्णोः परम्पदरूपाम्विहाय तैस्तैः पृथग्भावैरिहामुत्र कामैर्हृतज्ञानाभेदभावनया पृथक्पृथगन्यदेवताः स्वया स्वीयया प्रकृत्या स्वभावेन तन्तं नियममास्थाय प्रपद्यन्तइति तदिदं नोचितमित्यर्थः ॥ २० ॥ नन्वेवमपि दर्व्वीन्यायेन संसाराद्धुद्धरामि सुरर्षभा इत्यादौ स्कान्दे त्वयैव स्वस्य दर्व्वीत्वेनोक्तत्वात्कथन्त्वमेव तेषाङ्कामान्विधास्यसीत्याह । यो यइति । तत्रैवं सति यादृशी भावना तस्य सिद्धिर्भवति तादृशीतिरित्या तत्तद्भेदभावनया योयो यांयान्तनुम्भक्तस्सन्श्रद्धयार्चितुमिच्छति तस्यतस्याचलां दृढां श्रद्धामहमेव यद्यदाचरति श्रेष्ठ इति न्यायेन स्वयं शिवाराधनेनोपदिशन्विदधामीत्यर्थः । तद्यथा, एका शक्तिश्शिवैकोपि शक्तिमानुच्यते शिवश्शक्यश्शक्तिमन्तोन्ये सर्व्वे शक्तिसमुद्भवा इत्यादिकूर्मस्मृत्या च विष्णोर्म्मम शिवशक्त्यंशजत्वाच्च तद्रूपत्वावगतेरिति भावः ॥ २१ ॥ ननु कथन्तर्हि स तत्तत्फलभाग्येव भवति न तु कैवल्यभागित्याह । स तयेति । तथासति तत्तदिहामुत्र फलकामनया पृथग्भावनया च देवाराधने स प्रवृत्तः पुरुषो यथोक्तरीत्या मयैव विहितान्कामान्लभतइत्यर्थः ॥ २२ ॥ नन्वा-

व्यया स्वयं सदाशिवमाराध्य स्वभक्तेभ्योप्यहन्तद्दत्तानि कर्म्मफलान्युपदिशन्दास्यामीत्यर्थः । तद्यथा, ब्रह्मविष्ण्वग्निवरुणास्सर्वे देवास्तथर्षयः । एकस्यैवाथ रुद्रस्य भेदास्ते परिकीर्त्तिताः । यंयम्भेदं समाश्रित्य यजन्ते परमेश्वरन्तत्तद्रूपं समास्थाय प्रददाति फलं शिव इति सर्व्वं मय्येव शिवशक्त्यंशजत्वेन स्फुटीभविष्यतीति भावः ॥ २१ ॥ २२ ॥ अल्पमेधसामिति । तदेतदु-

परन्तप ॥ २७ ॥ येषान्त्वन्तगतम्पापं जना-
नाम्पुण्यकर्म्मणाम् । ते द्वन्द्वमोहनिर्म्मुक्ता
भजन्ते मां दृढव्रताः ॥ २८ ॥ जरामरणमो-
क्षाय मामाश्रित्य यतन्ति ये । ते ब्रह्म तद्वि-
दुः कृत्स्नमध्यात्मं कर्म्म चाखिलम् ॥ २९ ॥
साधिभूताधिदैवं मां साधियज्ञञ्च ये विदुः ।

तर्हि भवन्तम्भवत्परम्पदञ्च सदाशिवं जानन्तीत्याह । येषामिति । तत्रैवंसति येषाम्पुण्यकर्म्मणान्त्वन्तगतम्विनष्टम्पापन्तएव द्वन्द्वविनिर्म्मुक्तास्सन्तो मां भजन्ते मम वर्त्मानुरोधेन ममाज्ञया शिरोव्रतेन शिवार्च्चनध्यानङ्कुर्व्वन्तीत्याशयः । तद्यथोक्तं रामरहस्योपनिषदि । यो वैष्णवस्सोपि च योगकाले शक्तिस्वरूपेण विचिन्त्य विष्णुं, शिवात्मके धामनि योजयेत्स्यादतश्चिदानन्दमयो हि भक्त इत्यादि विस्तरेण सर्व्वशास्त्रार्थदर्शने वेदगर्भे पुराणान्तरे च द्रष्टव्यम् ॥ २८ ॥ ननु कस्मै प्रयोजनाय परम्पदाभिप्रायेण त्वम्भजनीय इत्याह । जरेति । एवं सति विरक्तानां मुमुक्षूणामात्यन्तिकलयार्थिनां भस्मज्योतिर्दिदृक्षूणां शिवन्तं सोममीश्वरमित्यादिकूर्म्मस्मृत्या मामाश्रित्य मदाज्ञया मत्परम्पदरूपसदाशिवैकनिष्ठया ये भजन्ति तएव ब्रह्मशिवमद्वैतन्तुरीयं मन्यन्तइत्यादिश्रुतिवेद्यमध्यात्मयोगाधिगम्यं ससाधनमखिलम्विदुरित्यर्थः ॥ २९ ॥ ननु कथम्भूतन्त्वां ज्ञात्वा मुक्तिभाजो भवन्तीत्याह । साधिभूतेति । तत्र तावन्मृत्युकालेप्यधिभूताधिदैवाभ्यां सहितं साधिभूताधिदैवं नाम भूतान्यधिकृत्य वर्त्ततइति हिरण्यगर्भोधिभूतः

---

व दर्शयन्नाह । तत्रैवंसतीति । तद्यथोक्तं स्कान्दे, घोषत्वं वृषभत्वमर्च्चकवपुर्भार्य्या त्वमार्य्यापतेर्बाणत्वं सखिता मृदङ्गवहताइत्यादिरूपं दधौ त्वत्पादेनयनं प्रदश्च कृतवांस्त्वद्देहभागो हरिः पूज्यात्पूज्यतरस्स एव नहि चेत्को वा त्वदन्योधिक इत्याद्यधिकमन्यत्र विस्तरः ॥ २८ ॥ सोममीश्वरमिति । तत्र तावदिह्योमया सहितश्शिवस्सोम इत्यर्थः । एतदेवाभिप्रेत्य सोमोऽस्माकं ब्राह्मणानामिति सामवेदेप्युक्तम् । स्मृतिषु विशेषाद्ब्राह्मणो रुद्रमीशानं शरणं व्रजेदित्यादि कूर्म्मपुराणे दर्शितम् ॥ २९ ॥ अधिभूत इति । त-

**प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ॥ ३० ॥ इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्ज्जुनसंवादे ज्ञानयोगो नाम सप्तमोऽध्यायः ॥ * ॥**

**अर्ज्जुन उवाच ॥ किन्तद् ब्रह्म किमध्यात्मङ्किङ्कर्म्म पुरुषोत्तम । अधिभूतञ्च किम्प्रोक्तमधिदैवं किमुच्यते ॥१॥ अधियज्ञः कथङ्कोऽत्र दे-**

एवं देवानधिकृत्य वर्त्ततइत्यधिदैव एकादशरुद्रस्ताभ्यां सहितम्मां मूलप्रकृत्याख्यमित्यर्थः एवं प्रतियज्ञमधिकृत्य वर्त्ततइत्याधियज्ञोपि सदाशिव एवेति विपरीतं मन्वानो दक्षोप्यदक्षताम्प्राप्त इत्येवं ये विदुस्ते युक्तचेतसस्सन्तस्तत्संस्कारपाटवात्प्रयाणकालेपि सर्व्वाधिष्ठानं शिवं ज्ञात्वा मुक्ता भवन्तीति शिवम् ॥ ३० ॥ इति श्रीमत्पदवाक्यप्रमाणयोगिवर्य्यविप्रराजेन्द्रविरचिते तत्त्वैकदर्शनभाष्ये ज्ञानयोगनिरूपणं नाम सप्तमोध्यायः ॥ * ॥ क्षरश्चेत्यक्षरश्चेति ततश्चाप्यपरो विभुः । कश्चेत्येवम्विवेको हि त्वष्टमे तु निरूप्यते ॥ ननु पूर्व्वाध्याये साधिभूतमित्यादि यदुक्तन्तद्विस्तरेणात्र वक्तुं युक्तमित्यभिप्रेत्य पृच्छति । किन्तद्ब्रह्मेति । तत्र तावद्धे कृष्ण यदुक्तन्त्वया ब्रह्मेति तत्र किं बृंहन्ते गुणा यस्मात्तच्छून्यम्प्रकृतिर्व्वा ब्रह्मशब्देनोच्यते निष्कलं शिवमद्वितीयमिति वेति प्रश्नः । एवमात्मानं शरीरमधिकृत्य वर्त्ततइत्यध्यात्मन्तदपि बुद्धीन्द्रियभेदेनानेकविधमिति प्रश्नः । एवमुत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानि पञ्चैव कर्म्माणीत्यत्रोक्तमन्यद्वा कर्म्माणीति प्रश्नः । एवमधिभूताधिदैवताभ्यामप्यनेकविधत्वात्किमुच्यतइत्यादिप्रश्न इत्यर्थः ॥ १ ॥ एवमपरमपि प्रश्नम्वक्तुमाह । अधियज्ञ

---

यथा हिरण्यगर्भस्समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीदित्यादिश्रुत्यन्तरादित्यवधेयम् ॥ ३० ॥ इति श्रीमद्योगिवर्य्यविप्रराजेन्द्रात्मजविरचिते भाष्यप्रदीपे सप्तमोध्यायः ॥ * ॥ ननु कोऽस्तोष्टाध्यायसिद्धान्ते न वर्णनीयो विभुरित्यतः पृच्छति । कथेति । तदेतदेवाह । प्रकृतिर्वेति । अव्यक्ताप्रकृतिर्देवी ब्रह्मविज्ञानमादित इत्यादिस्मृत्यन्तरादिति भावः ॥ १ ॥ त्वमन्यो-

**हेस्मिन्मधुसूदन । प्रयाणकाले च कथं ज्ञे-
योसि नियतात्मभिः ॥ २ ॥ श्रीकृष्ण उवाच ॥
अक्षरम्ब्रह्म परमं स्वभावोध्यात्ममुच्यते। भूत-
भावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥३॥ अधि-
भूतं क्षरो भावः पुरुषश्चाधिदैवतम् । अधिय-**

इति । तथा चेह यज्ञाङ्गो विष्णुर्य्यज्ञसाक्षी परमशिवो वा कश्चात्राधियज्ञ इति प्रश्नः । एवङ्कोत्र देहेस्ति यं न विष्णो हे मधुसूदन कथम्प्रयाणकाले च सर्व्वभावेन त्वमन्यो वा सर्व्वसाक्षी ज्ञेयोस्तीत्यनेकविधत्वेन प्रश्नः ॥ २ ॥ इह तु द्वाभ्यां यदुक्तन्तस्योत्तरमप्याह । अक्षरमिति । तत्र तावन्नक्षरतीत्यक्षरम-विनाशित्वान्नतु तद् द्वितीयमस्तीत्यादिश्रुतिवेद्यं शिवमद्वैतन्तुरीयमक्षरम्परमम्ब्रह्मेत्युच्यते एवमिह स्वश्चासौ भावश्च स्वभावः प्रत्यक्चैतन्यन्तदेवात्मानं शरीरमधिकृत्य वर्त्ततइत्यध्यात्मङ्कूटस्थमुच्यते एवं सन्ध्या स्नानं जपो होमो देवतानाञ्च पूजनमित्यादिवैदिकयागदानादिकर्म्म च विसर्गशव्दसंज्ञितमित्यवधार्य्यम् ॥ ३ ॥ एवमिहोत्तरमेव दातुमपरमप्याह । अधिभूतमिति । तत्रतावदधिभूतं हिरण्यगर्भादितृणपर्य्यन्तं यथा स्यात्तथा क्षरो भाव इत्यर्थः । एवम्पुरुषोपि पुरुषो ह वै रुद्र इत्यादिश्रुतेराधिदैवतमित्यर्थः । एवमाधियज्ञो यज्ञाङ्गत्वेनाहमेव तस्यापि साक्षी तु सदाशिव इति हे देहभृताम्वर जीवेश्वरसाक्षी भेदे-

---

वेति। तच्च यच्च किञ्च जगत्सर्वमित्यादि श्रुतिवेद्यो यो वेदादौ स्वरः प्रोक्त इत्यादिश्रुतिवेद्यो वेत्यादि द्रष्टव्यम् ॥ २ ॥ अविनाशित्वादिति । अत एव सगुणभावेनाप्यानन्दाब्धेः कमपि च घनीभावमास्थाय रूपं शक्त्या सार्द्धम्परमसुमया शाश्वतभोगमुच्चचलातीते प्राशिदिवसलक्षकोटिदीप्ते कपर्द्दिन्नाद्ये स्थाने विहरसि सदा सेव्यमानो गणेशैरित्यादिनाप्यविनाशित्वमेव दर्शितम्। प्रत्यक्चैतन्यमिति । एवंसति मिथ्याध्यस्तप्रपञ्चरूपेणाप्यच्छति प्रकाशतइति प्रत्यगिति निर्व्विकारत्वेन कूटस्थमित्यर्थः ॥ ३ ॥ स वै रुद्र इति। तद्यथा एको हि रुद्रो न द्वितीयाय तस्थुर्य इमाँल्लोकानीशत ईशानीभिरित्यादिश्रुत्यन्तरादेक एव हि भूतात्मेत्यादि द्वासुपर्णेत्यादिश्रुत्यन्तराच्चाहंवृत्तेस्त्रिविधभेदम-

ऽहमेवात्र देहे देहभृताम्वर ॥४॥ अन्तका-
ले च मामेव स्मरन्मुक्त्वा कलेवरम् । यः प्रया-
ति स मद्भावं याति नास्त्यत्र संशयः ॥ ५ ॥
यंयं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम् ।
तंतमेवैति कौन्तेय सदा तद्भावभावितः । त-
स्मात्सर्व्वेषु कालेषु मामनुस्मर युद्ध्य च । म-
य्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयम् ॥ ७ ॥

न नान्योन्यम्भेदमिममन्ये विजानन्तीति भावः ॥ ४ ॥ नन्वेवन्तर्ह्यन्ततः कि-
ङ्करणीयमस्तीत्याह । अन्तकाले चेति । तत्रैवंसति सीताञ्च पार्व्वतीम्पश्येद्रामञ्चै-
व त्रिलोचनमित्यादिश्रुतिन्यायेनान्तकाले च मामेव स्मरन्सन्कलेवरं मुक्त्वा-
स्माल्लोकात्प्रयाति स मद्भावम्पदं यत्परमम्विष्णोरित्यत्रोक्तम्परमपदं साम्बशि-
वं यातीति नात्र संशय इत्यर्थः ॥ ५ ॥ ननु किन्तत्र नियामकं यतो-
न्तकाले सद्गतिर्भविष्यतीत्याह । यंयमिति । एवंसति यमीश्वरमन्यम्वान्तका-
लावच्छेदेन स्मरन्कलेवरं त्यजन्ति तन्तमेव योनिं हे कौन्तेय यतस्तद्भावितस्ततः
प्राप्नोतीति मृगैरजर्य्यमित्यादिरीत्यावधार्य्यम् ॥ ६ ॥ नन्वेवन्तर्हि मया
किङ्करणीयमस्तीत्याह । तस्मादिति । एवंसति मत्स्वरूपन्त्विदानीमपि पश्यस्येव
परन्तु मदुक्तोपदेशविषयं यत्परम्पदं सदाशिवन्तुरीयं स्मर युध्य चेत्यर्थः । ए-
वन्तर्हि मय्यर्पितमनोबुद्धिस्सन्मामेव मत्परम्पदमेवैष्यसीत्यसंशयमिति भावः ॥ ७ ॥

---

ष्यवधार्य्यमित्याशयः ॥ ४ ॥ परम्पदमिति । ननु पदं यत्परमं विष्णोस्तदे-
वाखिलदेहिनामित्यादिना विष्णोः परम्पदत्वेनोक्तन्तस्यापि परम्पदङ्किमस्ती-
ति चेच्छृणु । एष देवो महादेवो विज्ञेयस्तु महेश्वरः । न तस्य परमङ्किञ्चित्पदं
समधिगम्यतइत्यवधेयम् ॥ ५ ॥ अवधार्य्यमिति । तस्मान्नाश्रमेषु वसेद्रागा-
त्किन्तु धर्म्मपरायणश्चित्तशुद्ध्यर्थमेवातः परमात्मानमश्नुतइत्यादिरीत्यैवाव-
धार्य्यमित्यर्थः ॥ ६ ॥ तुरीयं स्मरेति । इदानीङ्गुप्तवनवासोक्तं सदाशिवस्य वर-
दानं स्मरेत्यर्थः । तद्यथा । अरण्ये पाण्डवैस्सार्द्धं दृष्ट्वा शम्भुः कृपाकरः । वा-
राहं विष्णुसाकल्यं तत्र विव्याध सोऽर्ज्जुनादित्याद्युक्तत्वादिति भावः ॥ ७ ॥

# द्भवत्यल्पमेधसाम् । देवान्देवयजो यान्ति म-
# द्भक्ता यान्ति मामपि ॥ २३ ॥ अव्यक्तम्व्यक्ति-
# मापन्नं मन्यन्ते मामबुद्धयः । परम्भावमजा-
# नन्तो ममाव्ययमनुत्तमम् ॥ २४ ॥ नाहम्प्र-
# काशस्सर्व्वस्य योगमायासमावृतः । मूढोयं

र्थादयो ज्ञानार्थिनश्चोभयोरपि सकामत्वात्तयोः को विशेष इत्याह । अन्तवत्त्वि-ति । तत्रैवंसति तद्यथेह कर्म्मचितो लोकः क्षीयतइत्यादिश्रुत्यार्त्तादीनां क्षयि-ष्णुफलकत्वं ज्ञानार्थिनामपि यद्यपि सकामत्वन्तथापि तेषां यस्मिन्कृते न किञ्चि-त्कर्म्म क्रियतइत्यादि श्रुत्या ज्ञानोत्तरन्तस्य सकलकामपूरकत्वान्निष्कामत्वमिति वि-वेकः । तथा च तेषां सकामानामल्पमेधसाङ्कर्म्मणाम्फलन्त्वन्तवदेव भवति य-तो या मतिस्सा गतिर्भवेदितिन्यायेनेन्द्रादिदेवान्ये यजन्ति ते तानेव यान्ति ये च मद्भक्तास्ते मामेव यान्ति ये तु कैवल्यार्थिनो निवृत्तिमार्गपरायणास्ते त्वना-वृत्तिलक्षणङ्कैवल्यं यान्तीत्याशयः ॥ २३ ॥ नन्वेतज्ज्ञानावताराणां निधा-नम्बीजमव्ययं यस्यांशांशेन सृज्यन्ते देवतिर्य्यङ्नराद्य इत्यादिद्वितीयभाग-वतोक्तेस्ते दशावतारस्वरूपान्तर्गतत्वन्तद्बीजभूतम्विराड्रूपम्वेति मन्यन्तइति सन्दि-हानं प्रत्याह । अव्यक्तमिति । तत्र तावदव्यक्तं साङ्ख्याभिमते प्रकृतिरूपं मामज्ञात्वा रामकृष्णादिपरिच्छिन्नशरीरस्वरूपत्वञ्चाबुद्धयो मन्यन्ते तत्रापि ममाव्ययमनुत्तमं द्वासुपर्णेतिश्रुतिगम्यं समष्टिरूपेण परम्भावमजानन्त इत्यपि तेषामज्ञातमित्यवधेयम् ॥ २४ ॥ ननु ततोप्यधिकमनुत्तमम्पदमव्ययङ्किमस्तीत्याह । नाहमिति । तदुक्तङ्कौर्म्मे, प-

---

ञ्चम् । ऐहिकन्त्वन्यथाक्रीते ह्यस्त्यिन्यङ्गु प्रवज्ञवेत्तस्मात्परमया भक्त्या यजेद्देवं स-दाशिवमित्यादिस्कान्दोक्त्या ऽल्पमेधसामेव फलाभिकाङ्क्षयैव प्रवृत्तिः यतो भक्तिरहितानामपि पुत्रदाराप्तबन्धूनामुपलब्धिरित्यवधार्य्यम् ॥ २३ ॥ अजा-नन्त इति । ततोपि तयोर्व्यापकत्वेन परश्चिदम्बरात्मा ततोपि परात्परतरो निष्कलश्शिव इत्यादिगार्गीयाज्ञवल्क्यसम्वादेन बृहदारण्यकेपि यदूर्ध्वं या-ज्ञवल्क्यदिवो यदवाक्पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतञ्च भव-च्च भविष्यच्चेत्याचक्षते कस्मिंस्तदोतञ्च प्रोतञ्चेत्यादिप्रश्नोत्तराभ्यां द्रष्टव्यम् ॥ २४ ॥ अजमव्ययमिति । ननु बहूनि मे व्यतीतानि जन्मानि तव चा-

**नाभिजानाति लोको मामजमव्ययम् ॥ २५ ॥ वेदाहं समतीतानि वर्त्तमानानि चार्जुन । भविष्याणि च भूतानि मान्तु वेद न कश्चन ॥ २६ ॥ इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत । सर्व्वभूतानि सम्मोहं सर्गे यान्ति**

दं यत्परमम्विष्णोस्तदेवाखिलदेहिनाम्पदं परममद्वैतं स शिवस्साम्बविग्रह इति तदेतच्चतुष्टयस्वरूपेण नाहं सर्व्वस्य प्रकाशो यत उत्तरोत्तरं योगमायासमावृतः अत एवंरूपेण मत्परम्पदसहितं मां व्यवस्थितम्विविधरूपेणावस्थितं मूढो लोको जनो मामजमव्ययं नाभिजानातीत्यर्थः ॥ २९ ॥ अथ सर्व्वोऽपि जनो मायया प्रतिबद्धज्ञानत्वान्न जानात्यहन्तु शिवार्च्चनध्यानयोगाज्जानामीत्याह । वेदाहमिति । तथा चात्रैव शान्तिपर्व्वणि जनकम्प्रति याज्ञवल्क्येनोक्तम् । तद्यथा । रुद्रप्रधानम्परमं योगम्विद्धि धनञ्जय । एतेनैवाथ देहेन विचरन्ति दिशो दशेति शिवैकनिष्ठया महायोगादप्रतिबद्धज्ञानत्वेन कालत्रयवर्त्तीनि भूतानि सर्व्वाण्यहम्विजानामि मान्तु देवकीसुत त्वाम्विना यथोक्तावित्तररूपेण कश्चन कोपि मन्दो नाभिजानातीत्यर्थः ॥ २६ ॥ ननु कथं नैते विजानन्तीत्याह । इच्छेति । तथा चेह संसारे त्विच्छाद्वेषाभ्यामनुकूलप्रतिकूलविषयाभ्यां समुत्थितेन द्वन्द्वमोहेन सर्व्वाण्यपि भूतानि हे भारत सर्गे स्थूलदेहोत्पत्तौ सम्मोहं यतो यान्त्यत एव न जानन्तीति पूर्व्वेणान्वयः ॥ २७ ॥ ननु के

---

र्ज्जुनेत्याद्युक्त्या प्रत्यक्षतस्त्वयापि जन्मादेरावश्यकत्वमजत्वमव्ययत्वञ्च तेऽस्तीति चेच्छृणु । एवं सति वसुधातुस्तु सर्व्वत्रेत्याद्युक्त्या शिवध्यानार्च्चनज्ञानाद्देवत्वञ्च प्रजापतेरित्याद्युक्तरीत्या च वासुदेवस्य सदाशिवरूपत्वेनाविनाशित्वेन का क्षतिरित्यास्तां विस्तरः ॥ २५ ॥ शिवैकनिष्ठयेति । तदुक्तङ्कूर्म्मपुराणेपि । तद्यथा । स एष रुद्रभक्तश्च केशवो रुद्रसम्भवस्सर्व्वरूपं भवं ज्ञात्वा लिङ्गे योऽर्च्चयति प्रभुमित्याद्यवधार्य्यम् ॥ २६ ॥ द्वन्द्वमोहेनेति । तत्रैवं सति शिवकल्पकथां ज्ञात्वा ब्रह्मकल्पकथां स्मरेद्ब्रह्मकल्पकथान्तद्वद्विष्णुकल्पे विनिर्द्दिशेदित्यादिना तत्तद्भेदमज्ञात्वा हरिः श्रेष्ठो हरो वेति द्वन्द्वमोहेन भ्रमस्तीत्याशयः ॥ २७ ॥ ननु के तर्हि द्वन्द्वमोहेन विनिर्म्मुक्ता इति तानेः

**अभ्यासयोगयुक्तेन चेतसानन्यगामिना। प-रमम्पुरुषं दिव्यं याति पार्थानुचिन्तयन् ॥ ८ ॥ कविम्पुराणमनुशासितारमणोरणी-यांसमनुस्मरेद्यः। सर्वस्य धातारमचिन्त्यरू-पमादित्यवर्णन्तमसः परस्तात् ॥९॥ प्रयाण-काले मनसा चलेन भक्त्या युक्तो योगबलेन**

ननु केन यत्नेन त्वदर्यिम्परम्पदम्प्राप्स्यामीत्याह । अभ्यासेति । तत्राभ्या-सयोगयुक्तेन जपाच्छान्तः पुनर्द्ध्यायेद्ध्यानाच्छान्तः पुनर्ज्जपेदित्याद्यभ्यासपाट-वेन चेतसा तद्वै मनश्शम्भुपदारविन्दयोरित्यादिरीत्यानन्यगामिनाभ्यसन्हे पार्थ परमम्पुरुषं मम परम्पदं साम्बशिवमनुचिन्तयन्यातीत्यर्थः ॥ ८ ॥ अथ तमे-वानुचिन्तनीयम्प्राप्यञ्च पदं दर्शयन्नाह। कविमिति। तथा चेह कविं क्रान्त-दर्शिनन्तेनातीतानागताद्यशेषवस्तुदर्शित्वेन सर्व्वज्ञम्पुराणं सर्व्वसाक्षित्वादविना-शिनन्तथानुशासितारं सर्व्वनियन्तारमेवमणोरणीयांसं सूक्ष्मादपि सूक्ष्मतरन्त-था सर्व्वस्य प्रपञ्चजातस्य धातारमाधारभूतन्तथा फलव्याप्यवृत्या त्वचिन्त्य-म्वृत्तिव्याप्त्या तु चिन्त्यमेवान्यथानुपलम्भापत्तेः। एवं सर्व्वस्य जगतो ऽव-भासकत्वादादित्यरूपम्। तथैवमेव तमादिमध्यान्तविहीनमेकमित्यादिश्रुत्यापि म-त्परम्पदन्तमसः परस्तात् त्वया ध्येयमित्यर्थः ॥ ९ ॥ नन्वभ्यासशीलानां शरी-रासन्नकाले किङ्कर्तव्यमस्तीत्यप्याह । प्रयाणकालइति। तत्रैवंसत्यन्तकाले प्रा-णोत्क्रमणकाले मनसाचलेन निवातदीपवन्निश्चलेन योगबलेन भक्त्या तीव्रया

---

परमम्पुरुषमिति। तच्च पुरुषो ह वै रुद्र इति पुरुषान्न परङ्किञ्चित्सा काष्ठा सा परा गतिरिति श्रुतिभ्याम्परमम्पुरुषमित्यर्थः ॥ ८ ॥ अनुपलम्भा-पत्तेरिति। तद्यथा, ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता। फलव्याप्यत्वमेवा-स्य शास्त्रकृद्भिर्निराकृतमित्यादिस्मृत्या यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सहेत्यनया फलव्याप्यत्वमानन्दम्ब्रह्मणो विद्वान्न बिभेति कुतश्च नेत्यनया तु श्रु-त्या वृत्तिव्याप्यत्वञ्चेति स्पष्टमेवाविष्कृतम् ॥ ९ ॥ दिव्यं सदाशिवमिति। अन्ये ब्रह्मादयस्तु वर्णाश्रमिणो बोध्याः। तद्यथा, शिवो देवो द्विजो ब्रह्मा क्षत्रियस्तु

**चैव। भ्रुवोर्मध्ये प्राणमावेश्य सम्यक्स तम्परम्पुरुषमुपैति दिव्यम् ॥ १० ॥ यदक्षरम्वेदविदो वदन्ति विशन्ति यद्यतयो वीतरागाः। यदिच्छन्तो ब्रह्मचर्य्यञ्चरन्ति तत्ते पदं सङ्ग्रहेण प्रवक्ष्ये ॥ ११ ॥ सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च। मूर्द्ध्न्याधाया-**

निदिध्यासनशीलया युक्तस्सन्भ्रुवोर्म्मध्ये प्राणमावेश्य स योगदर्शी तम्पुरुषं पुरुषो ह वै रुद्र इत्यादिश्रुतिवेद्यं दिव्यं सदाशिवं सम्यगुपैतीत्यर्थः। ननु मां देवकीसुतमिति ब्रवीमि यतस्तुभ्यमहम्प्राप्त एवेत्यवधार्य्यम् ॥ १० ॥ ननु कीदृशन्तम्पुरुषमुपैतीत्याह। यदक्षरमिति। एवन्तर्ह्येतद्वै तदक्षरङ्गार्गि ब्राह्मणा अभिवदन्तीत्यादिश्रुतिवेद्यमष्टादशपुराणानां निष्ठा काष्ठा महेश्वर इत्यादिस्मृतिवेद्यञ्च यदक्षरं शिवमद्वैतन्तुरीयम्ब्रह्म वेदविदो वदन्ति तथैव यद्यस्मिन्यतयस्संयमिनो वीतरागास्सन्तो विशन्ति तथा यद् ज्ञातुमिच्छन्तो नैष्ठिकब्रह्मचारिणो गुरुकुलवासादिना तपश्चरन्ति तत्पदन्ते तुभ्यं सङ्ग्रहेण संक्षेपेण स्वस्मात्प्रकृष्टं मन्वानोहम्वक्ष्ये इत्यर्थः ॥ ११ ॥ नन्वस्त्वेवम्परन्तु, सर्वे वेदा यत्पदमामनन्तीत्यादिश्रुतिस्मृतिवेद्यं यदुक्तन्तत्ते परमम्पदङ्कथम्प्राप्नुयादित्याह। सर्वेति। तत्र तावत्सर्वाणीन्द्रियद्वाराणि संयम्याभ्यासवैराग्याभ्यां मनो ह-

---

हरिः स्मृतः। इन्द्रो वैश्यस्तथैवान्ये यच्चाद्याश्शूद्रजातय इत्यादिभारतोक्त्या शिवस्य साक्षाद्देवत्वस्ब्रह्मादीनां शिवध्यानाद्देवत्वमित्यादिपूर्व्वोक्तमपि न विस्मर्त्तव्यम् ॥ १० ॥ सङ्क्षेपेणेति। ननु कथं जानीमो नैतस्मात्परतरन्तत्त्वमिति चेच्छृणुत्याह। सङ्क्षेपेणेति। तद्यथा, नीलकण्ठम्विरूपाक्षं सर्वश्रुत्यन्तविश्रुतञ्चतुर्दिक्षु चतुर्वेदैर्मूर्त्तिमद्भिरभिष्टुतमिति एवमष्टादशपुराणानां निष्ठा काष्ठा महेश्वरे निग्रहानुग्रहेणैव रूपेण मुनिसत्तम इत्यादिस्मृत्या सङ्क्षेपेणैवात्रार्थे सर्व्वं सङ्गृहीतमित्यवधेयम् ॥ ११ ॥ हठयोगेनेत्यादि। तत्र तावत्कनीयस्यांश्च स्वेदः कम्पो भवति मध्यमे। उत्तिष्ठत्युत्तमे प्राणो रोधे सिद्धासनं मुहुरित्यादिरीत्या हठयोगेन शास्त्रसज्जनसम्पर्कौ विचारो ऽसङ्गभावना समता

**नः प्राणमास्थितो योगधारणाम् ॥ १२ ॥ ओमित्येकाक्षरम्ब्रह्म व्याहरन्मामनुस्मरन् । यः प्रयाति त्यजन्देहं स याति परमाङ्गतिम् ॥ १३ ॥ अनन्यचेतास्सततं यो मां स्मरति नित्यशः । तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥ १४ ॥ मामुपेत्य पुनर्ज्ज-**

दि निरुध्य च हठयोगेन राजयोगेन वात्मनः । प्राणान्मूर्ध्न्याधाय योगधारणामास्थितो भवेदिति परमार्त्थः ॥ १२ ॥ ननु जपाच्छान्तः पुनर्ध्यायेद्ध्यानाच्छान्तः पुनर्ज्जपेदित्यादिस्मृत्या तावदुभयोर्म्मध्ये किं जपेत्किञ्च ध्यायेदित्याह । ओमिति । तत्र तावत्समस्तं व्यस्तन्त्वां शरणदगृणात्योमितिपदमित्यादिस्मृत्युक्तत्वेनोमित्येकाक्षरन्तदर्थपूर्वकम्व्याहरन्गुरुत्वेन च मामनुस्मरन्समाधिना देहं त्यजंश्च सन्नस्माल्लोकाद्यः प्रयाति स सदेहाश्च विदेहाश्च भवन्त्यात्मेच्छया पुनरित्यादिभारतोक्त्या परमाङ्गतिम्प्रयातीत्यर्थः ॥ १३ ॥ ननु वेदैरनेकैरहमेव वेद्य इत्यादिश्रुत्या यदि जीवब्रह्मणोरेकत्वन्तर्हि मयापि परमशिवाभेदे का क्षतिरित्याह । अनन्येति । तत्रैवंसति यस्य देवे परा भक्तिर्यथा देवे तथा गुरावित्यादिश्रुत्या यथा गुरौ नृबुद्धिम्वै मन्त्रे चैवार्णबुद्धिकृत्प्रतिमासु शिलाबुद्धिङ्कुर्वन्तो यान्त्यधस्तम इत्यादिस्मृत्या मयापि तव गुरुणा हे कौन्तेय परमशिवाभेद एव युक्त इत्यतो माम्परमशिवाभिन्नमनन्यचेतास्संस्त्वमन्यो वा यः स्मरति तस्याहं नित्ययुक्तस्य योगिनस्सुलभ इत्यर्थः ॥ १४ ॥

---

स्वच्छता सौम्या सप्तधा भूमिका मतेति राजयोगेन वात्मनः प्राणान्मूर्ध्न्याधायेत्यर्थः ॥ १२ ॥ समाधिनेति । तद्यथा, यदा संक्षीयते प्राणो मानसञ्च प्रलीयते । तदा समरसत्वञ्च समाधिरभिधीयतइत्यादि द्रष्टव्यम् ॥ १३ ॥ ननु लक्ष्मी वाक् शचिवी यत्र मदोदर्याः पुराङ्गणे । शुल्कदास्यो भवन्त्यन्या किमु तान्याः सुराङ्गना इत्यादिस्मृत्या स्वतो विष्णुरूपेण भक्तेरनावश्यकत्वादाह । अधस्तम इति । अत एव धिग् भस्मरहितं भालं धिग् ग्राममशिवालयं धिगनीशार्च्चनं जन्म धिग्विद्यामशिवाश्रयामित्यादिश्लोकरूपया श्रुत्या प्रतिमायाश्च पूजनमावश्यकमित्यवधेयम् ॥ १४ ॥ विचिन्त्य विष्णुमिति । तत्र ताव-

**न्म दुःखालयमशाश्वतम्। नाप्नुवन्ति महा-**
**त्मानस्संसिद्धिम्परमाङ्गताः ॥ १५ ॥ आब्र-**
**ह्मभुवनाल्लोकाः पुनरावर्त्तिनोर्ज्जुन। मामु-**
**पेत्य तु कौन्तेय पुनर्ज्जन्म न विद्यते ॥१६॥**

ननु गुरुदैवतयोरिहाभेदेनोपासनायाः किम्फलमित्याह। मामुपेत्येति। एवंसति मन्ये त्वाङ्कालमीशानमिति स्मृतिन्यायात्परमाशिवाभेदेनोपासनया मामुपेत्य प्राप्य दुःखालयमशाश्वतं संसारगहनम्प्रति पुनर्ज्जन्म नाप्नुवन्तीत्यर्थः। एवमेवोपासन-या बहवोपि महात्मानो यो वैष्णवस्सोपि च योगकाले शक्तिस्वरूपेण विचि-न्त्य विष्णुं, शिवात्मके धामनि योजयेत्स्यादतश्चिदानन्दमयो हि भक्त इत्यादिश्रु-तिन्यायेन परमं सिद्धिङ्गता इत्यर्थः ॥ १५ ॥ ननु शिवलोकाच्च गो-लोकादुमालोकाच्च सर्वशः। कुमारलोकाद्वैकुण्ठात्सत्यलोकात्समन्तत,स्तपो जनमह-र्ल्यश्च सर्व्वे स्वर्ल्लोकवासिन,स्स्नातुं माघे समायान्ति प्रयागमरुणोदयइत्यादिस्मृ-त्या पूर्व्वोत्तरलोकव्यवस्थितौ तेष्वपि किमावृत्तिलक्षणं किञ्चानावृत्तिलक्षण-मिति निरूपयितुमाह। आब्रह्मेति। तत्र तावदाब्रह्मभूवनाद्ये लोकास्ते स-र्व्वे पुनरावर्त्तिनो भवन्ति परन्तु मन्ये त्वाङ्कालमीशानमितिस्मृतिन्यायेनाहंश-ब्देन विख्यातस्त्वेक एव परशिव इति स्मृतिन्यायेन च मां परमशिवमुपेत्य तु लोकापेक्षयापि दिनकृत्कोटिसङ्काशं स्थानमाद्यमुमापतेः। सर्व्वकामसमायुक्त-म्विशुद्धं नित्यमक्षयमित्यादिकूर्म्मोक्त्या हे कौन्तेय विष्णोः परम्पदाख्ये शिव-लोके गत्वा न पुनर्ज्जन्म विद्यतइत्यर्थः। अन्यथा तु बहूनि मेव्यतीतानि जन्मानि तव चार्ज्जुनेत्युक्त्या मम जन्मानि तदत्ययानि च सह यादवैः प्र-सिद्धान्येवेति का तत्र विचारणेत्यवधेयम् ॥ १६ ॥ ननु ब्रह्मादिलोकानाम्पु-

---

च्छिवस्यार्द्धे स्थिता गौरी तदर्द्धे हरिरिष्यते। तदर्द्धार्द्धेन संयुक्तो हरिर-र्द्धं शरीरभागित्येवंरूपेण विजानन्प्रवक्तो भक्तोन्यथा त्वभक्त एवेत्यवधा-र्य्यम् ॥ २५ ॥ गोलोकादिति। तत्र तावदीश्वरायतनस्याग्रे श्रीमान्धर्म्म-वृषः स्मृतः। यत्र वीरवृषस्तत्र नित्यङ्गोमातरः स्थिता इत्यादिना शि-वलोकान्तर्गतो गोलोकोपि वर्णितो यत्र गास्संरक्षणार्थं कृष्णोपि तिष्ठ-तीत्यवधार्य्यम् ॥ १६ ॥ पुनरावृत्तित्वमिति। अत एवार्च्चिरादिद्वारा वि-

**सहस्रयुगपर्य्यन्तमहर्य्यद्ब्रह्मणो विदुः । रात्रिं युगसहस्रान्तां ते ऽहोरात्रविदो जनाः ॥ १७ ॥ अव्यक्ताद्व्यक्तयस्सर्व्वाः प्रभवन्त्यहरागमे । रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ॥ १८॥ भूतग्रामस्स एवायम्भूत्वा**

नरावृत्तित्वङ्कालपरिच्छिन्नत्वादिति युक्तन्तदाह । सहस्रेति । तथा च चतुर्युगसहस्रपर्य्यन्तं यदहो ब्रह्मणो दिनम्विदुरित्यर्थः । एवन्तावत्प्रमाणेन युगसहस्रान्तां रात्रिमपि ते ऽहोरात्रविदो योगिनो विदुरित्यर्थः । ये तु प्रसिद्धत्वेन चन्द्रार्कगत्यैव जानन्ति ते तु नाहोरात्रविदस्स्वल्पदर्शित्वादिति भावः ॥ १७ ॥ ननु सत्यं ज्ञानमनन्तम्ब्रह्मेत्यादिश्रुतिवेद्यस्य सदाशिवस्य निमित्तत्वेपि किमुपादानका ब्रह्मादय इत्याह । अव्यक्तादिति । तत्र तावदिहाव्यक्तशब्देन प्रथमं सहजम्ब्रह्म मायया शून्यमागतं शून्यात्प्रकृतिरीशश्चेत्यत्रोक्ता प्रकृतिर्गृह्यते ततश्चाकाशादयस्सर्व्वा व्यक्तयो ऽहरागमे प्रभवन्तीत्यर्थः । एवन्तएव रात्र्यागमे तत्रैवाव्यक्तसंज्ञके प्रलीयन्तइत्यर्थः ॥ १८ ॥ एवमस्य संसारवर्गस्य स्वरूपमुक्तन्तस्य लक्षणमप्याह । भूतग्राम इति । तथा च सूर्य्याचन्द्रमसौ धाता यथापूर्व्वमकल्पयद्दिवञ्च पृथिवीञ्चान्तरिक्षमथो स्वरित्यादिश्रुतेरसत्कार्य्यवादानभ्युपगमात्स एवायं स्थावरजङ्गमात्मकः पूर्व्वकल्पे स्थितः पुनरस्मिन्कल्पेप्यविद्याकामकर्म्मादिभिरवशस्सञ्जायमानो भवतीत्यर्थः । एवं सति महतोपि महा-

---

ष्णुलोकप्राप्तिपूर्व्वं कश्चिवलोकप्राप्तिरिति ततस्त्रिविधदुःखनिवृत्तिरित्यनावृत्तिशब्दादित्यधिकरणे यदा चर्म्मवदाकाशमिति श्रुतिरपि दर्शितेत्यवधेयम् ॥ १७ ॥ निमित्तत्वेपीति । तत्र तावत्सहजाख्यस्य परब्रह्मणश्शिवस्य चिदम्बरशक्त्याभासस्य समष्टिव्यष्टिरूपेण निमित्तत्वं मायारूपाया मूलप्रकृतेश्च समष्टिव्यष्टिरूपेणैवोपादानत्वमिति यथोर्णनाभिस्सृजते गृह्णते चेत्यादिश्रुत्या लूतातन्त्वात्मकस्वकार्य्यम्प्रति स्वजीवचैतन्येन निमित्तत्वं स्वशरीरत्वेन चोपादानत्वमिति विवेकः ॥ १८ ॥ यन्नातमइति । एवंसति यन्नात्म इत्यनेन तमादिमध्यान्तविहीनमेकमित्यत्रोक्तं यत्तमसः परस्तादिति

**भूत्वा प्रलीयते। राऽ्यागमेऽवशः पार्थ प्रभ- वन्त्यहरागमे ॥ १९ ॥ परस्तस्मात्तु भावो न्यो ऽव्यक्तो व्यक्तात्सनातनः। यस्स सर्व्वेषु भूतेषु नश्यत्सु न विनश्यति ॥ २० ॥ अव्य- क्तो ऽक्षर इत्युक्तस्तमाहुः परमाङ्गतिम्। यम्प्रा-**

प्रलये तु यत्रातमस्तन्न दिवा रात्रिर्न्न सन्न चासाच्छिव एव केवलः तदक्षरन्तत्सवितुर्व्वरेण्यं यतः प्रवृत्ता प्रसृता पुरातनीत्यादि द्रष्टव्यम् ॥ १९ ॥ नन्विह संसारे कतिविधः पदार्थो यस्मात्सर्व्वपदार्थेभ्यस्सदेत्यादेश्शिवस्य परत्वमविनाशित्वमेकत्वञ्चेत्याह । परस्तस्मादिति । एवन्तर्हि पदार्थो द्विविधो भावो ऽभावश्च । तत्र तावद्भावस्तु देव एको विश्वस्य कर्त्ता भुवनस्य गोप्तेत्यादिश्रुतेश्शिवमद्वैतन्तुरीयमित्यादिश्रुतेश्चैकविध एवेति बोध्यम् । ततो ऽभावस्तु द्रव्यगुणकर्म्मसामान्यविशेषसमवायेतिनाम्ना षड्विध एवेति तत्र जायते ऽस्ति विपरिणमते वर्द्धते ऽपक्षीयते विनश्यतीत्येवंक्रमणे सर्व्वेषु भूतेषु विनश्यत्स्वपि न विनश्यतीति यञ्चाकितमभिधत्ते श्रुतिरपीत्यादिसहस्रश्रुतिस्मृतिवेद्यश्चैक एव प्रकृताद्व्यक्तात्परो भावशब्दाभिधेयो व्यक्त इत्यवधार्य्यम् ॥ २० ॥ ननु कृत्स्नं शतपथञ्चैव त्वम्प्रणेष्यसि वै द्विज । तस्यान्ते च पुनर्भावे बुद्धिस्तव भविष्यतीत्याद्युक्त्या भावशब्देन सदाशिवो गृहीतस्तस्य ज्ञाने किम्फलमित्याह । अव्यक्त इति । तत्रैवंसति सहस्रशीर्षेत्यत्र गानविषयात्पुरुषो ह वै रुद्र इत्यादिश्रुत्यन्तरात्पुरुषान्न परङ्किञ्चित्सा काष्ठा सा परा गतिरित्यादिश्रुत्यन्तराच्च पदं यत्परमम्विष्णोस्तदेवाखिल-

---

यच्च तत्सवितुर्व्वरेण्यमिति गायत्र्यर्थे निरूपितन्तत एवेयम्प्रवृत्ता प्रसृता विस्तृता च पुरातनी सृष्टिरित्यवधार्य्यम् ॥ १९ ॥ ननु द्रव्यगुणकर्म्मसामान्यविशेषसमवायाभावास्सप्त पदार्था इत्याद्यर्थं वैनाशिकानां निराकर्त्तुमाशङ्कते । नन्विति । तदेतदुक्तमात्मोपनिषत्प्रदीपे, कर्म्मशास्त्रे कुतो ज्ञानन्तर्के नैवास्ति निश्चयः। साङ्ख्ययोगौ भिदापन्नौ शाब्दिकाश्शब्दतत्पराः, अन्ये पाखण्डिनस्सर्व्वे ज्ञानवार्त्तासुदुर्लभा, एकम्वेदान्तविज्ञानं स्वानुभूत्या विराजत इत्यधिकमन्यत्र विस्तरः ॥ २० ॥ बुद्धिस्तवेति । इदञ्च याज्ञवल्क्य-

प्य न निवर्त्तन्ते तद्धाम परमं मम॥२१॥ पुरुषस्स परः पार्थ भक्त्या लभ्यस्त्वनन्यया। यस्यान्तस्थानि भूतानि येन सर्व्वमिदन्ततम्॥२२॥ यत्र काले त्वनावृत्तिमावृत्तिञ्चैव योगिनः। प्रयाता यान्ति तङ्कालम्वक्ष्यामि भरतर्षभ॥२३॥ अग्निर्ज्योतिरहश्शुक्लः षण्मासा उत्तरायण-

देहिनामित्यादिस्मृतेश्च यत्परमं मम धाम पूर्व्वोक्तरीत्या परम्पदाख्यन्तज्ज्ञात्वा न पुनर्ज्जन्मेत्यवधार्य्यम् ॥ २१ ॥ ननु पुरुषान्न परङ्किञ्चित्सा काष्ठा सा परा गतिरित्यादिश्रुतिवेद्यः परः पुरुषः कथं लभ्य इत्याह। पुरुष इति। एवन्तर्हि नान्यो विषयो विद्यते यस्यां सा तया तद्वै मनश्शम्भुपदारविन्दयोरित्यादि नवधा भक्त्या स मत्तः परः पुरुषो हे पार्थ लभ्य इत्यर्थः। एवं यस्य पुरुषस्यान्तस्थान्यन्तर्व्वर्त्तीनि भूतानि येन च पुरुषेण सर्व्वमिदङ्कार्य्यकारणात्मकम्व्याप्तं यस्मात्परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चिद् वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदम्पूर्णम्पुरुषेण सर्व्वमित्यादिश्रुतेरिति भावः ॥ २२ ॥ ननु कथं जानीमस्सगुणब्रह्मोपासकास्तत्पदम्प्राप्य न निवर्त्तन्ते तत्र तावत्कालावधारणम्वक्तुम्प्रतिजानीते। यत्रेति। तत्र तावत्प्राणोत्क्रमणानन्तरं यत्र यस्मिन्काले कालाभिमानिदेवतोपलक्षिते मार्गे प्रयाता योगिनोऽनावृत्तिम्प्रवृत्तिञ्च यान्ति तङ्कालं हे भरतर्षभ वक्ष्यामीत्यर्थः ॥ २३ ॥ एवमिह पूर्व्वत्र प्रतिज्ञातम्वृत्तमेवाह।

---

प्नोति सूर्य्यवरदानभारतएवोक्तम्बोध्यम् ॥ २१ ॥ भक्त्येति। तत्र तावद्यस्य भाले विभूतिर्नो नाङ्गे रुद्राक्षधारणं, न यस्यार्भवने पूजा स विप्रः श्वपचाधम इत्यादिश्लोकरूपया श्रुत्या तथाजातस्य जायमानस्य गर्भस्थस्यापि देहिनः, मा भून्मम कुले जन्म यस्य शम्भुर्न दैवतमित्यादिस्मृत्या चेत्याशयः ॥ २२ ॥ प्रतिजानीत इति। यतो यत्र कुत्राप्यवस्थितिस्तत्र तत्रापि शिवज्ञानादेव सर्वेषां मुक्तिरिति स्कान्देऽप्युक्तम्। तद्यथा, इहामुत्रेषु लोकेषु यत्र कुत्राप्यवस्थितिः। विना ज्ञानान्न मुक्तिः स्यात्तज्ज्ञानम्भक्तितो भवेदित्याद्यवश्यमवधार्य्यम् ॥ २३ ॥ ज्ञानोपदेशेनेति। तद्यथा, मर्त्यलोके च-

म्। तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः
॥ २४ ॥ धूमो रात्रिस्तथा कृष्णः षण्मासा
दक्षिणायनम्। तत्र चान्द्रमसं ज्योतिर्योगी
प्राप्य निवर्त्तते ॥ २५ ॥ शुक्लकृष्णे गती ह्येते
जगतश्शाश्वते मते। एकया यात्यनावृत्तिम-

अग्निरिति। तत्र तावदग्निर्ज्योतिरित्यर्च्चिरभिमानिनी देवयानोपलक्षिता देवतोच्यते तत्राप्यहरित्यनेन शुक्लपक्षशब्देन च षण्मासोत्तरायणङ्गृह्यते तत्र च शरीरत्यागात्क्रममुक्तिमार्गेण ब्रह्मविदो योगाभ्यासशीलास्सौर्य्यं ज्योतिः प्राप्य योसावादित्ये पुरुषस्सोहमस्मीतिश्रुतिन्यायेन ब्रह्मलोकङ्गत्वा तत्र ज्ञानोपदेशेन तेषामनावृत्तिरित्यर्थः ॥ २४ ॥ एवमिह पुनरावृत्तिलक्षणम्पितृयानमार्गमप्याह। धूम इति। इहापि धूम इत्यनेन धूमाभिमानिनी मर्त्यजा नोपलक्षिता देवतोच्यते तत्रापि रात्रिरित्यनेन कृष्णपक्षः षण्मासत्वेन चोत्तरायणङ्गृह्यते तत्र च योगिनस्साधनशीलस्य शरीरत्यागात्स योगी चान्द्रमसं ज्योतिः प्राप्य निवर्त्तते पुनरावृत्तिभाग्भवेदिति विवेकः ॥ २५ ॥ तत्रानावृत्तिसावृत्तिलक्षणद्वयमेवोपपादयति। शुक्लकृष्णे इति। एवंसतीह पूर्व्वं शुक्लकृष्णगती द्वे हि यतो जगतः पूर्व्वम्प्रतिपादिते ते च शाश्वते विना शिवज्ञानं न निवर्त्तेते तथाप्येकया शुक्लगत्या योगी ध्यानशीलो ऽनावृत्तिं याति ततोन्यया तु कृष्णगत्या पुनस्सा

---

ले बिम्बन्त्वादर्शे स्वर्गभूमिके। ब्रह्मलोके यथा तप्य चिभिर्भेदैस्त्रिधा मतमित्यादिस्मृत्या सर्व्वत्र शिवज्ञानादेव मुक्तिरिति यदा चर्म्मवदाकाशंवेष्टयिष्यन्ति मानवास्तदाशिवमविज्ञाय दुःखस्यान्तो भविष्यतीत्यादिश्रुत्याप्यवधार्य्यम् ॥ २४ ॥ पुनरावृत्तिभागिति। एवंसतीह शिवज्ञानं विना पुनरपि जननम्पुनरपि मरणं पुनरपि गर्भनिवासम्पुनरपि जननीजठरे शयनम्पुनरपि सृष्टिविलास इत्यादिरीत्या पुनरावृत्तिभागीवेत्यवधेयम् ॥ २५ ॥ विना शिवज्ञानमिति। अत एव नारदम्प्रति कृष्णेनैवोक्तम्। तद्यथा, विना शिवप्रसादं हि भ्रान्तिः क्वापि न नश्यति। अत एव भ्रमन्त्येते भ्रमराश्शिववर्ज्जिताः। अहन्तु जगतः कर्त्ता भूतानामीश्वरोपि सन्। ज्ञापयन् स्वात्मनो मूलम्पूजयामि म-

न्यथा वर्त्तते पुनः ॥ २६ ॥ नैते सृती पार्थ जानन्योगी मुह्यति कश्चन। तस्मात्सर्व्वेषु लोकेषु योगयुक्तो भवार्ज्जुन ॥ २७ ॥ वेदेषु यज्ञेषु तपस्सु चैव दानेषु यत्पुण्यफलम्प्रतिष्ठम्। अत्येति तत्सर्व्वमिदम्विदित्वा योगी परं स्थानमुपैति चाद्यम् ॥ २८ ॥ इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादेक्षरपरब्रह्मयोगो नामाष्टमोध्यायः ॥ * ॥ श्रीकृष्ण उवाच ॥ इदन्तु

वृत्तिं यातीत्यर्थः ॥ २६ ॥ नन्वेतन्मार्ग्गद्वयं ज्ञात्वा फलङ्किमस्तीत्याह। नैतं इति। तथा च हे पार्त्थ योगी योगाभ्यासशीलो यद्येते सृती मार्गद्वयाम्विजानंस्तिष्ठति स एवेह जन्मना यत्नतो न विमुह्यति तस्मान्मदुपदेशेषु सर्व्वेषु कालेषु दृढाभ्यासेन योगयुक्तो भवेति त्वमपि न विमुह्यसीत्यर्थः ॥ २७ ॥ एवमिह पूर्वार्थज्ञानवतस्तत्क्रियाकलापङ्क्तवतश्च फलमप्याह। वेदेष्विति। तत्र तावद्वेदेषु सम्यगधीतेषु यज्ञेषु साङ्गोपाङ्गसाहित्येन श्रद्धयानुष्ठितेषु तपस्सु कृच्छ्रचान्द्रायणादिना सुतप्तेषु दानेषु देशे काले पात्रे च श्रद्धया वित्तशाठ्यराहितेन दत्तेषु यत्पुण्यस्य कर्म्मणस्स्वर्गराज्यादिफलन्तत्सर्व्वम्फलमतिशयेनैति प्राप्नोति सर्व्वोपि जन इति शिवम् ॥ २८ ॥ इति श्रीमत्पदवाक्यप्रमाणयोगिवर्यविप्रराजेन्द्रविरचिते तत्त्वैकदर्शने भाष्ये ऽक्षरपरब्रह्मनिरूपणं नामाष्टमोध्यायः ॥ * ॥ अष्टादशानाम्विद्यानां योगविद्या परा ततः। आत्मविद्या परा गु-

---

द्वेश्वरमित्यादिस्कान्दे वचनैर्हरिहरयोर्वादिना प्रत्यक्षतश्चावधेयम् ॥ २६ ॥ विजानन्निति। तद्यथा, श्रुत्वा धर्म्मम्विजानाति श्रुत्वा त्यजति दुर्म्मतिं, श्रुत्वा ज्ञानमवाप्नोति श्रुत्वा मोक्षञ्च गच्छतीत्यादि बोध्यम् ॥ २७ ॥ अत एवोपसंहरन्नाह । तत्सर्व्वमिति । तत्रैवंसति कथया सिद्ध्यति ध्यानं ध्यानात्कैवल्यमुत्तममित्यादिब्रह्मोत्तरखण्डे स्कान्दाच्चेत्यवधार्य्यमित्यलम् ॥ २८ ॥ इति श्रीमद्योगिवर्य्यविप्रराजेन्द्रात्मजविरचिते भाष्यप्रदीपे ऽष्टमोध्यायः ॥ * ॥

त्वे गुह्यतमम्प्रवक्ष्याम्यनसूयवे । ज्ञानम्वि-
ज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभा-
त् ॥ १ ॥ राजविद्या राजगुह्यम्पवित्र-
मिदमुत्तमम् । प्रत्यक्षावगमं धर्म्यं सु-
सुखङ्कर्तुमव्ययम् ॥ २ ॥ अश्रद्दधानाः पुरुषा
धर्म्मस्यास्य परन्तप । अप्राप्य मां प्रवर्त्तन्ते

ह्या नवमे सा समीर्य्यते। अथ पूर्वोक्तमेव तत्त्वम्विस्तरेण व्याख्यातन्तत्प्रसङ्गेना-
न्यच्च रहस्यम्वक्तुमाह । इदन्त्विति । एवं सतीदम्प्राग्बहुधोक्तमपि ब्रह्मतत्त्वविषय-
कं ज्ञानन्तत्राप्यधिकङ्गुह्यतमङ्गोपनीयन्ते तुभ्यम्प्रवक्ष्यामीत्यर्थः । तदेतज्ज्ञानं शा-
स्त्रीयमपि विज्ञानसहितन्तदपि यज्ज्ञात्वा त्वशुभात्संसारबन्धनान्मोक्षसे तत्प्रवक्ष्या-
मीत्यर्थः ॥ १ ॥ ननु योगो द्विविधो राजयोगो हठयोगश्च तत्रापि पक्वक-
षायेभ्यो हठयोगः समन्वित इत्युक्तन्तथा शमदमादिषट्सम्पत्तियुक्तेभ्यस्तु राज-
योग एव प्रशस्यतइत्याह । राजविद्येति । तथा चास्य सर्व्वोत्कृष्टत्वेन सुकरत्वे-
न च राजविद्यात्वम्पुराणन्यायमीमांसेत्याद्यष्टादशविद्यासु गोप्यानामपि गोप्यत्वा-
द्राजगुह्यं सकलसंसारबन्धनिवर्त्तकत्वात्पवित्रमुत्तमञ्च बोध्यम् । एवं यो वा गा-
र्ग्ये तदक्षरमविदित्वा अस्माल्लोकात्प्रैति स कृपण इत्यादिश्रुत्येह जन्मन्येवावग-
मस्य युक्तत्वात्प्रत्यक्षावगमं सर्व्वमूलभूतत्वाद्धर्म्माय हितन्धर्म्यञ्चेदन्तत्त्वज्ञानं सुसु-
खं यथा स्यात्तथा कर्त्तुमर्हसीत्यर्थः ॥ २ ॥ तदेवम्प्रतिज्ञातस्य ज्ञानस्य नि-
वृत्तिरूपेणानर्थफलत्वमपि प्रदर्शयन्नाह । अश्रद्दधाना इति । एवन्तर्हि मदुक्तस्या-

---

ननु पुराणन्यायमीमांसेत्यादिनाष्टादशविद्योक्ता तत्र का सा विद्या गरीय-
सीत्याह । आत्मविद्या परेति । तदुक्तं स्कान्दे ब्रह्मगीतायाम् । तद्यथा, आत्म-
विद्याविहीनस्य शोकसागर एव हि । मुक्तिरेवात्मनिष्ठस्य नास्ति संशय-
कारणमित्याद्यत्रज्ञेयम् ॥ १ ॥ समन्वित इति । राजयोगो हि कर्त्तव्यस्स-
र्व्वयोगेष्वनुत्तमः । अविपक्वकषायस्य हठयोगसमन्वित इत्यादिस्मृतेरिति भा-
वः ॥ २ ॥ यद्वाव्यक्तो द्विविधो मूलप्रकृतिरूपः परब्रह्मरूपश्चेति तदाह ।
प्रथमाव्यक्तेति । तद्यथा, अव्यक्ता प्रकृतिर्मूला त्वपरा त्रिगुणात्मिका । अव्यक्तं हि

**मृत्युसंसारवर्त्मनि ॥ ३ ॥ मया ततमिदं सर्वं जगदव्यक्तमूर्त्तिना । मत्स्थानि सर्वभूतानि न चाहन्तेष्ववस्थितः ॥ ४ ॥ न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् । भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ॥ ५ ॥ यथाकाशस्थितो नित्यम्वायुस्सर्वत्रगो महान् । तथा**

स्य पूर्व्वोक्तधर्म्मस्य विषये ऽश्रद्दधानाः पुरुषा मामेव प्रथमाव्यक्तरूपमेवाप्राप्य मृत्युसंसारवर्त्मनि प्रवर्त्तन्ते कुतः पुनर्द्वितीयाव्यक्तरूपं मत्परम्पदमक्षरन्तुरीयङ्गमिष्यन्तीत्यर्थः ॥ ३ ॥ ननु किमिदन्ते स्वरूपन्त्वत्परम्पदञ्चेति द्वाभ्यां क्रमेणाह । मयेति । तत्रैवंसतीह यद्यपि प्रपञ्चजातं जगदव्यक्तमूर्त्तिना मयैव यच्च किञ्च जगत्यत्र दृश्यते क्रियतेपि वेत्यादिश्रुत्या ततन्तथापि मृदि घटादिवत्सर्व्वभूतानि मत्स्थान्येव न चाहन्तेष्ववस्थित इत्यर्थः ॥ ४ ॥ अथ च यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठित इत्यादिश्रुत्या तु स्वीयपरम्पदमप्याह । न चेति । एवंसति यदि मे ममैश्वरं योगगम्यं स्वरूपम्पश्येचेन्मत्स्थान्यपि भूतानि नहि सन्तीत्यर्थः । एवन्तर्हि मृद्घटादिवत्कारणत्वेन भूतभृन्न च भूतस्थस्तत्रापि ममात्मा परमशिवस्सर्व्वसाक्षी सर्व्वभूतैर्द्ध्येयत्वेन लिङ्गपूज्यत्वेन च भाव्यतइति भूतभावन इत्यर्थः ॥ ५ ॥ एवमिह पूर्वोक्तमेव दृष्टान्तेन विशदयति। यथेति । तथा च मृदि घटादिवत्कार्यकारणभावेपि वस्तुतः पृथ्वीम्पश्यामि रूपन्तत्तेजस इति न्यायेनापृथग्रूपत्वन्तथापि स्वल्पविचारस्यावष्टम्भेनाधाराधेयभावकल्पनया वाय्वाकाशदृष्टान्तेन मत्स्थान्यपि

---

परब्रह्म यतस्सर्व्वमिदं व्यज्यतइत्यादिस्कान्दे तत्त्वसंहितायामुक्तत्वादिति भावः ॥ ३ ॥ न चाहमिति । किन्तु परिच्छिन्नत्वेन मत्स्थान्येव भूतानि न तु तेन रूपेण तेष्ववस्थित इत्यर्थः ॥ ४ ॥ नहि सन्तीति । यतः कोन्वेनं जनयेत्पुनरित्यादि बृहदारण्यकश्रुत्या विश्वं दर्पणदृश्यमाननगरीतुल्यं निजान्तर्गतमित्यादिस्मृत्या च यो वेदानित्युक्तो परे साक्षिणि शिवे सर्व्वथा व्यक्तादीनि भूतानि नहि सन्तीत्यर्थः ॥ ५ ॥ ननु वाय्वाकाशयोरेकप्रकृतिकत्वात्कथ-

सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥ ६ ॥
सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिका-
म्। कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्य-
हम् ॥ ७ ॥ प्रकृतिं स्वामवष्टभ्य विसृजामि
पुनःपुनः। भूतग्राममिमं कृत्स्नमवशम्प्रकृतेर्व-
शात् ॥ ८ ॥ न च मान्तानि कर्माणि निब-
ध्नन्ति धनञ्जय। उदासीनवदासीनमसक्त-

सर्व्वाणि भूतानीति व्यवहारोपीति बोध्यम् ॥ ६ ॥ एवन्तर्हि किम्पर्य्यवसितमि-त्याह । सर्व्वभूतानीति । तत्रैवंसति हे कौन्तेय सर्व्वाणि भूतान्यव्यक्तादीनीति रीत्या मामिकामेव प्रकृतिम्प्रथमाव्यक्तलक्षणाङ्कल्पक्षये यान्ति पुनश्च तानि कल्पादौ विसृजामीति तत्र का विचारणा किन्तु ततः परं यच्छिवमद्वैतं यत्परमम्पदन्तदेव विचारणीयमित्याशयः ॥ ७ ॥ एतदेव पुनरुपपादयति । प्रकृतिमिति । तत्रैवं सति शून्यात्प्रकृतिरीशश्चेत्यत्रोक्ता या प्रकृतिस्ताम्प्रकृतिं स्वामवष्टभ्य द्वासुपर्णेत्यत्रो-क्तजीवेश्वराभ्यापूर्व्ववद्भेदाभेदमाश्रित्य पुनःपुनरहम्मायावीव विसृजामीत्यर्थः । अत एवेदं कृत्स्नं प्रकृतेर्व्वशादप्यवशमिव भूतग्राममिमम्प्राहुरित्यर्थः ॥ ८ ॥ नन्वस्त्वे-वम्परन्त्वेवं ज्ञानिनन्त्वाङ्कर्माणि निबध्नन्ति नवेति सन्दिहान आह । न चेति ।

---

स्तयोराधाराधेयत्वमित्यत आह । वस्तुत इति । तद्यथा, पृथ्वोम्पश्यामि रूप-वत्तेजसो जलमित्यहो । रसं गृह्णामि जिघ्रामि पश्याम्येतत्कथस्वद । अपि गन्धादिकं सर्व्वन्तन्मात्रक्रमतो लयं, शोषयित्वा प्रयत्नेन धियम्पूर्णं विचि-न्तयेदित्यादिज्ञानदृढतयावधार्य्यम् ॥ ६ ॥ मामिकामिति । प्रथमाव्यक्तल-क्षणां सत्वं रजस्तमो विष्णो जगदण्डं जनार्द्दन, तस्य कारणमाहुस्त्वां सा-ङ्ख्यास्तत्त्वविदो हरे इत्यत्रोक्तामित्यर्थः ॥ ७ ॥ भेदाभेदेति । तत्र तावद्व्यष्टिरू-पेण भेदस्समष्टिरूपेण चाभेद इति जीवेश्वराभ्यान्तयोरुपपत्तिरिति भावः ॥ ८ ॥ नच निबध्नन्तीति । तत्र तावच्छ्रवणमनननिदिध्यासनसामर्थ्यं बाल्यं यमनि-यमासनप्राणायामधारणया समाधिभाक्त्वम्पाण्डित्यञ्च लब्ध्वेत्यभिप्रायेण बाल्य-ञ्च पाण्डित्यञ्च निर्व्विद्य स ब्राह्मणः केन स्याद्येन स्यात्तेन स्यादीदृश एव भ-

न्तेषु कर्मसु ॥ ९ ॥ मयाध्यक्षेण प्रकृतिस्सूय-
ते स चराचरम्। हेतुनानेन कौन्तेय जगद्वि-
परिवर्त्तते ॥१०॥ अवजानन्ति मां मूढा मा-
नुषीन्तनुमाश्रितम्। परम्भावमजानन्तो मम
भूतमहेश्वरम् ॥ ११ ॥ मोघाशा मोघकर्माणो
मोघज्ञाना विचेतसः । राक्षसीमासुरीञ्चैव प्र-

एवं सत्युदासीनवदासीनमसक्तञ्च कर्म्माणि तानि कुर्व्वन्तं मां हे धनञ्जय शिव-ध्यानार्च्चनज्ञानान्न च निबध्नन्तीत्यर्थः ॥ ९ ॥ एवन्तर्हि चिदाभासरूपेण मयाध्य-क्षेणेश्वरेण प्रकृतिस्स चराचरं सूयतइत्यर्थः। एवं सति ततो यद्गुत्तरतरन्तद्रूपमना-मयमित्यादिश्रुतिवेद्यं शिवमद्वैतम्पृथगेवेत्यवधार्य्यम् । तथा च हे कौन्तेयानेनैव हेतुना जगज्जन्मादिविनाशान्तम्विपरिवर्त्तते तदेतदुक्तम्। अस्य द्वैतेन्द्रजालस्य यदुपादानकरणमज्ञानन्तदुपाश्रित्य ब्रह्म कारणमुच्यतइत्यादि द्रष्टव्यम् ॥ १० ॥ ननु केन रूपेण त्वाम्बन्धनाद्विमुक्तं जानीम इत्याह । अवजानन्तीति । किन्तु सीताञ्च पार्व्वतीम्पश्येद्रामञ्चैव त्रिलोचनमित्यादिश्रुत्युक्तरीत्या मन्ये त्वाङ्का-लमिशानमनादिनिधनम्विभुमित्यादिस्मृत्युक्तमार्गेण च परभावेनैव माहेश्वरेण पर-म्पदरूपेण मामुपासयेदिति पर्य्यवसितम् । अत एवैतन्नानावताराणां निधानं बीजम-व्ययं यस्यांशांशेन सृज्यन्ते देवतिर्यङ्नरादय इत्यादिना प्रकृत्याख्यमव्यक्तं विराड्रूपं चोक्ता अमुनी भगवद्रूपे मया ते अनुवर्णिते । उभे अपि न गृह्णन्ति मायासृष्टे विपश्चित इति बोपदेवकृते भागवतेप्युक्तं सङ्गच्छतइ-त्यवधेयम् ॥ ११ ॥ अत एव म्लेच्छे ध्यानं जिने ऽहिंसा वैष्णवे भक्तिरुत्तमा । श्रीनेतान्नोद्धरिष्यामि हिंसा ऽशुचि शिनेतरानित्यादिबृहन्नारदीयोक्त्या शैवं यद्भाव-

वतीति श्रुतेर्न च कर्म्माणि निबध्नन्तीत्यर्थः ॥९॥ सूयतइति । अन्यथा मूलप्रकृते-रपि जडत्वाद्विना चिदम्बराभासेन कथं स चराचरं सूयतइति भावः ॥१०॥ प-रम्पदरूपेणेति । पाद्मे गोपालसहस्रनामाप्युक्तम् । ध्यायेन्नित्यं सदा विष्णुं शुक्ला-ङ्गं शिवरूपिणम् । नाशिवस्त्वे शिवप्राप्त्यै विष्णुभक्तिमवाप्नुयादित्यादि द्रष्टव्यम् ॥११॥ नन्वेवन्तर्हि म्लेच्छा जैना वैष्णवाश्चैकपङ्क्त्युपारूढाः कान्नतिङ्गमिष्यन्तीत्या-

कृतिं मोहिनीं श्रिताः ॥ १२ ॥ महात्मानस्तु
माम्पार्थ दैवीम्प्रकृतिमाश्रिताः । भजन्त्यन-
न्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥ १३ ॥ सत-
तङ्कीर्त्तयन्तो मां यतन्तश्च दृढव्रताः । नमस्य-

न्तद्विमुखानां निरयगामित्वमेवेत्यभिप्रेत्याह । मोघाशेति । तदेतदुक्तम्विष्णुपुराणेपि तद्यथा, मुद्राजटारचनमौण्डवताम्तथैव मोघाशिनामखिलशौचनिराकृतानान्तोयप्रदानपितृपिण्डबहिष्कृतानां सम्भाषणादपि नरा नरकम्प्रयान्तीत्यादि बहुशः ॥ १२ ॥ एवं दरियानामाकवीरश्च नान्हकस्तुथरस्तथा । शठकोपोभिपक् चाष्टौ कर्म्मचाण्डालभागिन इत्यादिना वेदबाह्यानामृत्तमुक्त्वा महतामपि कर्तव्यमाह । महात्मानस्त्विति । तन्नैवंसति देवस्य परब्रह्मणस्सदाशिवस्य तत्सवितुर्व्वरेण्यमित्यत्र निर्दिष्टाश्चिदम्बराख्याम्प्रकृतिं स्वस्यात्मनस्सदाशिवस्यार्द्धनारीश्वरत्वेन दैवीम्प्रकृतिभावमाश्रिताः पुनश्चानन्यमनसस्सन्तो भूतादिमव्ययम्परात्परतरं शिवञ्ज्ञात्वा महात्मानो मांगुरुत्वेन शिवतत्त्वोपदेष्टारम्भजन्तीत्यर्थः ॥ १३ ॥ एवमपरञ्च किङ्कुर्व्वन्त इत्याह । सततमिति । एवन्तर्हि माम्परं शैवभावेनैव सीताञ्च पार्व्वतीम्पश्येदित्यादि यथोक्तरीत्या चिन्तयेदिति पर्यवसितम् । तद्यथा । स्कान्दे, तद्वै मनश्शम्भुपदारविन्दयोर्व्वचांसि यत्तस्य गुणानुकीर्त्तने करावहो मन्दिरमार्ज्जनादिषु श्रुतिञ्चकाराच्युतसत्क-

---

च । अत एवेति । तत्र तावन्म्लेच्छे ध्यानं युक्तं जिने त्वहिंसादयो युक्ता वैष्णवे तु नम्रोभावेन भक्तिर्युक्ता परन्तु हिंसया म्लेच्छमत्या वेदबाह्याचारेण जिनमेव जैनं भिवितरत्वेन च वैष्णवमित्यादि नीनेताचोद्धरिष्यामीति भगवद्वाक्यतोनुसन्धेयमित्यर्थः ॥ १२ ॥ चाष्टाविति । तत्र शठकोपो द्विविधस्तिङ्गलो वडगलश्चेति ताभ्यामष्टावित्यर्थः । तत्सवितुरिति । तत्र तावत्सवितुर्व्वरेण्यमिव सुपामिति सुरादेशे भर्गस्य देवस्य तद्वरेण्यं शक्तिं धीमहि यो नो ऽस्माकं धियोन्तःकरणानि यया शक्त्या तपोब्रह्मचर्य्यादिकर्म्मसु प्रचोदयोदिति मन्त्रार्थः । स्मृतिश्च भर्गः सूर्यो हरिश्छाया वरेण्यं शक्तिरातपः । दीपं शिवो हरिर्धूमः प्रभा शक्तिर्यथा भवेदित्यादिस्कान्दवचनैरवधार्य्यम् ॥ १३ ॥ ननु दृष्ट्वा पातं हरेर्देहं गत्वा काष्ठस्य संचयमष्टाभिस्तस्य पत्नीभिर्दाहयामास पार्थिव इत्यादि राज्योपमान्त्यागमिच्छमाणे त्वयि कथं त्वां सततमुपासयामीति चे-

न्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥ १४ ॥
ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते । ए-
कत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ।
॥ १५ ॥ अहङ्क्रतुरहं यज्ञस्स्वधाहमहमौ-

थोदये । पादौ च तत्क्षेत्रपदानुसर्पणे शिरोवृषेशस्य पदाभिवन्दने । कामश्च तत्प्राप्ति-मयो न चान्यतस्सेवेत वर्गैरपि सम्वसन्मुनिरित्यादिना नवधा भक्त्या नित्ययुक्तास्स-न्तो महात्मानस्तु वैष्णवस्स तु विज्ञेयश्शिव भक्तिपरायण इत्यादिरीत्योपासतइत्यर्थः ॥ १४ ॥ ननु कीदृशस्सर्व्वतो गरिष्ठो यज्ञो येन रूपेण त्वां भजेदित्याह । ज्ञा-नयज्ञेनेति । तदुक्तं स्कान्दे शिरोव्रतखण्डे । तद्यथा । अकृत्वैतद्व्रतम्पुण्यं नैव ज्ञानमवा-प्नुयात्पशुपाशविमोक्षाय चीर्णन्तु मुनिभिः पुरा । विष्णुना ब्रह्मणा देवैर्मार्कण्डेयद-धीचिना । दुर्व्वाससा गैातमेन जाबालाथर्वशाखिना । कात्यायनेन मुनिना तथागस्त्येन सत्तम । मया स्कन्देन गणपैर्नन्दिना भृङ्गिणा तथा । रामाय दत्तवानेतदगस्त्यो दण्डकावने । उपमन्युस्तु कृष्णाय दीक्षामेताञ्चकाराह । कृत्वा तु विरजां दीक्षा-यः पूजयति शङ्करम् । तेनैव जन्मना मुक्तश्शिवज्ञानी शिवम्व्रजेदित्यादि बहुशः । १९ ॥ ननु यदुक्तमेकत्वेनेत्यादि तदेव विशदयति । अहङ्क्रतुरिति । एवं सत्यहं-शब्देन विख्यातस्त्वेक एव परश्शिव इत्यादिस्मृत्याहम्ब्रह्मास्मीत्यादिश्रुत्या चा-

---

त्मव दृष्टान्तेनाह । सीताद्येति । एवं सत्यानन्दाब्धेः कमपि च घनीभावमास्था-य रूपं शक्त्या सार्द्धं परममुमया शाश्वतं भोगमृच्छन्नित्यादिस्मृतिन्यायेन शि-वयोश्शरीरस्य कर्म्मजन्यत्वाभावेन सततमुपास्यत्वं युक्तमित्यवधेयम् ॥ १४ ॥ शि-रोव्रतेति । तस्य हि सर्व्वैश्शिरसाधार्य्यमाणव्रतप्रतिपादकत्वाच्छिरोव्रतखण्ड-त्वावगमादिति भावः । तद्यथा, सर्व्वेषामेव भक्तानां शम्भोर्लिङ्गमनुत्तमं, सि-तेन भस्मना कार्य्यं ललाटे वै त्रिपुण्ड्रकमित्यादिकूर्म्मपुराणोक्त्यावगन्तव्यम् १५॥ ननु न जानीमः कथमेकत्वेन पृथक्त्वेन वा स्वात्मानम्विजानीयादिति वक्तु-माशङ्कते । नन्विति । तथा च सेव्यो वा सेवको वापि त्वत्तो नान्योस्ति कश्च नेति स्मृतिन्यायेन वेदैरनेकैरहमेव वेद्य इत्यादि श्रुतिन्यायेन चाहंशब्देन परा-त्मा शिव एव गृह्यतइत्यर्थः । अहंक्रतुरित्यादिनेति । इह क्रतुः क्रियाक-

षधम् । मन्त्रोहमहमेवाज्यमहमग्निरहं हुतम् ॥ १६ ॥ पिताहमस्य जगतो माता धाता पितामहः । वेद्यम्पवित्रमोङ्कार ऋक्साम यजुरेव च ॥१७॥ गतिर्भर्त्ता प्रभुस्साक्षी निवासः शरणं सुहृत् । प्रभवः प्रलयः स्थानं निधानम्बीजमव्ययम् ॥ १८ ॥ तपाम्यहमहम्वर्षं निगृह्णाम्युत्सृजामि च । अमृतञ्चैव मृत्यु-

हङ्गिरोपासनया सर्व्वं खल्विदम्ब्रह्मैवेत्यहङ्क्रतुरित्यादिना ब्रह्मार्पणन्यायेन चिन्तयेदित्यर्थः ॥ १६ ॥ एवमेव पुनरप्याह । पिताहमिति । तथा च सर्व्वजगतामिपता जनको माता च तयोरपि जनकः पितामहश्चाहमेवेत्यर्थः । एवम्पवित्रमोङ्कारस्तदुपबृंहितानि ऋक्सामयजूंषि चाऽथर्व्वाख्यश्चेति चत्वारो वेदा अप्यहमेवेति वेद्यमित्यर्थः ॥ १७ ॥ एवम्बहुशः क्रियाकलापरूपेणाप्यहमेवेत्याह । गतिरिति । तत्र तावज्जगताङ्गतिस्तद्भर्त्ता प्रभुरीश्वरस्साक्षी चेत्यादिसोऽहं स च त्वं स च सर्व्वमेतदात्मस्वरूपन्त्यज भेदमोहमित्यादिरीत्या सर्व्वम्प्रपञ्चजातमप्यहमेवेत्यर्थः ॥ १८ ॥ एवन्त्वमर्कस्त्वं सोमस्त्वमसि पवनस्त्वं हुतवहस्त्वमापस्त्वम्व्योमत्वमु धराणिरात्मा त्वमिति चेत्यादिस्मृत्यापि सर्व्वमहमेवेत्याह ।

---

त्वापस्तत्साध्यो यज्ञः स्वधा स्वाहा तत्साधकमौषधन्द्रव्यञ्चाहमेवेत्यादि ब्रह्मार्प्पणन्यायेनेत्यर्थः ॥ १६ ॥ अप्यहमेवेति । तद्यथा, अहम्ब्रह्मा च विष्णुश्च वेदशास्त्राण्यनेकशः । मन्मायाकल्पितास्सर्व्वे शिवोऽहं सर्व्वरूपतः । आकाशादपि विस्तीर्णश्शुद्धस्सूक्ष्मो ऽव्ययश्शिवः । य आत्मा स कथं राम जायते म्रियते ऽथवेत्यादियोगवाशिष्ठादप्यवधार्य्यम् ॥१७॥ प्रपञ्चजातमिति । एतदपि तत्रैवोक्तम् । एकम्ब्रह्म चिदाकारं सर्व्वात्मकमखण्डितं, निष्कम्पम्भूरिवाशेषमिति भावय यत्नत, इत्यादि द्रष्टव्यम् ॥ १८ ॥ नन्वयमात्मा ब्रह्मविज्ञानमानन्दम्ब्रह्मतत्त्वमस्यहंब्रह्मास्मीत्यादि वेदचतुष्टयोक्तमहावाक्येष्वहंशब्देन किमुच्यतइत्याह । एवमिति । अहंशब्देन विख्यातस्त्वेक एव परश्शिव इत्यादिस्मृत्यन्तरादिति भावः । नन्विह तत्त्वमसीत्यत्र तस्य त्वमित्येव समासेन विशिष्टाद्वैतमस्त्विति चेन्मैवम् । एव-

श्च सदसच्चाहमर्ज्जुन ॥ १९ ॥ त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिम्प्रार्थयन्ते । ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान्दिवि देवभोगान् ॥ २० ॥ ते तम्भुक्त्वा स्वर्गलोकम्विशालं क्षीणे पुण्ये मर्त्यलोके विशन्ति । एवन्त्रयीधर्म्ममनुप्रपन्ना

तपामीति । तत्र तावत्सूर्य्यादिरूपेणाप्यहमेव तपामीत्यादिसर्व्वमहमेव सदाशिवो हे अर्ज्जुन त्वमात्मानमपि सर्वोपि जनश्चैवमेव विजानात्वित्यादिसदसच्चाप्यहमेव न मत्तस्सदाशिवात्पृथक्किञ्चिदप्यस्तीति भावः ॥ १९ ॥ एवमिहास्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकमाद्यन्त्रयम्ब्रह्मरूपं जगद्बीजं द्वयं मतमित्यादौ नामरूपयोर्ज्जगद्रूपत्वे स्थिते तत्र पुराणन्यायमीमांसेत्याद्यष्टादशविद्यात्मकानां नाम्नामपि वृत्तमाह । त्रैविद्या इति । एवन्तर्हि तिस्रो विद्या येषां सन्ति ते त्रैविद्या निष्कामनया ब्रह्मविद्याप्राप्त्यनर्हास्सोमपास्सोमयज्ञकर्त्तारोपि यज्ञैर्म्मामेव सदाशिवमिष्ट्वा पूतपापास्सन्तस्स्वर्गगतिञ्च प्रार्थयन्ते एवन्ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति नाम दिवि दिव्यान्देवभोगानश्नन्तीत्यर्थः ॥ २० ॥ एवमिह विश्वं दर्पणदृश्यमाननगरीतुल्यं निजान्तर्गतमित्यादिस्मृतिन्यायेन सर्व्वं स्वप्नवन्मय्येव कल्पितमित्याह । त इति । तत्र तावत्त्वं स्वर्गलोकम्विशालम्भुक्त्वा तद्यथेह कर्म्मचितो लोकः क्षीयतइत्यादिश्रुत्या क्षीणे पुण्ये मर्त्यलोके विशन्तीत्यादिसर्व्वं मायाशरीरे प्रतिबिम्बगात्रे यत्स्वप्नदेहे हृदि कल्पिताङ्गस्सदिरीत्या विश्वं निजान्तर्गतम्पश्यन्सद्गुरूपदिष्टमार्गेण गुप्तम्विचारयेन्नात्यन्ताज्ञेष्विदङ्कथयेद्गोपना प्रथमा

---

त्तर्ह्यं च पूर्वं च वाक्यान्तरेषु समासासम्भवात्तत्वमेव त्वमेव तदिति श्रुत्यन्तरविरोधाच्चिदचिद्विशिष्टमित्युक्तिर्भ्रान्तिरेव हि केवलम् । तमःप्रकाशवद्राजन्वै विरुद्धं न यतो भवेदित्यादिस्मृत्यन्तराच्चेत्यवधेयम् ॥ १९ ॥ नामरूपयोरिति । तद्यथा, सुखे नामास्ति रूपं वै चक्षुषीदम्विभावय । नामरूपे न चैवास्तान्तयोरव्याप्यतुच्छवादित्यविद्यारूपत्वमेवैतयोरित्यधिकमन्यच्च विस्तरः ॥ २० ॥ अत्यन्ताज्ञेष्विति । एतदेवोक्तमिहैव, न बुद्धिभेदं जनयेदज्ञानाङ्कर्म्मसंङ्गिनां, पोषयेत्स-

गतागतङ्कामकामा लभन्ते ॥ २१ ॥ अनन्या-
श्चिन्तयन्तो मां ये जनाः पर्य्युपासते । ते-
षां नित्याभियुक्तानां योगक्षेमम्वहाम्यह-
म् ॥ २२ ॥ येऽप्यन्यदेवताभक्ता यजन्ते श्र-
द्धयाऽन्विताः । तेपि मामेव कौन्तेय यज-
न्त्यविधिपूर्वकम् ॥ २२ ॥ अहं हि सर्वयज्ञा-

सिद्धिर्गोपनन्त्वप्रकाशनमित्यादिश्रुतिस्मृतिगम्यङ्गतागतं सर्व्वं स्वप्नवदवधार्य्यम् ॥ २१ ॥ एवन्तर्हि ब्रह्मविष्णुसुरेन्द्राद्या यद्यत्कुर्व्वन्ति सर्व्वतस्तत्तच्चिद्वपुस्सर्व्वङ्करोमीत्येव चिन्तयेदित्यभिप्रेत्याह । अनन्या इति । तत्रैवंसति नान्यो विद्यते सदाशिवात्परब्रह्मणोन्यो येषान्ते ऽनन्यास्सन्तस्सर्व्वं सर्व्वत्र सर्व्वदेतिन्यायेन चिन्तयन्त इत्यर्थः । एवंसति सोहं स च त्वं स च सर्व्वमेतदित्यादिश्रुतिस्मृति सिद्धान्तरीत्या सर्व्वात्मना चिन्तनस्यावश्यकत्वे स्थिते तत्र ये जनास्साधनचतुष्टयसम्पन्नास्त्यागः प्रपञ्चभूतस्य चिदात्मत्वावलोकनादितिरीत्या कर्म्मफलाभिसन्धिरहितत्वेन न्यासिनस्सन्तः पर्य्युपासते तेषां सर्व्वात्मत्वोपासकानामलभ्यलाभो योगो लब्धस्य परिपालनं क्षेमश्चाहम्ब्रह्मा सुरेन्द्रश्च वहामीत्यर्थः ॥ २२ ॥ ननु ये स्वात्मनो भिन्नत्वेनोपासते तेषाङ्का गतिरित्याह । येपीति । तथा च योन्यां देवतामुपास्ते ऽन्योसावन्योहमस्मीति न स वेद पशुरेव स देवानामित्यादिबृहदारण्यकश्रुत्याहंशब्देन विख्यातस्त्वेक एव परश्शिव इत्यादिस्मृत्या च विरुद्धत्वेन भेदभावनयोपासका अपि मामेव परमशिवं सर्व्वात्मकत्वाद्भजन्ति तथाप्यखण्डभावनारहितत्वेनाविधिपूर्व्वकमेव भजन्तीति भावः ॥ २३ एवंसत्यहमेव सर्व्व

व्व कर्माणि विद्वान्युक्तस्समाचरेदित्याद्यवधार्य्यम् ॥ २१ ॥ न्यायेनेति । तद्यथा, यदस्ति यद्भाति तदात्मरूपं यच्चान्यतो भाति न चान्यदस्ति । स्वभावसंवित्प्रतिभाति केवलो ग्राह्यङ्ग्रहीतेति मृषा विकल्प इत्याद्यात्मनस्सदाशिवरूपेण योगवाशिष्ठे द्रष्टव्यम् ॥ २२ ॥ अविधिपूर्व्वकमिति । तद्यथा, एको देवो न द्वितीयाय तस्थु र्य वंस्तुत्वा द्वैतभावम्भजस्व, मूर्खस्त्वन्यो देवतानाम्प्रियो यस्तस्यैकत्वे प्राह देवप्रियत्वमित्यादिदेवानाम्प्रिय इति मूर्ख इति पाणिनीयस्मृतावप्यनुसन्धेयम् ॥ २३ ॥ पूजयन्निति । तद्यथा, एतन्मखेशस्य सुवर्णपात्रे हविस्सम-

नां भोक्ता च प्रभुरेव च । न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥ २४ ॥ यान्ति देवव्रता देवान्पितॄन्यान्ति पितृव्रताः । भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोपि

त्मा शिवस्सर्व्वयज्ञानाम्भोक्तेत्याह । अहं हीति । ननु यदि त्वमेव देवकीसुतो विष्णुर्व्वा दशावतारी तर्हि कथं त्वामेव विष्णुम्पूजयन्दक्षो विनष्ट इत्याह । नत्विति । एवं सत्योन्तत्सदितिनिर्द्देशो ब्रह्मणस्त्रिविधस्स्मृत इत्यादिस्मृत्या ततो मान्तत्वतो ज्ञात्वा विशते तदनन्तरमित्यादिस्मृत्या च न तु मामेव देवकीसुतत्वविदो विजानन्ति किन्तु ये तत्त्वताश्शिवरूपतो विजानन्ति तएव मां जानन्त्यन्यथा त्विह देवकीसुतत्वेन जानन्तश्च्यवन्त्येवेत्याशयः ॥ २४ ॥ एवम्परमभावेन तत्तद्रूपेणैव देवतान्तरयाजिनामनावृत्तिलक्षणकैवल्यफलाभावेपि तत्तद्यागानुरूपक्षुद्रफलावाप्तिर्भ्भवेत्याह । यान्तीति । तत्रैवंसति महेन्द्रादिदेवे व्रतो नियमो येषान्ते देवव्रता देवानेव तान्यान्ति एवमग्निष्वात्तादिपितृषु व्रतो नियमो येषान्ते पितृव्रतास्तान्पितॄनेव यान्ति एवम्भूतप्रेतयक्षादिषु व्रतो नियमो येषान्ते तानेव यान्ति एवमेव मद्याजिनो मामेव सदाशिवं यान्तीत्यर्थः । तद्यथा । दिगम्बरञ्च जटिलम्बालकन्धूलिधूसरम्मन्दभाग्या न पश्यन्ति गोविन्दं शिवरूपिणमित्यमात्ये रा-

---

ष विधिमन्त्रपूतं विष्णोर्यास्यप्रतिमस्य भागमप्रभुर्व्विभुर्ह्याहवनीय एष इत्येवमभिप्रायेण पूजयन्नित्यर्थः । ततश्च दक्षप्रजापतिं हस्ताभ्यामाच्छाद्य तिष्ठतो विष्णोस्सशिरस्कौ हस्तावपि छित्वा स यज्ञाद्बहिष्कृत इत्यप्युक्तम् । तद्यथा, समुत्थाय महाविष्णुं भ्रामयित्वा त्रिधा पुनः । शूलं वक्षस्यथो हस्तौ छित्वायज्ञाद्बहिष्कृतः । शिवाज्ञया महाविष्णो गच्छ त्वं निधिसंनिधौ । जगन्नाथेति नाम्ना ते पूज्यं दारुमयं वपुरित्यतः परमशिवाभेदेनैव तत्साहित्येन वा सर्व्वं पूज्या न त्वन्यथेत्यवधार्य्यम् ॥ २४ ॥ क्षुद्रफलावाप्तिरिति । तद्यथेह कर्म्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयतइत्यादिश्रुतेः । तथा च फलाभिसन्धियुतेन कर्म्मणा सम्पादितो लोको भोगः क्षीयते एवमेवामुत्र स्वर्गादिरूपः पुण्येन कामाभिसन्धियुक्तेन चितस्सम्पादितो लोको भोगः क्षीयतइति श्रु

**माम् ॥ २५ ॥ पत्त्रम्पुष्पम्फलन्तोयं यो मे भक्त्या प्रयच्छति । तदहम्भक्त्युपहृतमश्नामि प्रयतात्मनः ॥ २६ ॥ यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् । यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥ २७ ॥ शुभाशुभफ-**

जवृद्धिस्तु न दोषाय फलाय सेति न्यायेन बोध्यम् । ननु देवकीसुतत्वेन विष्णुभावेन कुतो नोच्यतइति चेच्छृणु । तद्यथा, म्लेच्छे ध्यानं जिने ऽहिंसेत्यादिना दत्तोत्तरत्वादित्यत्रधार्य्यम् ॥ २९ ॥ नन्वस्त्वेवम्परन्तु सर्व्वभावेन वा कथं सदाशिवः पूज्य इत्याह । पत्त्रमिति । ननु सर्व्वत्र सर्व्वथा सदाशिव एवैकः पूज्यो न ब्रह्मा न विष्णुरिति चेच्छृणु । तत्र तावदुपमन्युस्तु कृष्णस्य गर्गस्त्वस्ति पुरोहितः । पादावनेजनैर्गेहं सिञ्चनीयम्प्रयत्नत इत्यादिपाद्मोक्तस्मृत्या ब्राह्मणैः क्षत्त्रियैश्चापि समकक्षत्वेन सदाशिवातिरिक्तो न पूज्यः पूज्यश्चेन्न स्वतो वै हरिः पूज्यो न वा ब्रह्मा पुरन्दरः । शिवेन सहितास्सर्व्वे पूज्या देवा न संशय इत्यादिभारतस्मृत्या सदाशिवेन सहैव पूज्या नत्वेकाकीति विवेकः ॥ २६ ॥ एवंसति फलम्पुष्पन्तदेवास्ति जन्मकर्म्माखिलम्पुनः । यच्छिवार्थं समर्प्याथ कैवल्यं लभते ध्रुवमित्यादिस्मृत्या परमशिवाभेदेनैव पुनरप्याह । यत्करोषीति । एवं सत्यद्वैतमान्तरं लिङ्गं शीर्षण्यम्प्राणिजीवनं, रसान्भक्तस्य जिह्वाग्रादश्नामि कमलोद्भव इत्यादिब्रह्माण्डपुराणोक्तरीत्या यत्करोषि यदश्नासीत्याद्युक्त्या जिह्वोपरिभागावच्छेदेन द्रवच्छिङ्गाधीनत्वमेव सर्व्वाङ्गानामिति प्रत्यक्षतोपि स्फुटीकृतम् ॥ २७ ॥ एवमेव

---

तदर्थः ॥ २५ ॥ शिवेन सहिता इति । तद्यथा, नायं यज्ञो न वा धर्म्मो यत्र शम्भुर्न इज्यते । वधकल्पप्रपन्नो वै किन्तु कालस्य पर्य्यय इत्यादिदक्षयज्ञप्रमथने सदाशिवं विना सकलकर्म्मणामप्यर्थ्यस्योक्तत्वादिति भावः ॥ २६ ॥ स्फुटीकृतमिति । तद्यथा, ब्रह्मरन्ध्रे शिवन्ध्यायेद्ब्रह्माणन्तु हृदि स्थितं नाभौ विष्णुं समराध्य प्रजपेत्परदेवताम् सप्तर्षिभिस्तथा देवैः पूजितस्त्वान्तरश्शिवः कर्णयोर्द्विमिषस्याक्ष यत्राङ्गन्धारयेत्तत इत्यादिना श्रुतिस्मृतियुक्तिसिद्धमेव सर्व्वपूज्यत्वं सदाशिवस्य कोत्यभेधास्ततो विरमेदित्यास्तां विस्तरः ॥ २७ ॥ शुभाशुभफलैरि-

**लैरेवं मोक्ष्यसे कर्मबन्धनैः । संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥ २८ ॥ समोहं सर्वभूतेषु न मे द्वेष्योस्ति न प्रियः । ये भजन्ति तु माम्भक्त्या मयि ते तेषु चाप्यहम् ॥ २९ ॥ अपि चेत्सुदुराचारो भजते**

चाहंशब्देन विख्यातस्त्वेक एव सदाशिव इत्यादिस्मृत्याप्यहङ्गिरोपासनयाहं सदाशिवस्तदर्पणङ्कुर्व्वाणः किम्फलम्प्राप्नोतीत्याह । शुभाशुभेति । तथा सत्येवङ्कुर्व्वाणास्त्विहामुत्रस्थशुभाशुभफलैस्सुखदुःखादिमिश्रितः कर्म्मबन्धनैः क्रियमाण उर्व्वारुकमिव पश्चात्कर्म्मबन्धनिर्म्मुक्तस्सन्संन्यासयोगयुक्तात्मा भवति स च पुनर्म्मां शिवमद्वैतन्तुरीयं यो वैष्णवस्सोपि त्वयोगकाले शक्तिस्वरूपेण विचिन्त्य विष्णुं शिवात्मके धामनि योजयेत्स्यादतश्चिदानन्दमयो हि भक्त इत्यादिस्मृतिन्यायेन चैवमेवमामुपैष्यसीत्यर्थः ॥ २८ ॥ ननु यदि भक्तानेवोद्धरिष्यसि नाभक्ताँस्तर्हि वैषम्यनैर्घृण्याभ्यामनीश्वरत्वमेव ते स्यादिति चेन्मैवमित्याह । सम इति । तत्रैवं सति कपूयचरणाः कपूयां योनिमापद्यन्ते पुण्यचरणाः पुण्यां योनिमापद्यन्त इत्यादिश्रुत्या तत्तत्प्राणिकृतकर्म्मणाम्भोगप्रदत्वेन नेश्वरस्य वैषम्यनैर्घृण्यमप्यस्तीति बोध्यम् ॥ २९ ॥ ननु न यस्य लोके स्वजनः परो वा नात्यादृतो नोत कश्चिद्विगर्ह्य इत्यादिस्मृत्या मम सदाशिवस्य समत्वेपि कर्म्मणा जात्या वा विषमोपि शिवार्पणङ्कुर्व्वाणस्साधुरेवेत्याह । अपि चेदिति । एवन्तर्हि धर्म्मतो जात्या वा विभिन्नात्मापि यो मां परमशिवाभेदेन तन्निष्ठया वानन्यभक्त्या भजते स साधुरेव सम्यग्व्यवसितो निश्चितात्मापीत्यर्थः । तद्यथा

---

ति । तच्च तावच्छ्रुत्याविरोधेन सर्व्वभावेन परमशिवभक्त्या शुभमन्यथा तु दत्तवदशुभमित्याद्यधिकं मत्कृतसर्व्वशास्त्रार्थदर्शने द्रष्टव्यम् ॥ २८ ॥ कृतकर्म्मणामिति । नन्वस्त्वं वमेक एव हि भूतात्मा त्वचोक्तस्य चेश्वरस्य तथात्वन्तथापि ततः परस्य सर्व्वसाक्षिणस्तु स्वातन्त्र्येण फलाधिक्यदातृत्वमपीति चाकितमभिधत्ते श्रुतिरपीत्युक्तं सङ्गच्छते अत एव मन्नामानाच्च पापानि सन्तु पुण्यफलानि वै इत्याद्युक्तिरपि वृषभोक्तौ वेदनाथोक्तौ च तत्कथोक्तितोवधार्य्येति भावः ॥ २९ ॥ अन्यतो गत्वेति । तद्यथा, प्रोषितश्शम्भुना नीरो न चागस्त्ये न व-

मामनन्यभाक् । साधुरेव स मन्तव्यस्सम्य-
ग्व्यवसितो हि सः ॥ ३० ॥ क्षिप्रम्भवति ध-
र्मात्मा शश्वच्छान्तिं निगच्छति। कौन्तेय प्रति-
जानीहि न मे भक्तः प्रणश्यति ॥३१॥ मां हि
पार्थ व्युपाश्रित्य येपि स्युः पापयोनयः। स्त्रि-

वासुदेवो थ रामोपि गोविन्देत्यादयोप्यमी । वरदानाच्छिवस्यैव फलवन्तो न चान्यथा । प्रल्हादेशो ध्रुवेशश्च वाल्मीकेश्वरस्तथा । लक्ष्मीशो द्रौपदीशश्च रुक्मिणीशाद्यनेकश इत्यादिस्मृत्या शिवभक्त्यैव सर्व्वेषामन्ततो गत्वा फलावाप्तिः कैवल्यसिद्धिश्चेत्यवधार्य्यम् ॥ ३० ॥ ननु कर्म्मणा जात्या वा न्यूनोपि कियत्कालं सेवनात्साधुत्वमवगच्छतीत्याह । क्षिप्रमिति । एवंसतिक्षुद्रेपि नूनं शरणम्प्रपन्ने ममत्वमुच्चैश्शिरसां सतीवेत्यादिस्मृतिन्यायेन हे कौन्तेय इति त्वम्प्रति जानीहीति शिवातिरिक्तत्वेन मां मन्यमानो दक्षोह्यहं सर्व्वे देवा मुनयश्शिवभक्तिम्विना विदग्धा इत्यवधार्य्यम् । तद्यथा पाद्मे, एवं शिवश्शिवङ्कर्त्तुमन्यथाकर्तुमीश्वरः । दक्षोप्यदक्षताम्प्राप्तः पुनर्द्दक्षो ह्यभूद्यत इति एवन्तद्यज्ञप्रथमनएव समुत्थाय महाविष्णुम्भ्रामयित्वा त्रिधा पुनः । शूलम्वक्षस्यथो हस्तौ छित्वा यज्ञाद्बहिष्कृत इत्यादि बहुशः ॥३१॥ ननु किमनया स्वीयभक्तिम्प्रतिपादयस्यथ सदाशिवभक्तिम्वेति, नाद्यो यतो ऽव्यक्तम्व्यक्तमापन्नं मन्यन्ते मामबुद्धयः परम्भावमजानन्तो मम भूतमहेश्वरमित्यादिना स्व-

---

स्तुतः, गीतमात्रोक्त्ता ऽक्ष्यां किन्तु शम्भोः प्रभावत इत्यादि प्रह्लादेशो ध्रुवेश-श्चेत्यादिनापि बुद्धिकुशलैरवगन्तव्यम् ॥ ३० ॥ क्षुद्रेपीति । अत एव दक्षयज्ञप्रमथनएव छागशिरसो योगानन्तरमोमित्युक्त्वावमित्युक्तं भ्रान्त्यापि स महेश्वरो विद्याधर्य्यै यथा चाद्या किञ्चान्यच्छृद्धयान्वित इत्यादिक्षुद्रेपि स्वात-न्त्र्यो पानुग्रहः क्षत इति शिवयोः क्रियाधारत्वं स्फुटीकृतम् । इत्यवधार्य्यमिति । नन्वेवं स्वभक्तांस्तर्हि कथं स्वतस्तारयसीति चेन्नैवम् । दर्व्वीन्यायेन संसारादुद्धरामि सुरर्षभाः न स्वतो वै तथा विष्णुस्तथेन्द्रोपि कथञ्चनेत्यादिना स्कान्दे ब्रह्मगीतायामुक्तत्वादिति भावः ॥ ३१ ॥ अर्थान्तरत्वेनेति । एवन्तर्हि मध्ये स्वाद्यन्तमीशमजमनादिनिधनंविभुमित्यादिस्मृतिन्यायेन मामविनाशिनं स-

**थो वैश्यास्तथा शूद्रास्तेपि यान्ति पराङ्गतिम् ३२ किम्पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा । अनित्यमसुखं लोकमिमम्प्राप्य भजस्व माम् ॥ ३३ ॥ मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु । मामेवैष्यसि युक्त्वैवमात्मानं**

स्य भक्तेर्न्निरासादियतो ऽर्थान्तरत्वेनाह । मां हीति । एवं सति हे पार्थ मां सदाशिव मुपाश्रित्य शरणमागत्य स्त्रियो वैश्या इत्यादि येपि स्युः पापयोनयस्तेपि पराङ्गतिं शिवसायुज्यं यान्तीति वैद्यस्सोमोथ भीमश्च नागेशस्त्र्यम्बकस्तथा धूम्रेशोङ्कारकेदारः कालेशश्च नवेश्वरा इत्यादिनवनाथादौ प्रसिद्धं द्रष्टव्यम् ॥ ३२ ॥ ननु कर्म्मणा जन्मना वाधमवृत्तय एव यदि सदाशिवभक्त्या तरन्ति तर्हि किमुत वक्तव्यम्पुण्याचारादीनां नैव गतिरित्याह । किम्पुनरिति । एवंसति सकलपुरुषार्थसाधनेयोग्यमतिदुर्ल्लभञ्च मनुष्यदेहमनित्यमसुखञ्च गर्भवासनाद्यनेकदुःखबहुलं लोकमिमं लब्ध्वा ततोप्यतिदुर्ल्लभं सदाशिवरूपं मां भजस्वेति परमार्थः ॥ ३३ ॥ ननु कथम्पुनस्सदाशिवो मया भजनीय इत्युपसंहरन्नाह । मन्मना इति । तत्रैवंसति यस्य देवे परा भक्तिर्य्यथा देवे तथा गुराविति श्रुतिन्यायेन मयि सदाशिवे मनो यस्य स त्वम्भवेत्यर्थः । एवम्मद्याजी मां सदाशिवञ्च नमस्कुर्व्वन्नेभिः प्रकारैरात्मानं सदाशिवं युक्त्वा चेतस्समाधाय मत्परायणस्सन्मामेव सदाशि-

---

दाशिवमित्यर्थः । द्रष्टव्यमिति । तद्यथा सौराष्ट्रे सोमनाथञ्च श्रीशैले मल्लिकार्ज्जुनमित्यादिपुराणान्तरेषु द्वादशलिङ्गोद्भवे दर्शनादिति द्रष्टव्यम् ॥ ३२ ॥ एवमिह सर्वेषामुर्व्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमामृतादिति श्रुतिन्यायेनोच्चावचा यदि मुक्तिस्तर्हि केवलपुरुषे षिणां तु का वार्तेरित्युपसंहरन्नाह । एवंसतीति । तथा च मानुष्यमर्थदमिदम्बहुसम्भवान्त इत्यादिस्मृतिन्यायेनेह जन्मनोदुर्ल्लभत्वात्तथा धिग्भस्मरहितं भालं धिग्ग्राममशिवालयं धिगनीशार्च्चनं जन्म धिग्विद्यामशिवाश्रयामित्यादिश्रुत्या च मन्ये त्वां कालमीशानमित्यादिरीत्या मां शिवरूपम्भजस्वेत्यर्थः ॥ ३३ ॥ गीतामृतमिति । तद्यथा गोदोग्धा च वत्सश्च दुग्धञ्चैवामृतं शिवस्तद्दृष्ट्वा प्रवृत्तिर्व्वै भारतादौ विवेकि

मत्परायणः॥३४॥ इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्ज्जुनसम्वादे राजगुह्ययोगो नाम नवमोऽध्यायः॥

श्रीकृष्ण उवाच॥ भूय एव महाबाहो शृणु मे परमम्वचः। यत्तेहम्प्रियमाणाय वक्ष्यामि हितकाम्यया॥१॥ न मे विदुस्सुरगणाः प्रभवं न महर्षयः। अहमादिर्हि देवानां मह-

वमेवष्यसीति सर्व्वोपनिषदो गावो दोग्धा गोपालनन्दनः। पार्थो वत्सस्सुधीर्भोक्ता दुग्धङ्गीतामृतं महदित्यत्र गीतामृतं शिवतत्त्वन्तद्दोग्ध्रे कृष्णाय च नम इति शिवम्॥ ३४ ॥ इति श्रीमत्पदवाक्यप्रमाणयोगिवर्य्यविप्रराजेन्द्रविरचिते तत्वैकदर्शने भाष्ये राजगुह्यनिरूपणं नाम नवमोध्यायः॥ * ॥ संसारेस्मिन्विभूतिर्वै या या दिव्यस्वरूपिणी। सा तदेवेश्वरस्यांशा दशमे तन्निरूप्यते। अथेदानीम्परमशिवज्ञानाय विस्तरेण विवेचयितुमारभते। भूय एवेति। तत्रैवंसति हे महाबाहो देहात्मभावेन शृणु मे मम परमम्प्रकृष्टम्वचो यत्ते तुभ्यम्प्रीयमाणाय हितकाम्यया गीतामृतं शिवैकतत्त्वम्वक्ष्यामीत्यर्थः॥ १ ॥ ननु प्राग्बहुधोक्तमेव किम्वक्ष्यसीत्याह। नम इति। एवन्तर्हि न मे सदाशिवस्य तत्वं सुरगणा महेन्द्रादयो महर्षयो भृग्वादयश्च विदुरित्यर्थः। यतो यो देवानाम्प्रभवश्चोद्भवश्च रुद्रो महर्षिः हिरण्यगर्भं जनयामास पूर्व्वं स नो बुद्ध्या शुभया युनक्त्वित्यादिश्रुत्या देवानां महर्षीणाञ्च सर्व्वप्रकारैरुत्पादकत्वेन बुद्ध्यादिप्रवर्त्तकत्वेन चादिः

---

नामित्यधिकमन्यत्र विस्तरः॥ ३४ ॥ इति श्रीमद्योगिवर्य्यविप्रराजेन्द्रात्मजविरचिते भाष्यप्रदीपे नवमोध्यायः॥ * ॥ ननु किमिदमध्याये दशमे वर्ण्यं तद्दर्शयति। संसारइति। ननु पुरंविराजश्चविरच्यतस्मिन्स्वांशेन विष्टो विभुराजतीवेत्यादिश्रुत्या सर्व्वस्य वस्तुजातस्य तद्रूपत्वे स्थिते कथन्तर्हि दिव्यस्वरूपिणीत्युक्तिरिति चेच्छृणु तत्र तावद्या दिव्यस्वरूपिणी विभूतिस्साग्रभागतो बोध्या। या तु मलिना सा तु पृष्ठभागरूपेत्येतावतैव भेद इति न विरुद्धमिति भावः॥ १ ॥ बुद्ध्या शुभयेति। अनेन धियो योनः प्रचोदयादित्येकवाक्यतया गायत्र्य-

षीणाञ्च सर्व्वशः ॥ २ ॥ यो मामजमनादिञ्च वेत्ति लोकमहेश्वरम् । असम्मूढस्स मर्त्येषु सर्व्वपापैः प्रमुच्यते ॥ ३ ॥ बुद्धिर्ज्ञानमसम्मोहः क्षमा सत्यं दमश्शमः । सुखं दुःखं

कारणमहमेव सदाशिवोऽतो मत्प्रभावं न विदुर्देवकीसुतत्वेन त्वहम्विज्ञात एवेत्यर्थः । ननु बहूनि मे व्यतीतानि जन्मानीत्यादिना त्वयैव स्वस्य देवकीसुतादेर्ज्जन्मान्युक्तान्येवेति कथमेतदुच्यतइति चेदहंशब्देन विख्यातस्त्वेक एव सदाशिव इत्यादिस्मृत्या शिवस्याविनाशित्वात्तद्रूपेणाहम्ब्रवीमीत्याह । यो मामिति । तत्रैवंसति यः पुरुषो मां सदाशिवमजं जन्मादिरहितमतोऽनादिञ्च लोकमहेश्वरम्वेत्ति स एव मर्त्येष्वसम्मूढः पण्डितः स एव च सर्व्वपापैर्ज्जन्ममरणादिसङ्कटैः प्रमुच्यतइत्यर्थः ॥ ३ ॥ एवंसत्यात्मनो लोकमहेश्वरत्वं सदाशिवैकतादात्म्येन दर्शयन्नाह । बुद्धिरिति । तत्र तावद्बुद्धिरन्तःकरणस्य सूक्ष्मार्थविवेकसामर्थ्यन्तत्र ज्ञानन्त्वात्मानात्मसर्व्वपदार्थावबोधः एवमसम्मोहः प्रत्युत्पन्नेषु कार्य्येष्वव्याकुलतया प्रवृत्तिः क्षमा तु दुष्टैर्दुर्भर्त्सितस्यापि निर्व्विकारचित्तता एवं सत्यन्तु प्रमाणेनावबुद्धार्थस्य तथैव प्रभाषणन्तथात्र दमो नाम बाह्येन्द्रियाणां स्वस्वविषयेभ्यो निवृत्तिः एवं शमो नाम मनसो नैश्चल्यं तथानुकूलवेदनीयं सुखम्प्रतिकूलवेदनीयं दुःखम् । एवमिह भव उत्पत्तिभावस्तु तत्तत्पदार्थसत्ता तदभावश्च तथा भयन्त्रासस्तद्विपरीतञ्चाभयमित्येते बुद्ध्यादयस्सर्व्वलोकप्र-

र्थोदर्शितः ॥ २ ॥ ननु कथमिह त्वामशिवं विजानन्विनश्यतीत्याग्रह इत्यतः पुनरुपसंहरति । तत्रैवं सतीति ॥ तत्र प्रवृत्तिलक्षणो धर्म्मो वासुदेव इतीरितः निवृत्तिलक्षणो धर्म्मस्सदाशिव इतीरित इतिपर्य्यवसिते प्रवृत्तिपूर्व्विकापि निवृत्तिरुर्व्वारुकमिवेतिश्रुतिन्यायेन परमशिवाधीनैवेति यत्पादपद्मं महतां मनोलिभिरित्यतोपिसर्वं परमशिवादेवेत्यवधेयम् ॥ ३ ॥ ननु न स्वतो वै हरिः पूज्यो न ब्रह्मा न पुरन्दरः कुतोन्ये देवतास्सर्व्वा ब्रह्मस्फूर्त्यल्पता बलादिति स्कान्दे सूतगीतोक्तसंवादेन स्वतस्सर्व्वेषामपूज्यत्वे स्थिते सत्याह । एवंसतीति । तथा चेहात्मनः श्रीकृष्णस्य मन्ये त्वाङ्कालमीशानमितिस्मृतिन्यायेन प-

भवो भावो भयञ्चाभयमेव च ॥ ४ ॥ अहिंसा समता तुष्टिस्तपो दानं यशोयशः । भवन्ति भावा भूतानाम्मत्त एव पृथग्विधाः ॥ ५ ॥ महर्षयस्सप्त पूर्व्वे चत्वारो मनवस्तथा । मद्भा-

सिद्धा मत्त एवेत्युत्तरेणान्वयः ॥ ४ ॥ एवमपरमप्याह । अहिंसेति । तत्र ताव-दहिंसा प्राणिनाम्पीडनकर्तृत्वनिवृत्तिः तथा समता चित्तस्य रागद्वेषादिराहित्य-म्, तुष्टिस्तु भोग्येष्वेतावता ऽलमितिबुद्धिः तथा तपस्तु शास्त्रीयमार्गेण काये-न्द्रियशोषणन्तथात्र दानन्तु देशे काले पात्रे च श्रद्धया समर्पणम् । एवं यशो धर्म्मतः प्रवृत्त्या तदभावश्चायशो बोध्या इत्येते बुद्ध्यादयो ऽहिंसादयश्च भा-वा मत्त एव पृथग्विधा इत्यतो लोकमहेश्वरत्वं ममापीति भावः ॥ ५ ॥ एवं सोपाधिकस्य भगवतस्सदाशिवस्य प्रभावमुक्त्वा तद्भानवतां मुनीनाम्वृत्तमप्याह । महर्षय इति । तत्र तावद्भृग्वाद्या महर्षयस्तेभ्योपि पूर्व्वे प्रथमाश्चत्वारस्सनकाद्या-स्स्वायम्भुवादयो मनवश्चतुर्दशेति मयि परमेश्वरे भावो भावना येषान्ते मद्भावा मच्चिन्तनपराः पाशुपता इत्यर्थः । तत्र मानसास्तु मनसस्सङ्कल्पादेवोद्भवो येषा-

---

रमशिवैक्यतादात्म्यत्वमूर्च्छत्वे का चतिरित्याशयः ॥ ४ ॥ तपस्त्विति । तद्यथा । तपसा कर्षितात्मा तु परमाप्नोति पूरुषः व्रताद्यैर्नियमैस्तच्च कृच्छ्रचान्द्रायणा-दिभिरिति सान्तपनस्मृतेरिति भावः । दानन्त्विति । तदेतदध्युत्तम्पुराणान्त-रे वाल्मिकीये च । तद्यथा । तुन्दे रैकशरन्धृते च दशधा सन्धानकाले शतञ्चा-पेत्वस्ति सहस्रलक्षमधिकं सत्पात्रदानं यथा, इत्थं रामशरासनं समददच्छम्भु-र्व्वराभीहृते पौलस्त्याहरणाय पूर्व्वं तपसा ऽगस्त्योदिशत् स्वाश्रम इत्यवधार्य्यम् । ५॥ सोपाधिकस्येति । तत्रैव सिद्धशिवस्यार्द्धं स्थिता गौरी तदर्द्धे हरिरित्यतद्-त्यादिस्मृतिन्यायेनास्य सोपाधिकत्वमवधार्यम् । मयि परमेश्वरइति । तदिह शिवस्यार्द्धे स्थिता गौरीतियथोक्तरीत्या मयि परमेश्वरे सदाशिवे इत्यर्थः । अत एवाह । पाशुपता इति । तथा च शिवकेशवयोरङ्काञ्छूलचक्रान्द्विजो न धारयेत्प्र-तिमान्वैदिके वर्त्मनि स्थित इत्यादिना तप्तमुद्रादेर्निषेधेनाम्निरिति भस्मेति मन्त्रेण गृहीत्वा क्रमात्तत्पुरुषाघोरसद्यवामेशनामभिः भालांसोदरवक्ष-

**र्वा मनसा जाता येषां लोक इमाः प्रजाः ॥ ६ ॥ एतां विभूतिं योगञ्च मम यो वेत्ति तत्त्वतः । सोऽविकम्पेन योगेन युज्यते नात्र संशयः ॥ ७ ॥ अहं सर्व्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते । इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥ ८ ॥ मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् । कथयन्तश्च मां नित्यं तुष्यन्ति**

न्ते न तु योनिजा अत एव सर्गाद्यकाले हिरण्यगर्भद्वारा पृथग्भूताः येषाञ्चायं लोको ब्राह्मणाद्या इमाः प्रजाश्चेत्यर्थः ॥ ६ ॥ एवमेव यो देवानाम्प्रभवश्चोद्भवश्चेत्यादिश्रुतिन्यायेन सोपाधिकस्य भगवतस्सदाशिवस्य प्रभावमुक्त्वा तत्प्राप्तिज्ञानस्य फलमप्याह । एतामिति । एवन्तर्ह्येताम्विभूतिं तत्तद्रूपेणावस्थितिं योगञ्च तन्निर्म्माणसामर्थ्यञ्च ममोपादिष्टन्तत्त्वतो ध्यानयोगतस्समाधिना यो वेद स त्वविकम्पेन योगेन पूज्यते नात्र संशय इत्यर्थः ॥ ७ ॥ ननु कथन्तादृशाविकम्पयोगप्राप्तिरित्याह । अहमिति । तत्रैवं सति वस्तुतो मत्त एव सदाशिवादिदं जगत्प्रवर्त्तते ऽत एवाहमेव सर्व्वस्य हिरण्यगर्भादिस्थावरान्तस्य जगतः प्रभव उत्पत्तिकारणमिति मत्वा मां शिवमद्वैतम्बुधा भावसमन्विता नवधा भक्त्या भजन्तइत्यर्थः ॥ ८ ॥ ननु कथं सोहम्भजनीय इति स्वयमप्याह । मच्चित्ता इति । एवन्तर्हि तच्चिन्तनन्तत्कथनमन्योन्यन्तत्प्रबोधनमेतदेकपरत्वञ्च ब्रह्माभ्यासं विदुर्बुधा इति रीत्या मय्येव सदाशिवे चेतो येषान्ते मच्चितास्तथा शरीरमत्यर्थम्प्राणञ्च प्रदद्याच्छ्रद्धया सहेत्यादिनात्मार्प्पणेन मद्गतप्राणा इत्यर्थः । एवं हठयोगेन राजयोगेन वा यथाधिकारम्परस्परम्बोधयन्तस्तथा बाह्यवृत्त्यापि मामेव सदाशिवङ्कथयन्त-

---

स्य रुद्रस्तोयामथापि वेत्यादिक्रमेण रुद्राक्षेण सह धारयेदिति पाशुपतव्रतविधिरित्यवधेयम् ॥ ६ ॥ मय्येवेति । ननु मय्येव देवकीसुते कुतो न मनो निधार्य्यतइति चेदव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धय इत्यादि स्वयमेव निराकरणात् । तस्माद्यस्य देवे परा भक्तिर्य्यथा देवे तथा गुरावित्यादि श्रुतिन्यायेन

रमयन्ति च ॥ ९ ॥ तेषां सततयुक्तानाम्भजताम्प्रीतिपूर्वकम् । ददामि बुद्धियोगन्तं येन मामुपयान्ति ते ॥ १० ॥ तेषामेवानुकम्पार्थमहमज्ञानजन्तमः । नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥ ११ ॥ अर्ज्जुन उवाच ॥ परम्ब्रह्म परं धाम पवित्रं परमं भवान् । पुरुषं शाश्वतं दिव्यमादिदे-

स्तत्रैव तुष्यन्ति रमयन्ति चेत्यादिरर्थः ॥ ९ ॥ नन्वेवम्भजतान्त्वङ्किं करोषीत्याह । तेषामिति । एवंसति तेषाम्भजतां सततयुक्तानाम्प्रीतिपूर्वकं यथा स्यात्तथा भजताम्बुद्धियोगमैश्वरम्बुद्धियोगन्तं समाधिनिर्धूतमलस्य चेतस इत्यादिलक्षणं ददामि येन बुद्धियोगेन माम्परम्पदन्ते उपयान्तीत्यर्थः ॥ १० ॥ ननु तेषाम्बुद्धियोगार्थं मध्ये किङ्करणीयमस्तीत्याह । तेषामिति । तथा च तेषाङ्कथं स्यादित्यनुग्रहार्थमहमज्ञानन्तमो नाशयामीत्यर्थः । तत्र तावन्ममात्मा शिवस्तद्भावस्थस्संज्ञानदीपेन भास्वतेत्याशयः ॥ ११ ॥ अथास्त्वेवं यतस्स्वपरम्पदत्वेन किन्न कर्त्तुमिच्छसीत्याह । परमिति । तत्रैवंसति गुणत्रयेण भिद्यन्ते ब्रह्मविष्ण्वादयस्सं मे । वस्तुतस्त्वेकमद्वैतं शिवमित्याह हि श्रुतिरित्यादिस्मृतिन्यायेन परात्परतरं धाम यद्विष्णोः परमं पदन्तत्पवित्रम्परमम्भवानेवेत्यर्थः । अथ च पुरुषो ह वै रुद्रः पुरुषान्न परङ्किञ्चिदित्यादिश्रुत्या शाश्वतम्पुरुषं दिव्यमादिदेवमजम्विभुं सदाशिवन्त्वामा-

---

मय्येव सदाशिवे स्वाभेदेन मनो निधाय चिन्तयन्त्वित्याशयः ॥ ९ ॥ माम्परम्पदमिति । तत्र यद्यपि पदं यत्परमं विष्णोस्तदेवाखिलदेहिनामित्यतस्सास्वशिवस्यैव परम्पदत्वं निर्णीतन्तथापीह हरिरूपी महादेवो लिङ्गरूपी जनार्द्दनः ईषदप्यन्तरं नास्ति भेदकृन्नरकं व्रजेदित्यादिस्मृत्या ममापि परमशिवाभेदेन परम्पदत्वे का क्षतिरित्यास्तां विस्तरः ॥१०॥ ११ ॥ स्वपरम्पदत्वेनेति । तत्रैवंसति स्वयन्तु न किमपि कर्त्तुं शक्त इत्यर्थः । अत एव सूतगीतायाम्ब्रह्मणोक्तम् । तद्यथा, दर्वीन्यायेन संसारादुद्धरामि जनांस्तिमान्न स्वातन्त्र्येण हे दे-

वमजमविभुम् ॥ १२ ॥ आहुस्त्वामृषयस्सर्वे देवर्षिर्नारदस्तथा । असितो देवलो व्यासः स्वयञ्चैव ब्रवीषि मे ॥ १३ ॥ सर्वमेतदृतं मन्ये यन्मां वदसि केशव । नहि ते भगवन्व्यक्तिं विदुर्देवा न दानवाः ॥ १४ ॥ स्वयमेवात्मनात्मानम्वेत्थ त्वं पुरुषोत्तम । भूतभावन भूतेश देवदेव जगत्पते ॥ १५ ॥ वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः । याभि-

हुरिति परेणान्वयः ॥ १२ ॥ ननु के तर्ह्याहुरित्याह । ऋषय इति । एवंसति त्वामेव परम्पदरूपन्तत्वज्ञाननिष्ठा ऋषयो नारदादयश्चेत्यादिसर्व्वे विना शिवप्रसादं हि भ्रान्तिः क्वापि न नश्यतीत्यादिना स्वयञ्चापि नारदम्प्रत्युक्तवांस्तथा मे मह्यमपि ब्रवीषीत्यधिकमन्यत्र विस्तरः ॥ १३ ॥ अथ च सर्वमेतदङ्गीकुर्वन्नाह । सर्वमिति । एवंसति सर्वमेतदृषिभिस्त्वया च यदुक्तं यच्च माम्वदसि हे केशव तत्सर्वमृतं सत्यमेवाहं मन्ये यत एतादृशीम्परम्पदाख्याञ्चिदम्बररूपाम्व्यक्तिं देवा दानवा ऋषयश्च बहुशो न विदुरित्यर्थः ॥ १४ ॥ नन्वहमपि पदं यत्परमम्विष्णोरित्यादिनोदीरितं स्वम्परम्पदं न वेद्मीति चेन्नेत्याह । स्वयमिति । एवन्तर्हि स्वयन्त्वात्मनात्मानं सदाशिवं हे पुरुषोत्तम वेत्थ जानासीत्यर्थः । यतो भूतानाम्प्राणिनां भावनो हिरण्यगर्भादिरूपेणोत्पादको भूतेशो देवदेवश्च हे जगत्पते त्वमेवेत्यर्थः ॥ १५ ॥ ननु शम्भोः प्रसादात्सर्वम्वेत्सि चेत्तदा तावद्यच्च किञ्च जगत्य-

---

वास्स्याचादिष्णुस्तथैव चेत्यादि द्रष्टव्यम् ॥१२॥ स्वयञ्चापीति । नरो नारायणश्चैव कृष्णौ धर्मनिसन्ततौ ज्ञापयन्त्वात्मनो मूलम्पूजयावो महेश्वरमित्यादि स्वयञ्चापि नारदम्प्रत्युक्तवानित्याशयः ॥ १३ ॥ चिदम्बररूपामिति । पदं यत्परमम्विष्णोस्तदेवाखिलदेहिनामित्यत्र साम्बशिवोक्त्या चिदम्बरशक्तेरपि दर्शनादिति भावः॥१४॥ स्वयमात्मनेति । तदेतत्कौर्म्मेप्युक्तम् । वक्ष्ये जाने तवानन्तां निष्कलां सर्व्वदाच्युत पश्य त्वमात्मनात्मानममलम्परमस्पदमित्यादिना तपश्चरन्तं कृष्णम्प्रति गौरीवचनादवधार्य्यम् ॥ १५ ॥ शम्भोः प्रसादादिति । तदिदमादौ

र्विभूतिभिर्ल्लोकानिमांस्त्वं व्याप्य तिष्ठ-
सि ॥ १६ ॥ कथं विद्यामहं योगिंस्त्वां सदा
परिचिन्तयन् । केषु केषु च भावेषु चिन्त्यो-
ऽसि भगवन्मया ॥ १७ ॥ विस्तरेणात्मनो
योगं विभूतिञ्च जनार्द्दन । भूयः कथय तृ-
प्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥ १८ ॥
श्रीकृष्ण उवाच ॥ हन्त ते कथयिष्यामि दि-
व्या ह्यात्मविभूतयः । प्राधान्यतः कुरुश्रेष्ठ ना-

त्रेत्यादिश्रुतिवेद्यां स्वाम्विभूतिम्ब्रवीषीत्याह । वक्तुमर्हसीति । तथा च याभिर्वि-
भूतिभिरिमाँल्लोकान्व्याप्य त्वं तिष्ठसि तास्तवासाधारणविभूतयः सर्वज्ञैरितरैर्ज्ञातुमश-
क्या यतोऽतः सर्वा अशेषेण वक्तुमर्हसीत्यर्थः ॥ १६ ॥ ननु तत्कथनस्य किम्प्र-
योजनमित्याह । कथमिति । तत्रैवंसति हे योगिन्निरतिशयैश्वर्यादिशक्तिमानहं-
मतिस्थूलमतिस्त्वां देवादिभिरपि ज्ञातुमशक्यं कथम्विद्यां यानीयां सदा त्वाङ्गुरुत्वे-
न परिचिन्तयन्नित्यर्थः । तत्र केषुकेषु च भावेषु चेतनाचेतनात्मकेषु वस्तुषु त्व-
द्विभूतिरूपेषु मया चिन्त्योसि हे भगवन्सदाशिवरूप इत्यर्थः ॥ १७ ॥ अथ स-
प्तमे नवमे च सङ्क्षेपेणोक्तमपि विस्तरेण पुनश्श्रोतुमिच्छामीत्याह । विस्तरेणेति ।
एवंसति हे जनार्द्दन विस्तरेणात्मनस्सदाशिवस्योपदेशात्त्वयङ्कृतां विभूतिञ्च
भूयः कथयेत्यर्थः यतो मे त्वद्वाक्यामृतं शृण्वतस्तृप्तिर्न्नास्तीत्यर्थः ॥ १८ ॥ अन्तो-
त्तरमपि तस्य वक्तुमाह । हन्तेति । तत्र तावद्धे कुरुश्रेष्ठ यद्यपि नास्त्यन्तो वि-

---

शिवेनविश्वरूपदर्शं कृते कृष्णेनैव द्रोणपर्वण्युक्तम् । तद्यथा, दृष्ट्वा चैनं वाङ्मनो-
बुद्धिदेहैस्स हृष्टात्मा मुमुदे देवदेवः । धन्योस्मीतिव्याहरन्देववर्यौ यत्तेऽदृश्यं दृ-
ष्टवान्विश्वरूपमित्यादि द्रष्टव्यम् ॥ १६ ॥ शिवरूप इति । तद्यथा, न शिवं शिव-
माचष्टे तस्माच्छम्भुः शिवः स्मृत इत्यतश्शिवरूपेणैवावधारयेदिति भावः ॥ १७ ॥
कथयिष्यामीति । तदिह यद् द्रोणपर्व्वणि शिवेन विश्वदर्शे कृते दृष्टा या विभू-
तिस्ता नियन्तीं कथयिष्यामीत्यर्थः ॥ १८ ॥ शिवस्येति । शिवस्यार्द्धे स्थिता गौरी

स्त्यन्तो विस्तरस्य मे ॥ १९ ॥ अहमात्मा
गुडाकेश सर्व्वभूताशयस्थितः । अहमादिश्च
मध्यञ्च भूतानामन्त एव च ॥ २० ॥ आदि-
त्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् । म-
रीचिर्म्मरुतामस्मि नक्षत्राणामहं शशी
॥ २१ ॥ वेदानां सामवेदोस्मि देवानामस्मि
वासवः । इन्द्रियाणां मनश्चास्मि भूतानाम-

स्तरस्य मे तथापि या दिव्या ह्यात्मनश्शिवस्य विभूतयस्ताः प्राधान्यतस्ते कथयिष्यामि हन्त ते मा व्याकुलो भूरित्यर्थः ॥ १९ ॥ तत्रैवंसति सर्वासु विभूतिषु मुख्यत्वेनाह । अहमिति । तथा च सर्वभूतानामाशये हृद्देशे समष्टिव्यष्टिरूपेण द्वासुपर्णेत्यादिश्रुतिवेद्यत्वेन च स्थित इत्यर्थः । एवं सर्वजगतामादिस्सृष्टिप्रवर्त्तकत्वेन तथा मध्यन्तु स्थितिप्रवर्त्तकत्वेनैवमन्तश्च नाशप्रवर्त्तकत्वेनेत्यर्थः ॥ २० ॥ ननु कथन्ते सृष्टिप्रवर्त्तकत्वमित्याह । आदित्यानामिति । तत्र तावद् द्वादशादित्यानां मध्ये विष्णुर्विष्णूनामादित्योहमेव शिवांश इत्यर्थः । एवं ज्योतिषां मध्ये ऽशुमान्न विरहमेवेत्यर्थः । एवं मरुतां मध्ये मरीचिनामहमेव तथा नक्षत्राणामधिपश्शशिश्चाहमेवेत्यर्थः ॥ २१ ॥ अथ वेदचतुष्टये सामवेदस्य शिवदैवतत्वेन गरिष्ठत्वादाह । वेदानामिति । अत एव रणयन्महतीम्वीणां सप्तस्वरविराजितां, गायन्बृहद्रथं साम शिवध्यानानुमोदित इत्यपि द्वारकायां नारदाभ्यागमे दर्शितम् ।

---

तदर्थो हरिरिष्यत इत्यादिस्मृतिव्यासेन शिवस्य विभूतय इत्यर्थः ॥ १९ ॥ सृष्टिप्रवर्त्तकत्वेनेति । गुणत्रयेण भिद्यन्ते ब्रह्मविष्ण्वादयस्त्वमी वस्तुतस्त्वेकमद्वैतं शिवमित्याह हि श्रुतिरिति कूर्म्मस्मृत्यन्तरादिति भावः ॥ २० ॥ अहमेव शिवांशा इति । तत्र तावज्जगद्योनिर्व्वारायणस्तद्योनिश्चिन्मौरी तामधितिष्ठतीत्यर्थाभिप्रायेण यो योनियोनिमधितिष्ठत्येको यस्मिन्निदं सञ्चविचैति सर्व्वमिति श्रुतेरिति भावः ॥ २१ ॥ सप्तस्वरेति । तदेतदुक्तम् । निषादर्षभगान्धारषड्जमध्यमधैवताः पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः सप्तस्वरास्त्रयो ग्रामा मूर्च्छनास्त्वेकविंशतिः द्वाविंशतिस्तु श्रुतयस्तानाः पञ्चा-

स्मि चेतना ॥ २२ ॥ रुद्राणां शङ्करश्चास्मि वित्तेशो यक्षरक्षसाम् । वसूनाम्पावकश्चास्मि मेरुश्शिखरिणामहम् ॥ २३ ॥ पुरोधसाञ्च मुख्यं मां विद्धि पार्थ बृहस्पतिम् । सेनानी-नामहं स्कन्दस्सरसामस्मि सागरः ॥ २४ ॥ महर्षीणाम्भृगुरहङ्गिरामस्म्येकमक्षरम् । य-

एवं सर्वदेवानामधिपो वासव इन्द्रस्तथेन्द्रियाणामेकादशानाम्प्रवर्त्तकं मनो भूतानां बुद्धेः प्रवर्त्तकत्वेन चेतनाचैतन्यमप्यहमेवेत्यर्थः ॥ २२ ॥ एवमेकादशरुद्राणामपि गरिष्ठत्वेन जगतां शङ्करः कल्याणकर्त्ताहमेवेत्याह । रुद्राणामिति । तद्यथोक्तं स्कान्दे । निश्चलाभिः कथङ्किं स्यात्प्रजाभिश्चेति चिन्तयन्ब्रह्मरन्ध्रे ततश्शम्भुः प्रादुर्भूतावदद्विचः । ईश्वर उवाच । मच्छायैकादशा रुद्रास्त्वत्सृष्टेरुपकारकाः, मनः षष्ठेन्द्रियाणाम्वै चैतन्यन्तद्भविष्यतीत्यादि बोध्यम् । एवं यक्षरक्षसां मध्ये वित्तेशो धनाध्यक्षः कुबेरः तथाष्टविधानां वसूनां मध्ये वासवो वैश्वानरस्तथात्युच्छ्रितत्वाच्च शिखरिणां मेरुरहमेवेत्यर्थः ॥ २३ ॥ एवं राज्ञाम्पौरोहित्यस्योत्कृष्टत्वादाह । पुरोधसामिति । तथा च हे पार्थ पुरोधसां राजपुरोहितानां मध्ये मुख्यं मां बृहस्पतिम्विद्धीत्यर्थः । एवं सेनानीनां देवसैन्यानामधिपः स्कन्दः कार्त्तिकेयो ऽहमेव तथा सरसां जलाशयानामधिपस्सागरश्चाहमेवेत्यर्थः ॥ २४ ॥ एवं सप्तसु सर्वोत्कृष्टत्वादेवाह । महर्षीणामिति । तथा चेह सप्तर्षीणां मध्ये सर्वोत्कृष्टत्वाद्

---

मद्गूनका इत्यादिगांधर्व्वविद्याप्रबन्धे द्रष्टव्यम ॥ २२ ॥ ब्रह्मरन्ध्र इति । तद्यथा, ब्रह्मरन्ध्रे शिवं ध्यायेद्ब्रह्माणन्तु हृदि स्थितं नाभौ विष्णुं समाराध्य प्रजपेत्परदेवतामित्यादि सन्ध्यादौ विशेषतो विहितमित्यवधेयम् ॥ २३ ॥ उत्कृष्टत्वादिति । तद्यथा, पिता भ्राता च माता वै त्वन्नदाता पुरोहितः । मन्त्रविद्याप्रदः कन्याप्रदश्च त्वष्टधा गुरुः । उपमन्युस्तु शाण्डिल्य गर्गश्चास्ति पुरोहितः । पादावनेजनैर्गेहे सिञ्चनीयं तयोः खलु । देवानां यो गुरुः सोऽस्मत्स्वापि गुरुरीश्वरस्सदाशिवो न चान्यो हि गुरुश्शास्ता परात्पर इत्यादिपाठोत्तोत्कृष्टत्वादिकमवधार्य्यम् ॥ २४ ॥ विशेष इति । तद्यथा स्कान्देऽपि

ज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः ॥२५॥
अश्वत्थस्सर्व्ववृक्षाणां देवर्षीणाञ्च नारदः ।
गन्धर्व्वाणाञ्चित्ररथस्सिद्धानाङ्कपिलो मुनिः
॥ २६ ॥ उच्चैश्श्रवसमश्वानां विद्धि माम-
मृतोद्भवम् । ऐरावतं गजेन्द्राणां नराणाञ्च

भृगुस्तथा गिराम्पदलक्षणानां मध्ये चोङ्कारस्तद्वाच्यश्शिवशक्तिश्श्रेयोङ्कारस्य महेश्वरबीजत्वङ्गायत्रचर्थत्वञ्च स्कान्देप्युक्तम् । तद्यथा । शिवो ब्रह्म शिवा शक्तिश्चन्द्रचन्द्रिकयोरिव । लाक्षणन्तद्धारस्तत्र वाच्यवाचकयोर्भिदेत्यादिना शक्त्याख्ये प्रणवे तु स्त्रीत्वे टाविति विशेषः । एवमशुचिर्वा शुचिर्वापि गच्छंस्तिष्ठन्स्वपन्नपि, मन्त्रैकसरणो भूत्वा मनसैव समभ्यसेदित्यादिस्मृत्या सकलयज्ञानां मध्ये जपजज्ञोप्यहमेवेत्यर्थः । एवं स्थावराणां स्थितिमतां मध्ये हिमालयोप्यहमेवेति पूर्वत्र शिखरवतां मध्ये मेरुरहमेवेत्युक्तमिति स्थावरत्वेन शिखरवत्त्वेन चार्थभेदान्न पौनरुक्त्यमिति विवेकः ॥ २५ ॥ एवं सर्ववृक्षाणां वनस्पतीनां मध्येप्यहमेवेत्याह । अश्वत्थ इति । एवमिह दरिद्रातापतस्तप्त्वा स्वस्थोप्यश्वत्थताङ्गतः । पश्चाच्छिवाज्ञया देवैस्तृप्तो यातो गरिष्ठतामित्यादिस्कान्दवचनैरार्षत्वात्परसवर्णत्वादिना साधुत्वमवधार्यम् । एवं देवर्षीणां नारदस्यापि तत्त्वं सामगत्वेनोदीरितम् । तथा गन्धर्वाणां सामान्यतो गानधर्मवतां चित्ररथोप्यहमस्मि एवं जन्मैव धर्मज्ञानवैराग्यैश्वर्यातिशयप्राप्तानां सिद्धानाङ्कपिलो मुनिरहमेवेत्यर्थः ॥ २६ ॥ एवमपररूपेणाप्युत्कृष्टं मां विद्धीत्याह । उच्चैरिति । तत्रैवंसत्यश्वानां मध्ये त्वमृतोद्भवमश्वन्तथा गजेन्द्राणाममृतोद्भवं गजेन्द्रं नराणाञ्च मध्ये नराधिपं मामेव विद्धीति सर्वत्रा-

---

न्नम्, तदीयः प्रणवो देवि मदीयः प्रणवस्तथा स्त्रीत्वे टाप् त्वदीये तु मदीये तन्न चेष्यतइत्यादि पार्व्वतीम्प्रति सदाशिवोक्तितोपि बोध्यम् ॥ २५ ॥ परसवर्णत्वादिनेति । एवमिहार्षत्वादेव स्वश्वदघटकस्य दन्त्यस्य तालव्यत्वमप्यार्षत्वादेव बोध्यम् ॥ २६ ॥ नराधिपमिति । इत्यातोप्याधिक्येन स्कान्दे दर्शितम् । राजाधिराजस्सर्व्वेषां त्र्यम्बकः त्रिपुरान्तकः तस्यैवानुचराः सर्व्वे ब्रह्मवि-

नराधिपम् ॥ २७ ॥ आयुधानामहम्वज्रं धेनूनामस्मि कामधुक्। प्रजनश्चास्मि कन्दर्पस्सर्पाणामस्मि वासुकिः ॥ २८ ॥ अनन्तश्चास्मि नागानां वरुणो यादसामहम्। पितॄणामर्य्यमा चास्मि यमस्संयमतामहम् ॥ २९ ॥ प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम्। मृगाणाञ्च मृगेन्द्रोहम्वैनतेयश्च पक्षिणाम् ॥ ३० ॥ पवनः पवतामस्मिराम-

न्वयः ॥ २७ ॥ तथायुधानामप्यहमेवेत्याह । आयुधानामिति । तथा चायुधानां दधीचेरास्थिसम्भवं वज्राख्यमस्त्रमहमेवेत्यर्थः । एवमेव धेनूनाङ्कामप्रदानां मध्ये कामधुक्प्रजनयितॄणां मध्ये कन्दर्पः सर्पाणाञ्च राजा वासुकिश्चाहमेवेत्यर्थः ॥ २८ ॥ एवन्तत्र जातिप्रभिन्नमाश्रित्याप्याह । अनन्तश्चेति । तथा च नागानां मध्ये शेषाख्योहमेव एवं यादसानां जलवतां वरुणः पितॄणां त्वर्यमा धर्माधर्मनियन्तॄणाञ्च मध्ये यमश्चाहमेवेत्यर्थः ॥ २९ ॥ एवमपररूपेणाप्याह । प्रह्लादश्चेति । तत्र तावद्दैत्यानां मध्ये मद्भक्त्या विजृम्भितोपि पुनश्शिवनिष्ठया प्रबलत्वात्प्रह्लाद इत्यर्थः । अत एव स्कान्दे प्रह्लादम्प्रति नृसिंहेनोक्तम् । तद्यथा, ज्ञानं महेश्वरादिच्छेन्मोक्षमिच्छेज्जनार्द्दनादारोग्यं भास्करादिच्छेद्धनमिच्छेद्धुताशनादित्यादि द्रष्टव्यम्। एवं कलयतां क्षणादिना संख्यानकर्तॄणां मध्ये कालः, एवमेव मृगाणां पशूनां मध्ये मृगेन्द्रः सिंहः पक्षिणां मध्ये वैनतेयश्चाहमेवेत्यर्थः ॥ ३० ॥

---

चासुरादय इत्यादि द्रष्टव्यम् ॥ २७ ॥ कन्दर्प इति । एवमिहाप्याधिक्यं शिवस्य काशीखण्डेप्युक्तम् । यत्कन्दर्पो विदह्यमानस्समानं देवैरन्यैर्म्मजातस्स्वयं हीत्यादिना व्यासभुजस्तम्भोक्त्यावधार्य्यम् ॥ २८ ॥ यमश्चेति । यच्चैवम्प्रबलोपि यमश्शिवम्पाशुपतान्बिभेतीत्यप्युक्तम् ये भस्मधारणं त्यक्त्वा सन्ध्याङ्कुर्व्वन्ति मानवास्तानानयन्तु नरकेष्विति घोरेषु यदूत इत्यादि स्कान्दएव द्रष्टव्यम् ॥ २९ ॥ शिवनिष्ठयेति । तद्यथा, प्रह्लादेयो ध्रुवेयश्च बालकोकेश्वरस्तथा लक्ष्मीर्मी द्रौपदीयश्च रुक्मिणीत्याद्यनेकाम इत्यादिमहाभागपुराणादप्यवगन्तव्यम् ॥ ३० ॥

शशस्त्रभृतामहम्। झषाणां मकरश्चास्मि स्रो-
तसामस्मि जाह्नवी ॥ ३१ ॥ सर्गाणामादिर-
न्तश्च मध्यञ्चैवाहमर्ज्जुन। अध्यात्मविद्या-
विद्यानाम्वादः प्रवदतामहम् ॥३२॥ अक्षरा-
णामकारोस्मि द्वन्द्वस्सामासिकस्य च। अह-

एवमपररूपेणाप्याह। पवन इति। तथा चेह पावयितॄणाम्वेगवताम्वा मध्ये पवनः पावयिता वेगवान्वाहमेवास्मीत्यर्थः। तथा तुन्देरेकशरन्धृते च शतधा सन्धानकाले शतं चापे त्वस्ति सहस्रलक्षमधिकं सत्पात्रदानं यथेत्याद्युक्तस्मृत्या रामाय त्वजेयं शरासनं सदाशिवेनैव दत्तमित्यतश्शस्त्रभृतां मध्ये रामश्चाहमेवास्मीत्यर्थः। एवं झषाणां मत्स्यानां मध्ये मकरो राघवनामा मत्स्यश्चाहमेवेत्यर्थः ॥ ३१ ॥ एवमेव यच्च किञ्च जगत्यत्रेत्यादिश्रुत्या सर्वम्प्रपञ्चजातमप्यहमेवेत्याह। सर्गाणामिति। तत्र तावत्सर्वस्य प्रपञ्चजातस्याद्यन्तमध्यरूपत्वेन विष्णुरूपत्वे स्थिते यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठित इत्यादिश्रुत्या ऽविनाशिनः सदाशिवस्य विश्वाधिकतया पृथग्रूपत्वं स्फुटीकृतम्। एवमध्यात्मविद्यारूपत्वाम्विष्णोस्तद्वेद्यत्वञ्च शिवस्यैवेति वेदो नारायणः साक्षाच्छिवेनेद्धः प्रकाशतइत्यादिस्मृत्याप्यवधार्यम्। एवम्वादौ नाम इदं मे ऽस्ति मतं नेदम्पक्षयोर्यत्र चाग्रह इत्यादिना सिद्धान्तपर्यवसायित्वेन प्रमाणप्रमेयेत्यादौ विस्तरः ॥ ३२ ॥ एवमपररूपेणाप्याह। अक्षराणामिति। तथा चेहाकारो वै सर्वावागिति श्रुतेर्न्नामरूपात्मकत्वम्विष्णोस्तद्वेद्यन्तु शिवस्यैवेति पूर्वस्मादपि स्फुटीकृतम्। एवम्प्रकृतिपुरुषयोरपि ममैव द्वासुपर्णेत्या-

---

सत्याच्चदानमिति। अत एवासत्पात्रदाननिषेधोपि स्कान्दे दर्शितः, तद्यथा। यस्त्वसत्पात्रे ददातीह स्वद्रव्यं धर्मसाधनम्पूर्व्वस्मादधिकः पापी यतस्तत्पापभाजनइत्यादि बहुशस्तच्चैव मत्कृते दिग्विजये च विस्तरेण द्रष्टव्यम् ॥ ३१ ॥ विश्वाधिकयेति। तथा च श्रुतिः, यो देवानाम्प्रभवश्चोद्भवश्च विश्वाधिको रुद्रो महर्षिर्हिरण्यगर्भं जनयामास पूर्व्वमित्यादिश्वेताश्वतरोपनिषदादौ द्रष्टव्यम् ॥ ३२ ॥ स्फुटीकृतमिति। वाच्यवाचकयोर्भिदेत्यादिना पूर्व्वमेवोक्तत्वादिति भावः। कालकर इति। तद्यथा। कलनात्सर्व्वभूतानां ब्रह्मादीनां नि-

मेवाक्षयः कालो धाताहम्विश्वतोमुखः ॥३३॥
मृत्युस्सर्व्वहरश्चाहमुद्भवश्च भविष्यताम्। की-
र्त्तिः श्रीर्व्वाक् च नारीणां स्मृतिर्म्मेधा धृतिः
क्षमा ॥ ३४ ॥ बृहत्साम तथा साम्नाङ्गाय-
त्री छन्दसामहम्। मासानां मार्गशीर्षोहमृ-

दिश्रुत्या प्राधान्यमित्यतो द्वन्द्वोप्युभयार्थप्राधान्येनाहमेवेत्यर्थः। एवमव्यक्तादी-नि भूतानीत्यादावव्यक्तशब्दवाच्यस्ततः परं कालोप्यहमेव कालः कालकरो हर इत्यादिस्मृतेः एवङ्कर्मफलदातॄणां मध्ये विश्वतोमुखः सर्वतोमुखो धाता सर्व-कर्मफलप्रदातेश्वरः क कर्म प्रध्वस्तम्फलति पुरुषाराधनमृतइत्यादिस्मृतिवेद्योप्यह-मेवेत्यर्थः ॥ ३३ ॥ एवं यमानुयायी मृत्युरप्यहमेवेत्याह। मृत्युरिति। तद्यथा। मारय त्वं महामृत्यो जनान्सर्वान्गतायुषो, रुदित्वा सोप्युवाचेत्थङ्कुलं नाव हे भृश-मित्येवं यमम्प्रति ब्रुवते मृत्यवे प्रवृत्त्यर्थं रोगानुत्पादयामास तन्निवृत्त्यर्थञ्चायुर्वेदो-पीत्यत्रधार्यम्। एवमेव भविष्यताम्भाविकल्पानां मध्ये यत्रातमस्तन्न दिवा न रात्रिरित्यादिश्रुतिवेद्यो य उद्भवः स चाहमेवेत्यर्थः। एवं श्रीरित्यादि नारीणां मध्ये सत्कीर्त्तिर्गरिष्ठेत्याह। कीर्त्तिरिति। तद्यथा, सत्कीर्त्या विशदा मतिर्ज्ज-निमतां लोके च स्वर्गेप्यथ यां शंसन्ति महाधियो नृपतयो विद्यावतंसास्तथा। नासत्कीर्त्तिस्विमलमतयश्चाश्रयन्त्येव तस्माद्दानैर्द्धर्मैर्विविधविभवैश्चाश्रयन्त्येव की-र्त्तिमित्यादिना षड्वर्गेषु कीर्त्तेर्गरिष्ठत्वमवधार्यम् ॥ ३४ ॥ एवम्वेदानां सामवेदो-स्मीत्युक्तन्तत्र शाखाविशेषं दर्शयितुमाह। बृहदिति। तदेतच्च गायन्वृहद्रथं साम शिवध्यानानुमोदित इत्याद्युक्तमवधेयम्। एवमेवोक्तात्युक्ता तथा मध्या प्रति-

---

मेषतः। कालशब्देन निर्द्दिष्टोह्यखण्डः परमशिव इति ज्ञानस्वरोदयोक्तं रवधा-र्य्यम् ॥ ३३ ॥ आयुर्व्वेदोपीति। तत्र तावत् पुराणन्यायमीमांसाधर्म्मशा-स्त्राङ्गमिश्रितैर्व्वेदैश्चतुर्द्दशैत्युक्तासुपवेदैस्तथाष्टादशैत्यचाष्टादशविद्यासूपवेदले-नायुर्व्वेदश्चाप्युक्तत्वेन तत्र तस्य स्थानान्यप्यष्टविधान्युक्तानि। तद्यथा। सूत्रं विधोक्तं शारीरन्त्वैन्द्रियं वै चिकित्सितं निदानं वै विमानञ्च वि-कल्पस्त्विविरिष्टञ्चेत्यधिकमन्यत्र विस्तरः ॥ ३४ ॥ गायत्रीति। तत्रैवंस-ति गायत्र्या एव शिवेन साहित्यात् प्रवर्देवमयत्वं सर्वोपास्यत्वं सर्व्वं

तूनाङ्कुसुमाकरः ॥ ३५ ॥ द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम् । जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहम् ॥३६॥ वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनञ्जयः । मुनीनामप्यहं व्यासः कवीनामुशना कविः ॥ ३७ ॥ दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम् । मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानव-

ष्ठान्यासु पूर्विका । गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव चेत्यादिचतुर्विंशतिछन्दसां मध्ये गायत्रीछन्दश्च गरिष्ठत्वादहमेवेत्यर्थः । एवं सकलसुखहेतुत्वान्मासानां मार्गशीर्षस्तथा षड्तूनां मध्ये कुसुमाकरश्चाहमेवेति बोध्यम् ॥ ३५ ॥ एवं छलयताम्परवञ्चनकर्तॄणां मध्ये देवनादिलक्षणं द्यूतमप्यहमेवेत्याह । द्यूतमिति । एवन्तेजस्विनां तेजः पराजितानां मध्ये जयो व्यवसायिनां मध्ये च व्यवसायः सत्ववतां मध्ये सात्विकश्चाहमेवेत्यर्थः । इह यद्यपि निद्रालस्यवशित्वाच्च कृष्णत्वात्तामसो हरिरित्यादिस्मृत्या हरेस्तामसत्वमुदीरितन्तथापि बाह्यसत्वमयो विष्णुः स्त्रीसञ्ज्ञो लोकभावन इत्यादिस्कान्दवचसा तत्त्वमवधार्यम् ॥ ३६ ॥ एवं यादवानाम्वासुदेवस्त्वहमेवेत्याह । वृष्णीनामिति । तथा च वसत्यद्धा तु सर्वत्रेति स्मृत्या वासुदेवः पाशुपतश्चाहमेवेत्यर्थः । एवमेव धनं राज्यन्तज्जयत्वेन पाण्डवानां धनञ्जयोऽर्जुनो मुनीनां मननशीलानाम्वेदव्यासः कवीनां त्रिकालत्वेन क्रान्तदर्शिनामुशना कविश्चाहमेवेत्यर्थः ॥ ३७ ॥ एवमुत्पथप्रवृत्तौ निग्रहो दण्डः सोऽपि दमयतामहमेवेत्याह । दण्ड इति । तथैव जिगीषतां जेतुमिच्छतां नीतिर्न्यायो जयोपायस्य प्रकाशको ऽहमेवेत्यर्थः । एवङ्गुह्यानाङ्गोप्यानाम्वाचंयमत्वम-

---

शाक्ता द्विजाः प्रोक्ता न शैवा न च वैष्णवा आदिदेवीमुपासन्ते पवित्राम्वेदमातरमित्याद्यधिकमप्यन्यत्र द्रष्टव्यम् ॥ ३५ ॥ बाह्यसत्वमयइति । अत एवान्तस्तत्वमयश्शम्भुः कर्पूरामस्तुरीयक इत्याद्युक्तत्वान्न विस्मर्त्तव्यम् ॥ ३६ ॥ पाशुपत इति । अत एव च शैवं शान्तम्प्रणमत गोविन्दम्परमानन्दमित्यादि गोविन्दाष्टकेप्युक्तमित्यवधार्य्यम् ॥ ३७ ॥ ज्ञानवतामिति । शिवज्ञानसमं

तामहम् ॥ ३८ ॥ यच्चापि सर्व्वभूतानां बी-
जं तदहमर्ज्जुन । न तदस्ति विना यत्स्या-
न्मया भूतं चराचरम् ॥ ३९ ॥ नान्तोस्ति
मम दिव्यानां विभूतीनां परंतप। एष तूद्देश-
तः प्रोक्तो विभूतेर्व्विस्तरो मया ॥ ४० ॥ यद्य-
द्विभूतिमत्सत्वं श्रीमदूर्ज्जितमेव वा । तत्त-
देवावगच्छ त्वं मम तेजोंशसम्भवम् ॥ ४१ ॥
अथ वा बहुनैतेन किं ज्ञातेन तवार्ज्जुन । वि-

हमेवास्मि नहि तूष्णींस्थितस्याभिप्रायो गम्यते एवम्वाचा मौनन्तु बालानां सतां सहजसाङ्गितमित्यादिस्मृत्या तल्लभ्यं शिवज्ञानमपि ज्ञानवतामहमेवेत्यर्थः ॥ ३८ ॥ इहापरं किम्बहु वक्तव्यं सर्वभूतानां यद्बीजमव्यक्ताख्यन्तदप्यहमेवेत्याह । यच्चापीति । तत्रैवंसति हे अर्ज्जुन यच्च किञ्च जगत्यत्रेत्यादिश्रुत्या मया विना यत्स्याद्भवेच्च तद्वस्तुतो विज्ञातव्यञ्चराचरं नास्त्येवेत्याशयः ॥ ३९ ॥ अथेदम्प्रकरणमुपसंहरन्नाह । नान्त इति । तथा चेह हे परन्तप मम दिव्यानां विभूतीनामन्त इयत्ता नास्तीत्यर्थः । एष तु त्वाम्प्रत्युद्देशतः एकदेशेन विभूतेर्विस्तरः प्रोक्तो मयेत्यर्थः ॥ ४० ॥ तथेह स्थालीपुलाकन्यायेन सर्वं संग्रहीतुमप्याह । यद्यदिति । तद्यथेह यद्यत्सत्वं प्राणिनां मध्ये विभूतिमदैश्वर्य्ययुक्तं तथा श्रीमन्नाम श्रीर्ल्लक्ष्मीर्विद्या शोभेत्यादियुक्तम्वोर्ज्जितम्प्रवृद्धं तत्तदेव मम तेजोंशसमुद्भूतं त्ववगच्छ जानीहीत्यर्थः ॥ ४१ ॥ एवमवयवशो विभूतिमुक्त्वा साकल्येनापि तामाह । अथ

---

ज्ञानं यथा नास्ति श्रुतौ स्मृतौ । तथा वैदिकतुल्यं तु नास्ति तन्वावल्लभ्विष्वित्यादि स्कान्दवचनैर्व्यवस्थापितत्वादिति भावः ॥ ३८ ॥ नास्त्येवेति । एवन्तद्वीतोन्यथो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठित इत्यादावाधिक्येन विश्वाधिकतया दर्शितमित्यवधेयम् ॥ ३९ ॥ एकदेशेनेति । एवंसत्यर्द्धसाधास्थिता नित्या यानुच्चार्य्याविशेषत इत्यादावर्द्धमात्रायां स्थिता या बिन्दुप्रकालिस्तद्रूपेणैकदेशेनेत्यर्थः ॥ ४० ॥ तत्तदेवेति । तत्र यद्यपि सर्व्वरूपेणाहमेव तथापि विशेषतो मोचोपयोगित्वांशे मम तेजोंशसमुद्भूतमित्यर्थः ॥ ४१ ॥ किञ्चिना-

ष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥ ४२ ॥ इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्ज्जुनसम्वादे विभूतियोगो नाम दशमोऽध्यायः ॥०॥ अर्ज्जुन उवाच ॥ मदनुग्रहाय परमं गुह्यमध्यात्मसञ्ज्ञितम् । यत्त्वयोक्तं वचस्तेन मोहोयं विगतो मम ॥ १ ॥ भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया । त्वत्तः कमल-

वेति । तत्रैवंसति हे अर्ज्जुन बहुनैतेनाशेषेण ज्ञानेन किं तव स्यादिदं कृत्स्नं सकलं जगदेकांशेन विष्टभ्याहमेवास्मि मद्व्यतिरिक्तं विज्ञातव्यं किञ्चिन्नास्ति पादोस्य विश्वाभूतानीत्यादिश्रुतेरिति बोध्यम् ॥ ४२ ॥ इति श्रीमत्पदवाक्यप्रमाणयोगिवर्य्यविप्राजेन्द्रविरचिते तत्वैकदर्शने भाष्ये विभूतियोगनिरूपणं नाम दशमोध्यायः ॥ * ॥ आब्रह्मस्तम्बपर्यन्तन्त्वर्ज्जुनाय हृदि स्थितम् । दर्शितं विश्वतोरूपं प्रोचे त्वेकादशे भृशम् । इहोत्कण्ठया पूर्वोक्तमेवाभिनन्दयन्नाह । मदनुग्रहायेति । तथा चेह संसृतिशोकस्य निवृत्त्युपायम्परमङ्गुह्यमध्यात्मसंज्ञितं यत्त्वयोक्तन्तेन वचसा मोहोयं शत्रुपराजयकृतो विगत इति परमार्थः ॥ १ ॥ ननु किन्तद्श्रुतं येन ते मोहो विगत इत्यप्याह । भवाप्ययाविति । तत्र तावद् भूतानां भवाप्ययावुत्पत्तिविनाशौ तथा सर्वात्मत्वलक्षणं निरुपाधिकं शिवज्ञानञ्चाव्ययं हे

---

स्तीति । यस्यांशांशेन सृज्यन्ते देवतिर्य्यङ्नरादय इत्याद्युक्तत्वादिति भावः ॥४२॥ इति श्रीमद्योगिवर्य्यविप्रराजेन्द्रात्मजविरचिते भाष्यप्रदीपे दशमोध्यायः ॥ * ॥ दर्शितमिति । यदेतद्विश्वरूपं सदाशिवप्रसादाच्छ्रीकृष्णेन दृष्टन्तदेतदर्ज्जुनायापि हृदि स्थितं विश्वतोरूपं श्रीकृष्णेन दर्शितमितीदमत्राध्याये प्रोचे दर्शयामीत्यर्थः ॥ १ ॥ इत्याशय इति । तत्र तावद्दक्षयज्ञप्रमथने यत्र शम्भुर्न वा गौरी नेवं यज्ञस्य भूतले । तत्रागतः खगारूढ धिग्धिग् रासभवाहन इत्येवमुक्त्वा विष्णोर्वक्षसि त्रिशूलभेदनोत्तरन्तु दक्षयज्ञाद्वर्गत्वा तपसा तोषयच्छिवं कदा चित्तो-

पत्राक्ष माहात्म्यमपि चाव्ययम् ॥ २ ॥ ए-
वमेतद्यथात्थ त्वमात्मानं परमेश्वरम्। द्रष्टु-
मिच्छामि ते रूपमैश्वरं पुरुषोत्तम ॥ ३ ॥
मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो ।
योगेश्वर ततो मे त्वं दर्शयात्मानमव्यय-
म् ॥ ४ ॥ श्रीकृष्ण उवाच ॥ पश्य मे पार्थ
रूपाणि शतशो ऽथ सहस्रशः । नानाविधानि
दिव्यानि नानावर्णाकृतीनि च ॥ ५ ॥ पश्या-
दित्यान्वसून् रुद्रानश्विनौ मरुतस्तथा । बहू-
न्यदृष्टपूर्व्वाणि पश्याश्चर्य्याणि भारत ॥ ६ ॥

कमलपत्राक्ष त्वत्तश्श्रुतमिति हरिस्ते साहस्रमित्यतोवधारितमित्याशयः ॥ २ ॥ अथ यदि त्वमेवाहङ्गिरोपासनया सर्वात्मना शिवस्तिष्ठसि तर्हि ममापि तत्सर्व्वात्मत्वं दर्शय यथाहमपि विजानीयामिति पूर्वोक्तमभिप्रेत्य पुनराह । एवमिति । तत्रैवंसति पुरुषाणां यथा विष्णुरित्याद्युक्तेर्हे पुरुषोत्तम ते तवैश्वर्यं यत्परमाशिवेन द्रोणपर्वणि भवते दर्शितं तन्ममाप्यद्भुतं दर्शय तद् द्रष्टुमिच्छामि यदि दर्शयितुं मन्यसे चेत्ततो ऽव्ययमात्मानञ्च दर्शयेति द्वयोरर्थः ॥ ३ ॥ ४ ॥ एवमत्यन्तभक्तेनार्ज्जुनेन प्रार्थितः सन्कृष्णोप्युवाच । पश्येति । तत्रैवंसति हे पार्थ शतशोथ सहस्रशो नानावर्णाकृतीनि दिव्यानि रूपाणि शिवाज्ञया दर्शयामि पश्येत्यर्थः॥५॥ ननु कानि तर्हि नानाविधानि दिव्यानि रूपाणीति पुनराह । पश्येति। तत्र तावद् द्वादशादित्यानष्टौ वसूनेकादशेन्द्रियाधीशान् रुद्राँस्तथा द्वावश्विनौ मरुतश्चै-

ऽच्छिन्नमेव सहस्राणां सुपूर्तयद्दति हरिहरचैत्रकथयावधार्य्यम् ॥२॥३॥४॥ शिवाज्ञयेति । तद्यथा । यद्यत्करोमि तत्सर्व्वं शिवमेकमनामयम् । स्मरंस्तस्योपदेशेन सर्व्वं स्ववरदानत इत्यादिस्कान्दवचनैरवधेयम् ॥ ५ ॥ रुद्रानिति । सर्व्वेन्द्रियाधीशान्रुद्रच्छायाप्रभवानेकादशरुद्रानित्यर्थः । यस्त्वेको रुद्रो न द्वितीयाय तस्थुरित्यादिश्रुतिवेद्यो रोदयत्येव यस्सर्व्वानित्यादिस्मृतिवेद्यश्च स पृथगेव स-

इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम् ।
मम देहे गुडाकेश यच्चान्यद् द्रष्टुमिच्छ-
सि ॥ ७ ॥ न तु मां शक्यसे द्रष्टुमनेनैव स्वच-
क्षुषा । दिव्यं ददामि ते चक्षुः पश्य मे योग-
मैश्वरम् ॥ ८ ॥ सञ्जय उवाच । एवमुक्त्वा
ततो राजन्महायोगेश्वरो हरिः । दर्शयामा-
स पार्थाय परमं रूपमैश्वरम् ॥ ९ ॥ अने-
कवक्त्रनयनमनेकाद्भुतदर्शनम् । अनेकदि-
व्याभरणं दिव्यानेकोद्यतायुधम् ॥ १० ॥ दिव्य-

कोनपञ्चाशत्तथान्यान्यप्याश्चर्याणि रूपाण्यदृष्टपूर्वाणि बहूनि पश्येत्यर्थः ॥ ६ ॥
तत्र न पुनः खल्वेतावदेव किन्तु मद्देहस्थं शिवाज्ञया सर्वं जगदपि द्रष्टुमर्हसी-
त्याह । इहैकस्थमिति । तत्रैवंसति हे गुडाकेश नाम गुडाका निद्रा तदीश शिव-
मद्वैतन्तुरयामित्यादिश्रुतिवेद्यपरमशिवज्ञानयोग्य मम शरीरे यच्चान्यदनेकविधन्तद्
द्रष्टुमिच्छसीत्यर्थः ॥ ७ ॥ नन्तु त्वामीदृशं केन चक्षुषा पश्यामीत्याह । नत्विति ।
तस्मात्ते तव दिव्यन्तृतीयं ज्ञानाख्यं चक्षुर्ददामि येन त्वमेवं यथोक्तलक्षणम्वैराजं
स्वरूपम्पश्यसीत्यर्थः ॥ ८ ॥ अथैवम्पूर्वोक्तम्वृत्तं संजयो धृतराष्ट्राय राज्ञे स्मा-
रयन्नप्याह । एवमिति । तस्माद्यद् द्रोणपर्वणि परमशिवेन कृष्णाय हरये दर्शि-
तन्तदेव ततोन्यूनम्वा विश्वरूपं हरिरपि पार्थाय दर्शितवानित्याशयः ॥ ९ ॥
इह तदेव विश्वरूपं दर्शयितुम्विशिनष्टि । अनेकेति । तत्रैवंसत्यनेकानि वक्त्राणि
नयनानि च विस्मयहेतूनि दृश्यन्ते यस्मिन्स्वरूपे तथानेकानि दिव्याभरणानि
यस्मिंस्तथा दिव्यान्यनेकान्यायुधानि यस्मिंस्तत्तथास्वरूपमित्यर्थः ॥ १० ॥ तथा-

---

र्वात्मा सर्व्वसाक्षीत्याशयः ॥ ६ ॥ शिवमद्वैतमिति । यतस्तुरीय एव निद्रातीतो भवितुमर्हतीति भावः ॥ ७ ॥ ज्ञानचक्षुषेति । यतश्शिवमृते ना कस्यापि ज्ञानचक्षुष्ट्वासम्भवादित्यत्रधार्य्यम् ॥ ८ ॥ तदेवेति । यद् द्रोणपर्व्वणि सदाशिवेन विभुस्वरूपं दर्शितन्तदेव ततोन्यूनम्वेत्यर्थः ॥ १० ॥ विराड्रूपमिति । यद्रूपं

माल्याम्बरधरं दिव्यगन्धानुलेपनम् । सर्व्वा-
श्चर्य्यमयं देवमनन्तम्विश्वतोमुखम् ॥ ११ ॥
दिवि सूर्य्यसहस्रस्य भवेद्युगपदुत्थिता । य-
दि भाः सदृशी सा स्याद्भासस्तस्य महा-
त्मनः ॥ १२ ॥ तत्रैकस्थं जगत्कृत्स्नं प्रविभक्त-
मनेकधा । अपश्यद्देवदेवस्य शरीरे पाण्ड-
वस्तदा ॥ १३ ॥ ततस्स विस्मयाविष्टो हृष्टरो-

परमप्याह । दिव्यमाल्येति । तत्र तावद्दिव्यानि माल्यानि स्वर्णादिमयान्याभरणानि वस्त्राणि च ध्रियन्ते येन तद्दिव्यमाल्याम्बरधरमित्यादिविश्वतोमुखं यद्यावद्विराड्रूपं दर्शयामासेत्याशयः ॥ ११ ॥ ननु कीदृशं वत्तेजोमयं तत्स्वरूपमित्याह । दिवीति । तत्रैवंसति दिव्यन्तरिक्षे सूर्यसहस्राणामपरिमितसूर्यसहस्रशः समूहस्य युगपदुत्थितस्य यदि भाससदृशी स्यान्नाम भवेत्तदा सा तस्य महात्मनो विश्वरूपस्य भासो दीप्तेः सदृशी यदि स्याद्यदि वा न स्यादित्यभूतोपमापरत्वेनोक्तिरित्यवधार्यम् ॥ १२ ॥ ननु कथम्पुनः सोर्ज्जुनो देवदेवस्य विश्वरूपस्य शरीरेऽपश्यदित्याह । तत्रेति । तत्र तावदेकस्थमेव सचराचरं जगत्सर्वं तच्छरीरे पाण्डवो ऽपश्यदित्यर्थः ॥ १३ ॥ एवमद्भुतस्वरूपदर्शनेनार्ज्जुनो विभयाञ्चकारेत्याह । तत इति । तस्मात्तद्दर्शनानन्तरम्विस्मयेनावि-

---

ज्ञानचक्षुर्विना न कस्यापि दृष्टिगोचरम्भवितुं योग्यं भवतीति भावः ॥ ११ ॥
अभूतोपमेति । तद्यथा । अभूतपूर्व्वं मम भावि किम्वा सर्व्वं सहे मे सहजं हि दुःखमित्यादि तल्लक्षणस्यालङ्कारप्रबन्धेषूदाहृतत्वादित्यवधार्य्यम् ॥१२॥
तच्छरीर इति । नन्वेवं सगुणशरीरत्वावच्छेदेन सदाशिवशरीराच्छन्नोस्य कीदृशो विशेष इति चेच्छृणु । तद्यथा । पीतनं कालकूटस्य गतां चोरं सरित्पतिः विशेषस्तत्तयोर्ज्ञात्वा विवादस्त्यज्यतां बुधैः सुखस्वस्रिगृतोरूपं नखस्यच्चाप्यदर्शयं,तयोर्विशेषमास्थाय विवादस्त्यज्यतां बुधैः, सेवकोथ सखा वापि स्वामिलक्ष्मेति भक्तितः, का क्षतिर्दूतरूपादौ सूतादौ चेत्यवर्णयदित्यादिबुद्धि-

मा धनञ्जयः। प्रणम्य शिरसा देवं कृताञ्जलिरभाषत॥१४॥ अर्ज्जुन उवाच। पश्यामि देवांस्तव देव देहे सर्वांस्तथा भूतविशेषसङ्घान्। ब्रह्माणमीशं कमलासनस्थमृषींश्च सर्व्वानुरगांश्च दिव्यान्॥१५॥ अनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वां सर्व्वतोऽनन्तरूपम्। नान्तं न मध्यं न पुनस्तवादिं पश्यामि विश्वेश्वर विश्वरूप॥१६॥ किरीटिनं गदिनं चक्रिणं च तेजोराशिं सर्व्वतो दीप्तिमन्तम्। पश्यामि त्वां दुर्न्निरीक्ष्यं स-

ष्टो युक्तः सन्धनञ्जयो देवदेवं शिरसा प्रणम्य कृताञ्जलिः सन्नुवाचेत्यर्थः॥१४॥ ननु तर्हि स किमुवाचेत्याह। पश्यामीति। तत्र तावत्परमशिवानुग्रहेण यद्भगवता दिव्यचक्षुषा दर्शितं विश्वरूपन्तत्सकलैरदृश्यमहो पश्यामि हे देव तव देहे देवान्विश्वादीन्भूतविशेषसङ्घान्स्थावरजङ्गमानविशेषेण पश्यामीत्यर्थः। एवम्ब्रह्माणमीशं सृष्टिनियन्तारङ्कमलासनस्थं तथा सर्वानृषीनुरगांश्च सर्वान्दिव्यान्पश्यामीति सर्वत्रान्वयः॥ १५ ॥ अथ चेह भवद्देहे यत्सर्वमेतद् दृष्टवांस्तमेव विशिनष्टि। अनेकेति। तत्र तावदनेके बाहवस्तथोदराणि वक्त्राणि नेत्राणि यस्य तमेतादृशं सर्वतोऽनन्तरूपं त्वां पश्यामीत्यर्थः। तथा हे विश्वरूप तव नान्तं नावसानं न मध्यं नाप्यादिम्पश्यामीत्यर्थः॥ १६ ॥ इह तमेव विश्वरूपम्प्रकारान्तरेण विशिनष्टि। किरीटिनमिति। तत्र तावत्किरीटादियुक्तत्वाच्च तेजोराशिं स्वतश्चानला-

---

कुशलेर्व्विवेक्तव्यमित्यधिकमन्यत्र विस्तरः ॥ १३ ॥ १४ ॥ १५ ॥ नान्तमित्यादि। इह तु यच्च किञ्च जगत्यस्मिन्नित्यादिश्रुतिवेद्यं यत्स्वरूपन्तस्येत्थं महत्त्वं यत्तु यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठित इत्यादिश्रुतिवेद्यन्तु दुरवगाहमेवेत्यवधार्य्यम्॥ १६॥ दुर्न्निरीक्ष्यमिति। दुःखेन द्रष्टुमर्हं दुर्निरीक्ष्यमित्यर्थः। न च यच्च किञ्च जगत्यस्मिन्नित्यादिश्रुतिवेद्यं त्वमर्कस्त्वं सोम इत्यादिस्मृतिवेद्यञ्च विराड्रूपं प्रत्यक्षमेव जनः पश्यतीति किमत्र दुर्न्निरीक्ष्यत्वमिति

मन्ताद्दीप्तानलार्कद्युतिमप्रमेयम् ॥१७॥ त्वम-
क्षरं परमं वेदितव्यं त्वमस्य विश्वस्य परं नि-
धानम् । त्वमव्ययश्शाश्वतधर्म्मगोप्ता सनात-
नस्त्वं पुरुषो मतो मे ॥१८॥ अनादिमध्यान्त-
मनन्तवीर्यमनन्तबाहुं शशिसूर्य्यनेत्रम् । पश्या-
मि त्वां दीप्तहुताशवक्त्रं स्वतेजसा विश्व-
मिदन्तपन्तम् ॥ १९ ॥ द्यावापृथिव्योरिद-
मन्तरं हि व्याप्तं त्वयैकेन दिशश्च सर्व्वाः । दृष्ट्वा-

र्कद्युतिमप्रमेयमत एव च दुर्न्निरीक्ष्यं त्वां विश्वरूपम्पश्यामीत्यर्थः ॥ १७ ॥ एव-मपरमप्यनन्यमहिमत्वन्तत्र दर्शयान्विशिनष्टि । त्वमक्षरमिति । तत्र तावत्प्रणवाद्य-क्षरम्परमन्तद्वेदितव्यं शिवमद्वैतञ्च त्वमेव तथास्य विश्वस्य परं निधानन्त्वमेवेत्य-र्थः । अत एव त्वमव्ययो नित्यश्शाश्वतस्य वेदप्रतिपाद्यस्य धर्मस्य गोप्ता तत एव सनातनः पुरुषो मतो विदितो मेसीति परमार्थः ॥ १८ ॥ अथेह यच्छ्रीकृष्णाय महात्मने महाविश्वरूपं परमशिवेन दर्शितन्तत्सदृशमेतद्विश्वरूपमत्र बीजं स्पष्ट-मेव दर्शयन्नप्याह । अनादीति । तमादिमध्यान्तविहीनमेकमित्यादिश्रुत्यन्तरादिति भावः । एवञ्चन्द्रार्काग्निविलोचनमित्यादिस्मृत्यन्तराच्च दिव्यो हुताशनो वक्त्रमिव नेत्रं यस्य तत्तथा स्वतेजसा चिदम्बरात्मना विश्वमिदन्तपन्तमित्यर्थः ॥ १९ ॥ एवम्प्रकृतस्य विश्वरूपस्य व्याप्तिमप्याह । द्यावेति । तत्र तावद् द्यावापृथिव्योरन्त-

---

वाच्यम् । यदुक्तं ज्ञानचक्षुषा तेन सर्व्वैरेकचीभावेनैकदैव दुर्न्निरीक्ष्यमित्याशयः ॥ १७ ॥ प्रणवाद्यक्षरमिति । तदिदं वाच्यवाचकयोर्भिदेति यथोक्तरीत्या यच्छ्रुतं तदिदं वेदकाप्रणवाद्यक्षरन्तद्वेद्यं शिवमद्वैतं ददर्शेत्याद्यवधार्य्यम् ॥ १८ ॥ तमादीति । एवमिदं यदातमस्तन्न दिवा न रात्रिरित्यादिश्रुत्या सवितुर्वरेण्यमि-तीमा चिदम्बरशक्तिरेव कार्य्यकारित्वेन सहायस्येत्यर्थः । एवं त्रीणि जाग्रत्स्व-प्नसुषुप्तिरूपाणि त्रीणि लोचनानि यस्य स त्रिलोचनः एवं नीलं मायाख्यम-ज्ञानं कण्ठे एकदेशे यस्य स सदाशिव इति तस्य विराड्रूपत्वमप्यवगतम्बोध्यम् ॥ १९ ॥ अव्यक्तमीतामिति । भीषास्माद्वातः पवते भीषोदेति सूर्य्यो भयाद-

द्भुतं रूपमिदं तवोग्रं लोकत्रयं प्रव्यथितं महा-
त्मन् ॥ २० ॥ अमी हि त्वां सुरसङ्घा विश-
न्ति केचिद्भीताः प्राञ्जलयो गृणन्ति । स्वस्ती-
त्युक्त्वा महर्षिसिद्धसङ्घाः स्तुवन्ति त्वां स्तु-
तिभिः पुष्कलाभिः ॥ २१ ॥ रुद्रादित्या वसवो
ये च साध्या विश्वेऽश्विनौ मरुतश्चोष्मपाश्च ।
गंधर्व्वयक्षासुरसिद्धसङ्घा वीक्षन्ते त्वां वि-
स्मिताश्चैव सर्व्वे ॥ २२ ॥ रूपं महत्ते बहुव-
क्त्रनेत्रं महाबाहो बहुबाहूरुपादम् । बहूदरं
बहुदंष्ट्राकरालं दृष्ट्वा लोकाः प्रव्यथितास्त-

रमन्तरिक्षं यतस्त्वयैकेन व्याप्तं दिशश्च सर्वा व्याप्ता इत्यर्थः । तथा हे महात्मं-स्तवाद्भुतं रूपमिदमुग्रं दृष्ट्वा लोकत्रयञ्च प्रव्यथितमत्यन्तं भीतमित्यर्थः ॥ २० ॥ इदानीन्तु भूभारसंहारकारित्वमप्यात्मनः प्रकटयन्नाह । अमीति । तत्र तावदमी सुरसङ्घास्त्वां केचिद्विशन्ति केचित्तु भीताः सन्तः प्राञ्जलयो गृणन्ति स्तुवन्ति अथ केचित्स्वस्तीत्युक्त्वा महर्षिसिद्धसङ्घास्त्वामेव पुष्कलाभिः स्तुतिभिः स्तुवन्तीत्यर्थः ॥ २१ ॥ एवमपरमप्याह । रुद्रा इति । एवमिहैकादशेन्द्रियाधिपा रुद्रास्तथादित्या वसवः साध्या देवगणास्तथाश्विनौ नासत्यदस्रौ मरुतस्तथोष्मपाः पितरस्तथा गन्धर्वादीनां सङ्घाश्च त्वामेव सर्वे विस्मिताः सन्तो वीक्षन्तइत्यर्थः ॥ २२ ॥ अथ लोकत्रयम्प्रव्यथितमित्युक्तमुपसंहरन्स्वस्यापि तदन्तर्गतत्वेन वृत्तमाह । रूपमिति । अत्र तु हे महाबाहो बहुवक्त्रनेत्रमित्यादिविशे-

---

क्तिश्च वायुश्चेत्यादिस्तुतिस्मृत्यन्तरादिति भावः ॥ २० ॥ २१ ॥ नासत्यदस्राविति । तत्र तावन्नासत्यं यस्येत्यर्थे नभ्राण्नपान्नासत्येति पाणिनिसूत्रात्प्रकृतिभावेन साधुः एवं दसु मोक्षणइत्यर्थे दसेरक्प्रत्ययेन दस्रस्तच नासत्यश्च दस्रश्चेति तावित्यर्थः । उष्मपा इति । तत्रोष्मणः प्रेतकर्म्मात्पान्ति रक्षयन्तीत्युष्मपाः पितर इत्यर्थः ॥ २२ ॥ प्रव्यथिता इति । तत्र न लोकाः प्रव्यथिताः किन्तु ममैव

थाहम् ॥ २३ ॥ नभःस्पृशं दीप्तमनेकवर्णं
व्यात्ताननं दीप्तविशालनेत्रम्। दृष्ट्वा हि त्वां
प्रव्यथितान्तरात्मा धृतिं न विन्दामि श-
मञ्च विष्णो ॥ २४ ॥ दंष्ट्राकरालानि च ते
मुखानि दृष्ट्वैव कालानलसंनिभानि। दिशो न
जाने न लभे च शर्म्म प्रसीद देवेश जग-
न्निवास ॥ २५ ॥ अमी च त्वां धृतराष्ट्रस्य
पुत्रास्सर्व्वे सहैवावनिपालसङ्घैः । भीष्मो
द्रोणस्सूतपुत्रस्तथासौ सहास्मदीयैरपि यो-

षणविशिष्टं महत्ते तव रूपं दृष्ट्वा लोकाः प्रव्यथितास्तथाऽहञ्च व्यथित इति पर-
मार्थः ॥ २३ ॥ एवमत्र भयानकत्वमेव प्रपञ्चयति । नभ इति । तत्र तावद्धे
विष्णो नभः स्पृशन्दीप्तमनेकवर्णमित्यादिविशेषणविशिष्टन्त्वां दृष्ट्वा प्रव्यथिता-
न्तरात्माहं यतो धृतिं धैर्यं शमं शमत्वेन शान्तिञ्च न विन्दामि इत्यर्थः ॥ २४ ॥
एवमिह महद्भयप्रदत्वेनापरमपि वृत्तमाह । दंष्ट्रेति । तत्रैवंसति हे देवेश जगन्नि-
वास दंष्ट्राकरालानि च ते मुखानीत्यादि दृष्ट्वा दिशो दिग्विभागान्न जाने शर्म
सुखञ्च न लभइत्युपसंहर प्रसीदेत्यर्थः ॥ २५ ॥ अथ परमशिवानुग्रहादर्ज्जुने-
न सह स्वस्यापि जयम्प्रदर्शयन्नाह । अमीति । तत्रैवंसति हे गुडाकेश सर्वे धृतरा-
ष्ट्रस्य पुत्रास्त्ववनिपालसङ्घैः सह त्वामेव विशान्ति धावन्तीति पश्यामीत्यर्थः ।
तत्र न केवलं दुर्योधनादय एव किन्तु सर्वैः सम्भावितो यो भीष्मस्तथा द्रोणः
सूतपुत्रः कर्णश्चास्मदीयैरपि परकीयैरिव धृष्टद्युम्नादिभिर्योधमुख्यैः सह त्वामेव

---

तथा भातीत्यर्थः । अथवा प्रत्यक्षतो ये लोकाः प्रव्यथितास्ते त्वत्त एवेति वार्थः
॥ २३ ॥ इह विशेषगुणवत्त्वेन व्यापकत्वादाह । विष्णो इति । एवन्नानावताराणां
निधानम्बीजमव्ययं यस्यांशांशेन सृज्यन्ते देवतिर्य्यङ्नरादय इत्यादि द्रष्टव्यम्॥२४॥
लक्ष्यापोति । एवमेव रामचन्द्राय सदाशिवेनापि दर्शितम् । तद्यथा । रावणस्य
समं सैन्यं मम द्रष्टा वार।न्यय। संविलम्नान्यतो राम पौलस्त्यं जहि साम्प्रतमि-

घमुख्यैः ॥ २६ ॥ वक्त्राणि ते त्वरमाणा विश-
न्ति दंष्ट्राकरालानि भयानकानि। के चि-
द्विलग्ना दशनान्तरेषु संदृश्यन्ते चूर्णितैरु-
त्तमाङ्गैः ॥ २७ ॥ यथा नदीनाम्बहवोम्बुवेगाः
समुद्रमेवाभिमुखा द्रवन्ति। तथा तवामी न-
रलोकवीरा विशन्ति वक्त्राण्यभितो ज्वलन्ति
॥२८॥ यथा प्रदीप्तं ज्वलनं पतङ्गा विशन्ति ना-
शाय समृद्धवेगाः। तथैव नाशाय विशन्ति
लोकास्तवापि वक्त्राणि समृद्धवेगाः ॥ २९ ॥

विशन्तीत्याशयः ॥ २६ ॥ ननु कथं जानामि मे महाभारते जयो भविष्यतीत्याह। वक्त्राणीति। तत्रैवं सत्यमी ये धृतराष्ट्रस्य पुत्रप्रभृतयस्ते सर्वेपि दंष्ट्राकरालानि भयानकानि यथा स्युस्तथा त्वरमाणानि विशन्तीति संदृश्यन्तइत्यर्थः। एवमेव केचिदुत्तमाङ्गैर्दशनान्तरेषु विलग्ना इव संदृश्यन्तइत्यतोपि ते जय एवेति सूचितम्भवतीति भावः ॥ २७ ॥ ननु च कथं ते प्रविशन्तीत्यत्र दृष्टान्तमप्याह। यथेति। एवन्तर्हि यथा समुद्रगानां नदीनां विस्तरशोम्बुवेगा जलागाधं समुद्रमेवाभिमुखा द्रवन्ति तथामी योद्धुकामा नरलोकवीरा विश्वरूपस्य वक्त्राण्येवाभिज्वलन्ति प्रकाशन्तइत्याशयः ॥ २८ ॥ एवम्प्रकारान्तरेणापि दृष्टान्तमाह। यथेति। तत्रैवं सति यथा प्रावृट्काले समृद्धवेगाः पतंगाः प्रदीप्तज्वलनं स्वनाशाय स्वयमेव विशन्ति तथैवैते तव विश्वरूपस्य वक्त्राणि विशन्तीति भावः ॥ २९ ॥ अथादि-

---

त्यैकादशरुद्राराधनोत्तरं रामचन्द्रस्यापि जयो दर्शित इत्यवधेयम् ॥ २६ ॥ तच्चैवं सत्यं तावतापि स्वस्य जये सन्दिहानम्प्रत्याह। इत्यतोपीति। यतो जयपराजययोर्व्विराड्रूपेणाध्यवगमस्य प्रमाणीकृतत्वादिति भावः ॥२७॥ अभिज्वलन्तीति। इदञ्च तव विश्वरूपे ममैव प्रतिभाति नत्वन्येषां तेषां ज्ञानचक्षुषोऽभावादिति भावः ॥ २८ ॥ मे प्रतिभातीति। एतेन भवत्सहकारित्वेन मम जयोपि प्रतिभातीत्याशयः ॥ २९ ॥ लेलिह्यानमिति। तव तावदिदानीं कालो न

लेलिह्यसे ग्रसमानः समन्ताल्लोकान्समग्रा-
न्वदनैर्ज्वलद्भिः। तेजोभिरापूर्य्य जगत्समग्रं
भासस्तवोग्राः प्रतपन्ति विष्णो ॥ ३० ॥ आ-
ख्याहि मे को भवानुग्ररूपो नमोस्तु ते देव-
वर प्रसीद। विज्ञातुमिच्छामि भवन्तमाद्यं
नहि प्रजानामि तव प्रवृत्तिम् ॥ ३१ ॥ श्री-
भगवानुवाच ॥ कालोस्मि लोकक्षयकृत्प्र-
वृद्धो लोकान्समाहर्तुमिह प्रवृत्तः। ऋतेपि
त्वां न भविष्यन्ति सर्वे येवस्थिताः प्रत्य-

त्यस्य गतागतैरिव जगत्सर्वमपि त्वय्येव विश्वरूपे लेलिहानं दृश्यतइत्यप्याह । लेलिह्यसइति। एवंसतीदानीं समग्रान् लोकान्समन्ताज्ज्वलद्भिर्वदनैर्ग्रसमानः संस्त्व- मेव लेलिह्यसइत्यर्थः । एवमिह हे विष्णो स्वतेजोभिश्चिदम्बराभासरूपैर्ज्जगत्स- मग्रमापूर्य भासस्तवोग्राः प्रतपन्तीति परमार्थः ॥ ३० ॥ ननु यस्मादेवन्तस्मात्को भवानिति न जानीम इत्याह। आख्याहीति। तत्रैवंसति हे देवप्रवर प्रसीद को भवानुग्र- रूपोसीति भवन्तमाद्यम्पुरुषं विज्ञातुमिच्छामीति नमोस्तु ते तुभ्यं यतस्तव प्रवृत्तिं नहि प्रजानामीत्याशयः ॥ ३१ ॥ एवमिहार्जुनस्याशंकामपि समाधातुमाह। काल इति। तत्र तावदिदानीं कालः कालकरो हर इत्याद्युक्तया कालस्सदाशिवोह- मस्मि न तु देवकीसुतश्श्रीकृष्णो यतो लोकक्षयकृत्प्रवृद्धः सन् लोकान्समाहर्तुम्प्रवृ- त्त इत्यर्थः। यतश्च ये प्रत्यनीकेषु प्रकृतसैन्यवर्गेष्ववस्थिता योधा योद्धुमिच्छ-

---

याती वयमेव याताः तृष्णा न जीर्णा वयमेव जीर्णा इति न्यायेन सर्वं त्वय्येव लेलि- हानं दृश्यतइत्याशयः ३०॥ ननु भीषास्मादेव भीतः सूर्योप्युदेत्ययम्भीषाग्निर्वायु- रिन्द्रश्च मृत्युर्धावति पञ्चम इत्यादिश्रुत्या परमशिवस्वरूपमेवं श्रुतं भवन्तन्तु देव- कीसुतत्वेन सम्बन्धासम्बन्धत्वेन च प्रसिद्ध इदानीं न जानेऽहमित्यभिप्रेत्याह। को भवानिति। पूर्वोपदर्शिताभिनिवेशत्वेन संशयात्पृच्छामीत्याशयः ॥ ३१॥ ननु देवकीसुत इति। अत एवोक्तम्वोपदेशोक्तं भागवतेपि॥ तद्यथा, मन्ये त्वां का-

नीकेषु योधाः ॥ ३२ ॥ तस्मात्त्वमुत्तिष्ठ यशो
लभस्व जित्वा शत्रून् भुङ्क्ष्व राज्यं समृद्धम् ।
मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव
सव्यसाचिन् ॥ ३३ ॥ द्रोणञ्च भीष्मञ्च जय-
द्रथञ्च कर्णन्तथान्यानपि योधमुख्यान् । मया
हतांस्त्वं जहि मा व्यथिष्ठा युध्यस्व जेतासि
रणे सपत्नान् ॥ ३४ ॥ संजय उवाच ॥ ए-
तच्छ्रुत्वा वचनं केशवस्य कृताञ्जलिर्वेपमानः
किरीटी । नमस्कृत्वा भूय एवाह कृष्णं स-

यस्ते सर्वेपि त्वामृते न भविष्यन्तीत्याशयः ॥ ३२ ॥ तत्रैवं यस्मादेवं व्यापारमन्त-रेणैव यद्येते विनङ्क्ष्यन्त्येव तर्हि जित्वा वा लप्स्यसे महीमित्यादिस्मरन्यु-द्ध्यस्वेत्याह । तस्मादिति । एवन्तर्हीदानीं शत्रूञ्जित्वा समृद्धमकण्टकं राज्यं भुङ्क्ष्व यशश्च लभस्वेत्यर्थः । यतः पूर्वमेव मयैवैते शत्रवस्सदाशिववरदानेनैव निहता इत्यतस्त्वं सव्येन वामेनापि हस्तेन शरान्सन्धातुं भवेति निमित्तमात्रत्वमर्जुनस्य स्फुटीकृतम् ॥ ३३ ॥ नन्वेतेषु प्रबलवीरेषु सत्सु कथं शत्रूञ्जीत्वा राज्यं भोक्ष्ये कथम्वा यशो लप्स्यइत्याशंकायामाह । द्रोणञ्चेति । तत्रैवं सत्येतान्द्रोणादी-न्कथं भीष्ममहं सङ्ख्ये द्रोणञ्च मधुसूदन इत्याद्याशंकाविषयीभूतान्सर्वानेव योध-वीरान्कालात्मना मया हतानेव त्वं जहि तत्र त्वंहतानां हनने कोस्ति तव दोषः को वा परिश्रम इति मा व्यथिष्ठा व्यथां मा कुर्वित्येवं रणे सपत्नान्जेतासीति कृत्वा युध्यस्वेत्याशयः ॥ ३४ ॥ अथैतद्वृत्तमपि संजयेन धृतराष्ट्राय स्मारितमित्याह । एतद् श्रुत्वेति । तत्रैवंसत्येतत्पूर्वोक्तं केशवस्य वचनं श्रुत्वा किरीटी वेपमानस्सन्मी-

---

समीयानमित्यादि द्रष्टव्यम् ॥ ३२ ॥ वरदानेनेति । इह पूर्वमेव नरनारायणयोर्ब्र-ह्मस्य दक्षदुहितरीत्यादौ तपश्चरणस्योक्तत्वादिति तत्त्वम् ॥ ३३ ॥ ननु यत्र योद्धुस्वा-चाप्यनुचितं तत्रापीषुभिः कथं योत्स्ये ऽहमित्यर्जुनस्य हृदयग्रन्थिं निराकरोति । तत्रैवंसतीति । एवंसति मया हतानेव यदि न हनिष्ये तर्हि तैरेव हते त्वयि

गद्गदं भीतभीतः प्रणम्य॥३५॥ अर्जुन उवा-
च॥ स्थाने हृषीकेश तव प्रकीर्त्या जगत्प्रहृष्य-
त्यनुरज्यते च। रक्षांसि भीतानि दिशो द्रवन्ति
सर्वे नमस्यन्ति च सिद्धसङ्घाः॥३६॥ कस्माच्च ते
न नमेरन्महात्मन्गरीयसे ब्रह्मणोप्यादिकर्त्रे।
अनन्त देवेश जगन्निवास त्वमक्षरं सदसत्त-

तभीतश्च सन् भूय एव श्रीकृष्णम्प्रणम्य सगद्गदम्वचनम्पुनराहेत्यर्थः ॥ ३५ ॥ ननु ततः किमाहेत्याह । स्थानइति । तत्र तावद्धे हृषीकेश सर्वेन्द्रियप्रवर्त्तक यत्तव प्रकीर्त्या प्रकृष्टया कीर्त्या न केवलमहमेव प्रहृष्यामि किन्तु सर्वमेव जगच्चेतनमात्रं रक्षोविरोधि प्रहृष्यति यत्तत्स्थाने युक्तमित्यर्थः। तथा सर्वजगदनुरज्यते यत्तदपि तथा भीषास्माद्वातः पवतइत्यादिश्रुत्या रक्षांसि भीतानि दिशो द्रवन्ति यत्तदपि तथा सर्वे सिद्धसङ्घा नमस्यन्ति यत्तदपि युक्तमेवेति सर्वत्रान्वयः॥३६॥ नन्वेवं भृगुवसिष्ठगर्गादेश्च विष्णोर्गुरुत्वेन कथं सिद्धादिपूज्यत्वन्तस्येति विस्मयम्परिहरन्वेदस्तुतिवत्परमशिवस्वरूपत्वेन श्रीकृष्णं स्तौति। कस्माच्चेति। तत्रैवंसति परमशिवरूपएवाहंगिरोपासनया भवांस्तर्हि कस्माच्च हेतोस्ते तुभ्यं भृग्वादिसिद्धसङ्घा न नमेरन्नित्यर्थः। यतश्च सर्गात्पुरा निरालोकं निर्मलं निष्कलं परं चिदानन्दमयं ज्योतिस्स आद्यः केवलः शिवः स एवादौ रजोरूपं सृष्ट्वा ब्रह्माणमात्मना सृष्टिकर्मनियुक्ताय तस्मै वेदाँश्च दत्तवानित्यादिस्मृत्या ब्रह्मणोप्यादिकर्त्रे परमशिवाय नमस्कारप्रयोज्याय गरीयसे हे महात्मन्कस्माच्च त्वां सदाशिवरूपं सिद्धादयो न नमेरन्नित्यर्थः। यतश्च हे देवदेवेशानन्त जगन्निवास सदसद्भ्यां परं

---

का कीर्त्तिः किम्फलं कीदृशो धर्म इत्यवधार्थ्यम् ॥ ३४ ॥ ३५ ॥ ततश्चैतावतापि जयपराजययोस्सन्दिहानः प्रभावं दृष्ट्वा निश्चयश्च मन्वान आह। तत्र तावदिति। इह मूले स्थानइति सप्तम्यन्तप्रतिरूपकं युक्तार्थकमव्ययम्बोध्यम् ॥ ३६ ॥ ननु च उपमन्युस्तु कृष्णस्य गर्गस्त्वस्ति पुरोहितः पादावनेजनैर्गेहं सिञ्चनीयस्तयोः स्वस्वितिपूर्व्वमेवोक्तत्वात्कथमिदानीं सर्व्वैः पूज्यत्वं कृष्णस्येत्याशङ्कते। नन्वेवमिति। एवन्तर्हि कृष्ण एव हि यष्टव्यो यज्ञश्चैव सनातनस्सर्व्वं रूपं

त्परं यत् ॥ ३७ ॥ त्वमादिदेवः पुरुषः पुराणस्त्वमस्य विश्वस्य परं निधानम् । वेत्तासि वेद्यञ्च परञ्च धाम त्वया ततं विश्वमनन्तरूप ॥ ३८ ॥ वायुर्यमोऽग्निर्वरुणः शशाङ्कः प्रजापतिस्त्वं प्रपितामहश्च । नमो नमस्तेऽस्तु सहस्रकृत्वः पुनश्च भूयोऽपि नमो नमस्ते ॥ ३९ ॥ नमः पुरस्तादथ पृष्ठतस्ते नमोऽस्तु ते सर्वत एव सर्व्व । अनन्तवीर्य्यामितविक्रमस्त्वं सर्वं समाप्नोषि ततोऽसि सर्वः ॥ ४० ॥ सखेति

मूलकारणं यदक्षरम्ब्रह्म परमशिवाख्यन्तत्त्वमेवेति सर्वाधिष्ठानत्वात् त्वद्भिन्नं किमपि नास्तीत्यर्थः ॥ ३७ ॥ तथैव परमशिवतादात्म्येनैव पुनरप्याह । त्वामादीति । तदेवंसति सर्गात्पुरेत्यादि यथोक्तरीत्या जगतां त्वमेवादिदेवः पुरुषो ह वै रुद्र इत्यादिश्रुतिवेद्यस्सहस्रशीर्षेत्यनेन गीयमानश्च त्वमेव पुरुषः पुराणोस्य जगतो निधानं लयस्थानमित्यर्थः । यतश्च त्वमनन्तरूपस्तत एव त्वया विश्वं ततन्तथा जगताम्वेत्ता वेद्यन्तत्परञ्च धाम त्वमेवेत्यर्थः ॥ ३८ ॥ एवमन्यरूपेणाप्याह । वायुरिति । एवंसति त्वमर्कस्त्वं सोम इत्यादिस्मृतिन्यायेन वायुर्यमोऽग्निरित्यादिसर्व्वं त्वमेवेति कृत्वा नमो नमस्ते तुभ्यमस्तु पुनश्च भूयो नमो नमस्तेऽस्त्वित्यर्थः ॥ ३९ ॥ अथ तद्दूरे तद्व दन्तिके तदु सर्व्वस्य बाह्यतइत्यादिश्रुतिवेद्यतया शिवमद्वैतं दर्शयन्पुनराह । नम इति । तत्रैवंसति ते तुभ्यम्पुरस्तादथ पृष्ठतश्च नमोऽस्तु तथैव सर्व्वतस्सर्व्वासु दिक्षु स्थिताय हे सर्व्ववीर्य्योऽप्यमितविक्रमस्त्वं

---

भवं ज्ञात्वा लिङ्गे योऽर्च्चयति प्रभुमितिस्मृतिन्यायेन शैवम्पाशुपतं मत्वा पूजनीय इत्याशयः ॥ ३७ ॥ लयस्थानमिति । यदातमस्तन्न दिवा न रात्रिरित्यादिश्रुतेरिति भावः ॥ ३८ ॥ अथेति । तत्र तावदोन्तत्सदितिनिर्देशो ब्रह्मणस्त्रिविधः स्मृत इति स्मृतेस्तदित्युपलक्षितं सकलाधिष्ठानं चैतन्यं दूरे एवन्तदेव चैतन्यमु नाम शिवमन्तिके एवमेवं तदु नाम शिवं सर्व्वस्य पदार्थजातस्य बाह्यत

मत्वा प्रसभं यदुक्तं हे कृष्ण हे यादव हे सखेति ।
अजानता महिमानन्तवेदं मया प्रमादात्प्र-
णयेन वापि ॥ ४१ ॥ यच्चावहासार्थमसत्कृ-
तोसि विहारशय्यासनभोजनेषु । एकोथ वा-
प्यच्युत तत्समक्षं तत्क्षामये त्वामहमप्रमेय-
म् ॥ ४२ ॥ पितासि लोकस्य चराचरस्य
त्वमस्य पूज्यश्च गुरुर्गरीयान् । न त्वत्समो-

सर्व्वं जगत्सम्यगाप्नोष्यतस्सर्व्वस्त्वमसीति त्वदतिरिक्तं किमपि नास्तीत्यर्थः ॥ ४० ॥ अथ च शिवध्यानार्चनज्ञानाच्छिन्नरूपोसि न तु देवकीसुतत्वेन विष्णुरित्यतस्समकक्ष्यत्वेन मन्यमानं मां क्षमस्वेत्याह । सख इति । एवंसति हे कृष्ण हे यादव तव महिमानम्परमशिवैक्यतादात्म्यलक्षणमजानता मया प्रसभम्बलाद्वचनं यदुक्तन्तत्सर्व्वं सखेति मत्वा प्रणयेन स्नेहेन क्षमस्वेत्याशयः ॥ ४१ ॥ एवमेव प्रकारान्तरेणाप्याह । यच्चेति । इहैवंसति यदप्यवहासार्थं मया विहारशय्यासनभोजनेष्वेकाक्यथ वा सखीनां परिहसतां समक्षम्वा त्वां शिवात्मकत्त्वेन हे अच्युत यदसत्कृतोसि तत्सर्व्वमप्रमेयमपराधजातं क्षामये क्षमस्वेति त्वाम्प्रति निवेदयामीत्याशयः ॥ ४२ ॥ अथ परमशिवैक्यतादात्म्येनाहङ्गिरोपासनया महादेवश्चिदाकाशं गुरूणाम्प्रथमं गुरुमित्यादिस्मृत्या च ब्रह्मादिद्वारा सर्वजनकत्वञ्च तवैवेत्याह । पितासीति । एवंसति चराचरस्य त्वमेवास्य लोकस्य सर्वाधिष्ठानत्वेन पूज्यो ग-

---

इति मन्त्रार्थः ॥ ४० ॥ ननु यथा तुष्टः पिनाकी दशभिश्शिरोभिस्तुष्टो न चैकादशमो हि रुद्र इत्याद्युक्त्या तथा हनूमन्नञ्जनीसूनो वायुपुत्र महाबल, सर्व्वसङ्कष्टहरण विपत्तौ शरणं भवेत्यादि रामचन्द्रोक्त्या च हनूमतः स्वामित्वं तथेहापि कृष्णस्य स्वामित्वे स्थिते कथन्तस्येहार्जुनसेवकत्वमित्याशङ्कां निराकुर्वन्नाह । सखेतिमत्वेति । तद्यथा, सङ्कटे समनुप्राप्ते वयस्ते सहकारिणः स्वामिनस्सेवकाश्चैव सखायश्च इति नान्यथेत्यादि द्रष्टव्यम् ॥ ४१ ॥ शिवात्मकत्वेनेति । यतश्च कामदहनत्वाच्छिवात्मकत्वेनाच्युतत्वमित्याशयः ॥ ४२ ॥ परमशिवैक्येति । स्वतस्तु सर्व्वथा सर्वतः परत्वेन शिवस्यैव गरीयस्त्वे न गुरुत्वमिति राजाधिराजस्सर्व्वेषां

इत्यभ्यधिकः कुतोन्यो लोकत्रयेप्यप्रतिमप्रभा-
व ॥ ४३ ॥ तस्मात्प्रणम्य प्रणिधाय कायं प्र-
सादये त्वामहमीशमीड्यम् । पितेव पुत्रस्य
सखेव सख्युः प्रियः प्रियायार्हसि देव सोढु-
म् ॥४४॥ अदृष्टपूर्व्वं हृषितोस्मि दृष्ट्वा भयेन
च प्रव्यथितं मनो मे । तदेव मे दर्शय देव रूपं
प्रसीद देवेश जगन्निवास ॥ ४५ ॥ किरीटिनं
गदिनं चक्रहस्तमिच्छामि त्वां द्रष्टुमहन्तथै-
व । तेनैव रूपेण चतुर्भुजेन सहस्रबाहो भव
विश्वमूर्त्ते ॥ ४६ ॥ श्रीकृष्ण उवाच ॥ मया

रीयान्गुरुश्चेति परमशिवैक्यतादात्म्येन विजानामीत्यर्थः ॥ ४३ ॥ अथ यस्मा-
देवं तस्मात्सर्वभावेन त्वामेव प्रसादयामीत्याह । तस्मादिति । एवन्तर्हि मन्ये त्वां का-
लमीशानमनादिनिधनम्विभुमित्यादिस्मृतिन्यायेन त्वामेव सदाशिवरूपमीशमीड्यं
कायं प्रणिधाय प्रसादये यतस्त्वमेव पितेव पुत्रस्य सखेव सख्युः प्रियाय च प्रि-
यश्च त्वमेवार्हसि ममापराधं सोढुमित्यन्वयः ॥ ४४ ॥ एवमिह विश्वरूपोपसं-
हारेण पुनरपराधं क्षमापयन्नेवाह । अदृष्टपूर्वमिति । तत्रैवंसति पूर्वमदृष्टं विश्व-
मतस्तद्रूपं दृष्ट्वा हृषितोहमस्मि परन्तु तत्र विकृतरूपदर्शनजन्येन भयेन प्रव्यथितं
मनो मे ततश्च प्राचीनमेव सौम्यं रूपं मे दर्शय हे देवदेवेश सदाशिव हे जग-
न्निवास प्रसीदेत्यर्थः ॥ ४५ ॥ नन्वेवन्तर्हि कीदृशन्तद्रूपं धारयामीत्याह । कि-
रीटिनमिति । अतश्चाभयप्रदेन तेनैव रूपेण चतुर्भुजत्वेन वासुदेवात्मजत्वेन वा हे
देव सहस्रबाहो भवति तदेव किरीटिनमित्यादिलक्षणलक्षितं त्वां द्रष्टुमिच्छा-
मीत्यर्थः ॥ ४६ ॥ एवमिहार्ज्जुनेन प्रसादितो विष्णुर्भयबाधितेन वचसा त्वाह ।
मयेति । तत्रैवंसति हे अर्जुन मा भैषीर्यतो मया प्रसन्नेन विश्वरूपं द्रोणपर्वस्थं

---

त्र्यम्बकत्रिपुराम्तकस्तस्यैवानुचराः सर्वे ब्रह्मविष्णुसुरादय इत्यादिपाद्मस्कन्दा-
दौ बहुशो द्रष्टव्यम् ॥ ४३ ॥ ४४ ॥ ननु पूर्व्वं म्विश्वरूपे प्रियाप्रियत्वे नोभयसपि-

प्रसन्नेन तवार्ज्जुनेदं रूपं परं दर्शितमात्मयोगात् । तेजोमयं विश्वमनन्तमाद्यं यन्मे त्वदन्येन न दृष्टपूर्वम् ॥ ४७ ॥ न वेद यज्ञाध्ययनैर्न्न दानैर्न्न च क्रियाभिर्न्न तपोभिरुग्रैः । एवं रूपः शक्योऽहं नृलोके द्रष्टुं त्वदन्येन कुरुप्रवीर ॥ ४८ ॥ मा ते व्यथा मा च विमूढभावो दृष्ट्वा रूपं घोरमीदृङ्ममेदम् । व्यपेतभीः प्रीतमनाः पुनस्त्वं तदेव मे रूप-

शैवेन महातपसा लब्धमिति शिवप्रधानम्परमं योगम्विद्धि धनञ्जय इत्यादावन्यत्र भारतेप्युक्तत्वादिति भावः । तस्मात्केनाप्यदृष्टपूर्वं विश्वरूपं भवतेनुग्रहादेव दर्शितमित्याशयः ॥ ४७ ॥ अथ परमशिवप्रसादेन लब्धमिदम्विश्वरूपमतिदुर्लभं भवते दर्शितमित्याह । न वेदेति । तत्रैवंसति हे कुरुप्रवीर यदेतद्विश्वरूपं ते दर्शितं तद्यज्ञाध्ययनैरित्याद्यनेकैरपि यत्नैस्त्वदन्येन न द्रष्टुं शक्यमित्यर्थः ॥ ४८ ॥ एवमेव पुनरर्ज्जुनम्प्रसान्त्वयन्नेवाह । मा तइति । तथा च हे

---

दर्शितमिदानीन्तु मत्स्यः कूर्मो वराहश्च बौद्धः कल्की च वामनः । रामः कृष्णो नृसिंहश्च परशुरामो दशाकृता इत्याद्यवतारेष्वपि केन रूपेण वाञ्छसीत्यभिप्रेत्याह । अतश्चेति । एवं सतीदानीमनेनैव रूपेण वाञ्छामीति तद्दर्शयेत्याशयः ॥ ४७ ॥ ननु कोऽस्ति सर्व्वतः प्रबलो देवो यत्प्रसादाल्लब्धन्त्वया ममापि दर्शितमित्याह । यथेति । तथैवं सति महत्वस्य च सङ्कोची नास्ति सम्यग्विरूपणे, अस्ति चेदप्रमाणं स्यात् श्रुतिश्च सत्यार्थवादिनी । तस्मादस्ति महादेव एव साक्षात्स्वयं प्रभुः । आनन्दरूपः सम्पूर्णो न ततोऽन्यत्र किं चन । इयमेव हि तर्काणां निष्ठा काष्ठा सुरोत्तमाः, प्रत्यक्षादिप्रमाणानां वेदान्तानामपीश्वरा इत्यतः शिवस्य सर्वतः परत्वे स्थिते सत्यापि मुक्तिप्रदं ज्ञानं शिवप्रसादादेवेति तत्रैवोक्तम् । तद्यथा । प्रसादादेव शम्भोर्वै शिवायाश्च तथैव च । परमाद्वैतविज्ञानं विष्णोश्चास्याप्यमापि चेत्यादि स्कान्दे ब्रह्मगीतायां देवेभ्यो ब्रह्मणोक्तमवधार्य्यम् ॥

मिदं प्रपश्य ॥ ४९ ॥ संजय उवाच ॥ इत्य-
र्ज्जुनं वासुदेवस्तथोक्त्वा स्वकं रूपं दर्शयामा-
स भूयः । आश्वासयामास च भीतमेनं भूत्वा
पुनस्सौम्यवपुर्महात्मा ॥ ५० ॥ अर्ज्जुन
उवाच ॥ दृष्ट्वेदं मानुषं रूपं तव
सौम्यं जनार्दन । इदानीमस्मि सम्वृत्तः
सचेताः प्रकृतिङ्गतः ॥ ५१ ॥ श्रीकृष्ण उवा-
च ॥ सुदुर्द्दर्शमिदं रूपं दृष्टवानसि यन्मम । दे-
वा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः ॥ ५२ ॥

अर्ज्जुन ममेदं विश्वाख्यं घोररूपं दृष्ट्वा व्यपेतभीस्सन्विगतमूढभावस्सन्मा व्यथा व्यथां मा कार्षीः किन्तु प्रीतमनास्संस्तदेव रूपं प्रपश्येत्यर्थः ॥ ४९ ॥ अथैतदपि वृत्तं धृतराष्ट्राय संजयोप्याह । इत्यर्ज्जुनमिति । तत्र तावद्वासुदेवोर्ज्जुनाय प्रागुक्तम्वृत्तमित्युक्त्वा यथापूर्वमासीत्तथा सौम्यम्वपुर्दर्शयामास स च भूयो भीतमेनमाश्वासयामासेत्याशयः ॥ ५० ॥ अथ च ततो यथास्थितं रूपं दृष्ट्वा निर्भयस्सन्नर्ज्जुनः किमुवाचेत्याह । दृष्ट्वेदमिति । तत्रैवं सति हे जनार्दन तव सौम्यं मानुषं रूपं दृष्ट्वा सम्वृत्तोस्मि स्वास्थ्यङ्गतोस्मीति सचेतास्सन् स्वां पूर्वोपदर्शिताम्प्रकृतिञ्च गतोस्मीत्यर्थः ॥ ५१ ॥ ततश्च स्वास्थ्येनार्ज्जुनं दृष्ट्वा कृष्णः पुनः किमुवाचेत्याह । सुदुर्द्दर्शमिति । तत्रैवंसतीदं दुर्द्दर्शं रूपं दृष्टवानसि यन्मम परम्पदाख्यं रूपं देवा अपि महेन्द्रादयो दर्शनकाङ्क्षिण इत्यर्थः ॥ ५२ ॥ अथ

---

४८ ॥ ४९ ॥ ५० ॥ मानुषमिति । अत एव लक्ष्मीमति खयम्विष्णुनैव पाद्मे प्युक्तम् । तद्यथा । मायामयमिदं देवि वपुर्म्मे नहि तात्विकं, सृष्टिस्थित्युपसंहारं क्रियाजालोपबृंहितमित्युक्त्वा ग्रिमस्य स्वस्यात्पृथक्त्वमप्यतोन्यदात्मनो रूपं रूपं द्वैतविवर्ज्जितमित्यनेन दर्शितमित्यवधेयम् ॥ ५१ ॥ परम्पदाख्यमिति । तद्यथा । पदं यत्परमं विष्णोस्तदेवाखिलदेहिनां, पदं परममद्वैतं सन्निवस्मात्स्वमिपद इत्यादिना स्कान्दादौ दर्शितत्वादिति भावः ॥ ५२ ॥ ॥ ५३ ॥ सना-

नाहं वेदैर्न तपसा न दानेन न
चेज्यया । शक्य एवम्विधो द्रष्टुं दृष्टवान-
सि मां यथा ॥ ५३ ॥ भक्त्या त्वनन्यया श-
क्यः अहमेवंविधोऽर्ज्जुन । ज्ञातुं द्रष्टुञ्च तत्त्वेन
प्रवेष्टुञ्च परन्तप ॥ ५४ ॥ मत्कर्मकृन्मत्प-
रमो मद्भक्तस्सङ्गवर्ज्जितः । निर्वैरस्सर्व्वभू-

च षष्टिवर्षसहस्राणि तपस्तप्तम्पुरा मया । महाविश्वं ततो दृष्टं शिवस्य परमात्मन इत्यादिना पाद्मेपि द्रोणपर्वस्थोक्त्या कथमन्यैर्देवैरपि निस्तपस्कैर्द्रष्टुं शक्यमित्याह । नाहमिति । तत्रैवं सति नाहमेवम्परमशिवप्रसादजम्विश्वरूपं वेदैर्नैवा तपसा न दानेन यज्ञेन वा विश्वात्मानं द्रष्टुं शक्योऽहं यथा मां दृष्टवानसीत्यर्थः ॥ ९३ ॥ इदानीन्तु दत्तात्रेयमयं शान्तं शिवं विद्धि सनातनमित्याद्यपकल्पम्प्रति दत्तात्रयोक्त्या मन्मयं विद्धि मानव्य जगत्सर्वं चराचरमित्यादिभागवते देवहूतिम्प्रत्युप्यहंगिरोपासनया परमशिवतत्त्वात्परतरं किञ्चिन्नास्तीत्युपदिशन्नाह । भक्त्येति । तत्रैवंसति नान्यो विद्यते यस्यां सा तयानन्यया भक्त्या सर्वात्मरूपयाहमेवंविधस्तस्य भावस्तत्त्वं तेन तत्वेन परमशिवात्मरूपेण सर्वैरपि ज्ञातुं शक्य इति परमार्थः ॥ ९४ ॥ ननु कथन्तद्भक्तियोगङ्कुर्यादिति सङ्क्षेपतस्तद्वक्तव्यमित्याह । मत्कर्मेति । तथा चाहाङ्गिरोपासनया मदर्थम्परमशिवार्थम्वेदविहितं कर्म करोतीति मत्कर्मकृदित्यर्थः । एवमाकाशादपि विस्तीर्णश्शुद्धस्सूक्ष्मोऽव्ययशिवो, य आत्मा स कथं राम जायते म्रियतेऽथ वेत्यादिना वसिष्ठेनाप्यहंगिरोपासनया रामचन्द्राय चोपदिष्टमित्यतस्तावत्सर्वभूतेषु शास्त्रमर्यादया निर्वैरस्सन्मां परमशिवरूपा-

---

तनमिति । तत्रैवं सत्यखण्डमण्डलाकारंव्याप्तं येन चराचरमित्यादिगुरुत्वे निर्णीते तद्रूपे गुरौ यस्य देवे परा भक्तिर्यथा देवे तथा गुरावित्यादिश्रुत्युक्तन्यायेन तादृशं सनातनङ्गुरूणाम्परमगुरुं सर्व्वात्मना भजेदित्यवधार्य्यम् । अनन्ययेति । ब्रह्म तम्परादाद्योऽन्यत्रात्मनो वेदब्रह्म क्षत्रं परादाद्योऽन्यत्रात्मनो वेदेत्यादिबृहदारण्यकश्रुतेरप्यनन्यत्वमुपपादनीयम् ॥ ५४ ॥ ननु नह्यन्यग्रामादन्यगतानर्थनिवृत्तिरित्याह । वसिष्ठे नाहङ्गिरेति । तथा च हे रामचन्द्र त्वमप्यात्मानं

तेषु यः स मामेति पाण्डव ॥ ५५ ॥ इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्ज्जुनसम्वादे विश्वरूपदर्शनं नामैकादशोध्यायः ॥ * ॥ अर्ज्जुन उवाच ॥ एवं सततयुक्ता ये भक्तास्त्वां पर्य्युपासते । ये चाप्यक्षरमव्यक्तन्तेषाङ्के योगवित्तमाः ॥ १ ॥ श्रीकृष्ण उवाच ॥ म-

स्मनैतीति सिद्धान्तार्थः ॥ ५५ ॥ इति श्रीमत्पदवाक्यप्रमाणयोगिवर्यविप्रराजेन्द्रविरचिते तत्वैकदर्शनभाष्ये विश्वरूपदर्शनं नामैकादशोध्यायः ॥*॥ परा चैवापरा चेति भक्तिस्तु द्विविधा मता । विज्ञानाख्या परा प्रोक्ता द्वादशे सा समीर्यते । नन्विह कर्मणैव हि संसिद्धिमास्थिता जनकादय इत्यादिपूर्वोक्तया कर्मोपासनया शिवज्ञानं साध्यमुत वा सर्वधर्मान्परित्यज्य मामेकं शरणम्व्रजेत्याद्युक्तया सर्वकर्माणि त्यक्त्वा ऽक्षरमव्यक्ताख्यं केवलं शिवमद्वैतमुपासनीयमिति किन्तयोर्न्याय्यमिति संदिहानः पृच्छति । एवमिति । तत्रैवंसति यमेवैष वृणुते तेन लभ्य इत्यादिश्रुत्यात्मार्पणभक्तया ये सततयुक्तास्त्वां यथोक्तम्परमशिवरूपेणोपासते अथ ये चाक्षरमव्यक्तं ध्यानयोगेनैव केवलमुपासते तयोर्मध्ये के योगवित्तमाः श्रेष्ठा इति प्रश्नाशयः ॥ १ ॥ तत्र तावदाद्य एव पक्षो न्याय्यस्तमेवाह । मयीति । तत्रैवं निश्चिते सति मयि सदाशिवे मन आवेश्य तद्रूपेणैव मां ये नित्ययुक्ता मन्ये त्वां

---

योगजधर्म्म षाड्ङ्गोपासनया शिवं विजानीहीत्याशयः ॥ ५५ ॥ इति श्रीमद्योगिवर्य्यविप्रराजेन्द्रात्मजविरचिते भाष्यप्रदीपे एकादशोध्यायः ॥ * ॥ ननु मोक्षसाधनसामग्र्यां भक्तिरेव गरीयसी । भक्त्या ज्ञानं प्रजायेत ततो मोक्षसुसिध्यतीत्यादिस्मृत्या भक्तेरावश्यकत्वे स्थिते सा च कतिविधेति प्रतिजानीते । परा चैवेति । तत्रैवंसतीह भक्त्या ज्ञानम्प्रजायेतेति यदुक्तं तदेव ज्ञानम्पराभक्तित्वेनेह निरूप्यते । यच्च तद्दे मनश्शब्दपदारविन्दयोरित्याद्युच्यते सा शमदमादिषट्सम्पत्तिरूपा सा ज्ञानसाधनाकाङ्क्षायामपरा भक्तिरित्युच्यतइति विवेकः ॥ १ ॥ न्याय्य इति । नहि साधनसम्पत्तिम्विना कस्यापि सिद्धिरित्यतस्ता-

य्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः
॥ २ ॥ ये त्वक्षरमनिर्देश्यमव्यक्तम्पर्यु-
पासते । सर्व्वत्रगमचिन्त्यञ्च कूटस्थमचलं
ध्रुवम् ॥ ३ ॥ संनियम्येन्द्रियग्रामं सर्व्वत्र
समबुद्धयः । ते प्राप्नुवन्ति मामेव सर्व्वभूत-
हिते रताः ॥ ४ ॥ क्लेशोऽधिकतरस्तेषाम-
व्यक्तासक्तचेतसाम् । अव्यक्ता हि गतिर्दुःखं
देहवद्भिरवाप्यते ॥५॥ ये तु सर्वाणि कर्माणि

कालमीशानमित्यादिस्मृतिन्यायेन परया श्रद्धयोपेतास्सन्त उपासते ते मे युक्ततमा
मता इत्यर्थः ॥ २ ॥ तत्राप्येवं सति सर्वकर्माणि मनसा नियम्यारभतेऽर्ज्जुन इत्या-
द्युक्त्या केवलं ध्यानयोगेनैव सर्वत्रगमक्षरमव्यक्ताख्यम्ब्रह्म ये सन्नियम्येन्द्रिय
ग्राममुपासते तेपि मामेव यथोक्तपरम्पदाख्यं शिवरूपं सर्वभूताहिते रतास्सन्तः प्रा-
प्नुवन्तीति द्वयोरर्थः ॥ ३ ॥ ४ ॥ नन्वेवमपि तयोरुपासनयोः परिश्रमे को
विशेष इति पुनरवधारयति । क्लेश इति । तत्र तावत्केवलमव्यक्तासक्तचेतसान्तु
यदेतन्मनुष्याशिवं न विद्युरिति देवाः कुर्वन्तीत्यादिश्रुत्या तत्कृतविघ्नबाहुल्या-
त्कर्मोपासनाम्विना विज्ञानसिद्धिर्दुर्घटैवेति तत्पूर्विकैव ध्यानात्सा सिद्धिर्युक्तेत्याशयः
॥ ५ ॥ तथा चेह यद्रूपेण सौलभ्यन्तदाह । ये त्विति । तस्माद्ब्रह्मार्पणबुद्ध्या ध्या-

---

वद्भक्तिपक्ष एव न्याय्य इत्याशयः ॥ २ ॥ ननु कर्म्मोपासनाभ्यां शुद्धचित्तस्त्वं कथं
कुर्य्यादित्याह । केवलमिति । तस्मात्पूजाकोटिसमं स्तोत्रं स्तोत्रकोटिसमो जप
इत्यादिस्मृतिन्यायेन केवलं ध्यानेनाप्यत्यन्ततस्तत्पदमाप्नोतीति द्वयोरर्थः
॥ ३ ॥ ४ ॥ ननु यदि विहितकर्म्माकरणादेव सिद्धिस्तर्हि विद्यायां गर्भादौ वा
कर्म्माभावात्सर्व्वेषामेव नैष्कर्म्यसिद्धया मुक्तिः स्यादित्यतः स्वजात्यनुसारेण क-
र्म्मावश्यं सिद्धये कर्तव्यमन्यत्त्वाह । दुर्घटैवेति । तस्मादशुद्धान्तःकरणस्य ध्याने
विघ्नबाहुल्यादुभयतो भ्रष्टत्वाद्दुर्घटैव सिद्धिरिति भावः ॥ ५ ॥ कर्म्मणैवेति ।

मयि संन्यस्य मत्पराः । अनन्येनैव योगेन मां
ध्यायन्त उपासते ॥ ६ ॥ तेषामहं समुद्धर्ता
मृत्युसंसारसागरात् । भवामि न चिरात्पा-
र्थ मय्यावेशितचेतसाम् ॥ ७ ॥ मय्येव मन
आधत्स्व मयि बुद्धिं निवेशय । निवसिष्यसि
मय्येव अत ऊर्ध्वं न संशयः॥८॥ अथ चित्तं
समाधातुं न शक्नोषि मयि स्थिरम् । अभ्या-
सयोगेन ततो मामिच्छाप्तुं धनंजय ॥ ९ ॥

नात्कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरमित्यादिवक्ष्यमाणरीत्या कर्मणैव विज्ञानाख्या-परार्थ्यां भक्तेस्सिद्धिर्युक्तेति निश्चयः ॥ ६ ॥ अथैतदेव पुनर्निश्चिनोति । तेषा-मिति । एवंसति मय्यावेशितचेतसां संसारसागरादहं मृत्युरूपात्समुद्धर्ता शीघ्रमेव स्यामित्याशयः ॥ ७ ॥ तदेवं कर्मोपासनाभ्यामेव विज्ञानसिद्धेरावश्यकत्वे सत्याह । मय्येवेति । तथा चाहंशब्देन विख्यातस्त्वेक एवाव्ययश्शिव इत्यादिस्मृत्याहंगि-रोपासनया मय्येव सदाशिवे सर्वसाक्षिणि संकल्पान्मन आधत्स्व मय्येव च यथोक्ते तद्दै मनश्शम्भुपदारविन्दयोरित्यादिरित्या व्यवसायलक्षणाम्बुद्धिं निवेशयेति ततो मय्येव केवले निष्कले शिवे ऽत ऊर्ध्वं निवसिष्यसीति न संशय इत्यर्थः ॥ ८ ॥ तदेवम्पूर्वोक्तमेव सिद्धान्तमवक्तुम्पुनः प्रकारान्तरेणाभिधत्ते । अथेति । ननु यदि कर्मणा चित्तशुद्धत्वेनेहामुत्रफलभोगतो वैराग्येप्यात्मनि शिवे चित्तं समाधातुं

ननु कैस्तत्कृतं यदिह कर्तव्यमिति चेच्छृणु । इहामुत्र तटे पूज्यं तल्लिङ्गं देव दानवैः। गार्हस्थ्ये न च लिङ्गे न तस्मात्सर्वार्थसिद्धिदमित्यादिपाद्मोक्त्यावधार्यम् ६॥ तथैवंसति वेदस्य त्रिकाण्डत्वेन तथाद्ययोस्तु ज्ञानसिद्ध्यर्थत्वेनावश्यक-त्वादाह । तदेवमिति । तथा उभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणा-ङ्गतिस्तथैव भक्तिकर्मभ्यां प्राप्यते ब्रह्म शाश्वतमित्याद्यवधार्यम् ॥ ८ ॥ आत्मनि शिव इति । नन्वात्मशब्देन परब्रह्मपशिवस्याभिधानमित्यत्र किम्प्रमा-णमितिचेत्, शृणु । तद्यथा, धारयिष्यति ते वेगं रुद्रस्त्वात्मा शरीरिणां, यस्मि-न्नोतमिदम्प्रोतम्विश्वं शाटीव तन्तुष्वित्यादिवोपदेशोक्त भागवते जाह्नव्युद्धरणे

अभ्यासेप्यसमर्थोऽसि मत्कर्म्मपरमो भव ।
मदर्थमपि कर्म्माणि कुर्व्वन्सिद्धिमवाप्स्यसि
॥ १० ॥ अथैतदप्यशक्तोसि कर्तुं मद्योगमा-
श्रितः । सर्वकर्मफलत्यागं ततः कुरु यतात्म-
वान् ॥११॥ श्रेयो हि ज्ञानमभ्यासात् ज्ञाना-
त् ध्यानम्विशिष्यते । ध्यानात्कर्मफलत्याग-
स्त्यागाच्छान्तिरनन्तरम् ॥१२॥ अद्वेष्टा सर्वभू-
तानां मैत्रः करुण एव च । निर्ममो निर-

स्थिरं कर्त्तुं न शक्नोषि ततोभ्यासयोगेनैव मां यथोक्तमाप्तुमिच्छेत्यर्थः ॥ ९ ॥ ननु यदि सत्कर्मनिष्ठालस्येनाभ्यासेप्यसमर्थस्तर्हि किं कुर्यादित्याह । अभ्यासे-पीति । एवं सत्यभ्यासेप्यसमर्थोसीति चेन्मत्कर्मपरमो भवेत्यर्थः । तद्यथा । वैष्ण-वस्स तु विज्ञेयश्शिवभक्तिपरायणश्शिवैकतत्वतश्चापि यस्य कस्याप्युपासनमित्या-द्यवधार्यम् ॥ १० ॥ नन्वेतावतापि यथोक्तरीत्या सर्वथा कर्तुमशक्तश्चेत्तदाप्याह । अथैतदिति । तत्रैवंसति समनन्तरोक्तरीत्यापि कर्तुमशक्तश्चेत्तदा प्रजहाति यदा कामानित्यादिरीत्या नियतात्मवान्भूत्वा सर्वकर्मणां फलत्यागं कुर्वन्नमृतत्वमाप्स्य-सीति बोध्यम् ॥ ११ ॥ तदेवंक्रमेण यथोक्तमेव निश्चेतुम्पुनराह । श्रेयो हीति । युक्तत्वेन केवलाभ्यासाच्छास्त्रजन्यं ज्ञानं तद्दोषत्रयनिवर्त्तकत्वेन श्रेय इत्यर्थः । एवंसति तादृशज्ञानादपिश्रवणाद्यनन्तरं सिद्ध्युपयोगित्वेन ध्यानं विशिष्यते ततोपि कर्मफलत्यागः परे ब्रह्मणि शिवे शान्तिप्रयोजकत्वाद्गरीयानित्यर्थः ॥ १२ ॥ ननु त्रिभिः प्रकारैर्विज्ञाततरस्य महात्मनः किं लक्षणमित्याह । अद्वेष्टेति । तथा च सर्वभूतानामिह प्रतिकूलबुद्ध्यभावान्न द्वेष्टा किन्तु मैत्रः स्निग्धत्वेन करुणो दुः-

---

नवमे द्रष्टव्यम् ॥ ९ ॥ यस्यकस्यापीति । तद्यथा, यतिः का सर्वभावेन पूजनीयो महेश्वरः । नहि चान्यप्रभावेन पूज्यश्शम्भुस्सनातनः । अमात्ये राजबुद्धिस्तु न दोषाय फलाय तत् । राज्ञि चामात्यबुद्धिस्तु दोषाय नार्थसिद्धये । पृथग्भावेन वा पूज्यश्शम्भुर्नैव न चान्यथा । यतश्चादौ हि गौर्य्याद्या यन्नादौ पूज्यतेखिलैरित्यादि-

हङ्कारस्समदुःखसुखः क्षमी ॥ १३ ॥ सन्तुष्टस्सततं योगी यतात्मा दृढनिश्चयः। मय्यर्पितमनोबुद्धिर्यो मद्भक्तस्स मे प्रियः ॥ १४ ॥ यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः। हर्षामर्षभयोद्वेगैर्मुक्तो यस्स च मे प्रियः ॥ १५ ॥ अनपेक्षश्शुचिर्दक्ष उदासीनो गत-

खितेषु शास्त्रोक्तमर्यादया दया तद्वानित्यर्थः। एवं निर्ममो ममेत्यभिनिवेशवर्जितः तथाहाद्यहंकारवर्जितस्सन्समदुःखसुखः क्षमी चेति हेतुगर्भितं विशेषणमत्रधार्यम् ॥ १३॥ तस्यैवं विशेषणान्तराण्यप्याह। सन्तुष्ट इति। तत्रैवंसति शरीरस्थितिकारणलाभेऽलभे च सततं सन्तुष्टो यतो योगी यतात्मा संशयादित्रिविधदोषरहितत्वेन दृढनिश्चयश्चेत्यर्थः। एवमिह यथोक्तरीत्या मयि शिवे तद्वै मनश्शम्भुपदारविन्दयोरितिस्मृतिन्यायेनार्पितं मनो बुद्धिश्च यस्य स वैष्णवस्स तु विज्ञेय इति स्मृतिन्यायेन च मद्भक्तो मम प्रिय इत्यर्थः ॥ १४ ॥ एवमन्यप्रकारेणापि तल्लक्षणमेवाह। यस्मादिति। तत्रैवंसति यस्मात्तत्वज्ञानयुक्ताल्लोको नोद्विजते न तप्यते न वा लोकादपि स उद्विजतइत्यर्थः एवमेव हर्षामर्षादिभिरपि यो मुक्तस्स च सोपि मे प्रिय इत्यर्थः ॥ १५ ॥ एवमन्यप्रकारेणापि पुनराह। अनपेक्ष इति। तथैवेह सर्वभूतेषु यदृच्छयोपनीतेष्वपि भोगेषु निरपेक्षः तथैव शुचिर्बाह्याभ्यन्तरशौचस-

पाद्योक्त्यावधार्य्यम् ॥ ११ ॥ १२ ॥ देहाद्यहङ्कारेति। तद्यथा, अहंशब्देन विख्यातस्त्वेक एवाव्ययश्शिवः। देहेन्द्रियादेरनित्यत्वात्कथं ते ब्रह्मशब्दिताः इत्यादिस्मृतेरिति भावः ॥ १३ ॥ त्रिविधदोषेति। स चायन्त्रिविधोपि दोषश्शास्त्रसज्जनसम्पर्कों विचारो ऽसङ्गभावना। समता स्वच्छता सौम्या सप्तधा भूमिका मतेत्यादिरित्या योगाद्दृढसंवनिवृत्तो भविष्यतीति भावः ॥ १४ ॥ न तप्यतइति। तद्यथा, सुखञ्च दुःखञ्च भवाभवौ च लाभालाभौ मरणं जीवितञ्च। पर्य्यायशस्सर्व्वमेते स्पृशन्ति तस्माद्धीरो न हृष्येन्न शोचेदित्यादिलक्षणयुक्तो बोध्यः ॥ १५ ॥ बाह्याभ्यन्तरेति। तत्र तावदेका लिङ्गे गुदे तिस्रः पादयोश्च करे दश उभयोस्सप्त दातव्या मृदश्शुद्धे च मज्जनमित्यादिना बाह्यशुद्धिः, एवं चि-

व्यथः । सर्वारम्भपरित्यागी यो मद्भक्तः स
मे प्रियः ॥ १६ ॥ यो न हृष्यति न द्वेष्टि न
शोचति न काङ्क्षति । शुभाशुभपरित्यागी
भक्तिमान्यः स मे प्रियः ॥ १७ ॥ समः शत्रौ
च मित्रे च तथा मानापमानयोः । शीतो-
ष्णसुखदुःखेषु समः सङ्गविवर्जितः ॥ १८ ॥ तु-

स्पन्नः एवं दक्षो यथोपस्थितेषु ज्ञातव्येषु कर्तव्येषु च सर्वज्ञत्वेन ज्ञातुं कर्तुञ्च समर्थस्त-
थामित्रारिपक्षेषूदासीनः एवमन्यथाकारणेष्वपि सत्स्वनुत्पन्नव्यथ इत्यर्थः तथेदं मे
स्यादिदं मे स्यादिदं कर्तव्यमद्य वै इत्यादिरीत्या सर्वारम्भपरित्यागीति जानामि ध-
र्ममिति स्मृतिन्यायेन गर्गादिवद्वसिष्ठादिवच्च वर्तितव्यमिति स मे गुरुत्वेन भ-
क्तत्वेन वा प्रिय इत्यवधार्यम् ॥ १६ ॥ अथापरमप्याह । यो नेति । तत्रैवंसति
यश्च प्रियम्प्राप्य न हृष्यति न चाप्रियम्प्राप्य द्वेष्टि तथैव प्राप्तेष्टवियोगे च न-
शोचति नचाप्राप्तेष्टसंयोगे च काङ्क्षतीत्यर्थः । एवं रीत्या सर्वारम्भपरित्यागीति शु-
भाशुभपरित्यागीत्यनेनोक्तमित्यादिलक्षणलक्षितोयस्स मे भक्तः प्रिय इत्याशयः ॥ १७ ॥
एवमपरमपि विष्णुभक्तिलक्षणम्वैष्णवस्स तु विज्ञयशिवभक्तिपरायण इत्यादिस्मृ-
तिन्यायेनाप्याह । सम इति । तत्र तावच्चेतनेष्वपि सर्वत्रौदासीन्येन हर्षविषाद-

---

व्याजी स्वीयधर्मज्ञो वेदज्ञस्तत्त्वपारगो विरक्तो विषनिसुं ... भिर्योगी सुनिर्भ-
वेदित्यादिनाभ्यन्तरशौचसम्पन्न इत्यर्थः ॥ १६ ॥ न शोचतीति । ननु यच्चिन्तितन्त-
दिह दूरतरम्प्रयाति यच्चेतसापि न कृतन्तदिहाभ्युपैतीत्यादिना कथं रामच-
न्द्रस्य शोक इति चेन्नैवम् । तथैवंसत्यहमेव परब्रह्म शिवमेकमनामयमिति
स्यान्निश्चयो सुतरां बद्ध एवान्यथाभवेदित्येवन्तस्य निश्चये सति बहिष्कृत्रिमसं-
रम्भो हृदि संरम्भवर्जितः । कर्त्ता बहिरकर्त्तान्तर्लोके विहर राघवेत्यादिरीत्या-
वधार्यम् ॥ १७ ॥ शिवभक्तिपरायण इति । नन्वेवन्तर्हि विष्णुभक्त्यैव वैष्णवस्स कु-
तो न स्यादितिचेच्छृणु । विना शिवप्रसादं हि भ्रान्तिः क्वापि न नश्यतीत्यादि-
ना नारदम्प्रति स्कान्दे श्रीकृष्णोक्त्या यदा चर्मवदाकाशम्वेष्टयिष्यन्ति मान-
वास्तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यतीत्यादिश्वेताश्वतरोपनिषच्छ्रुत्या

ल्यनिन्दास्तुतिर्मौनी सन्तुष्टो येन केन चि-
त् । अनिकेतः स्थिरमतिर्भक्तिमान्मे प्रियो
नरः ॥ १९ ॥ ये तु धर्म्यामृतमिदं यथोक्तं
पर्युपासते । श्रद्दधाना मत्परमा भक्ता-
स्तेतीव मे प्रियाः ॥ २० ॥ इति श्रीमद्भग-
वद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसम्वादे भक्तियोगो नाम द्वा-
दशोऽध्यायः ॥ * ॥ श्रीकृष्ण उवाच ॥
इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।

शून्येन वर्तितव्यमिति स्पष्टमन्यत् ॥ १८ ॥ एवमिहापरमपि संसृतिसङ्गविनिर्मुक्त-स्य योगिनो लक्षणम्पुनराह । तुल्येति । तत्र तावन्निन्दा परगुणेषु दोषस्तुतिश्च दोषवत्स्वपि गुणकथनमिति ते च सुखदुःखजनकतया तुल्ये यस्य स तथेत्यात्मानुसन्धानपरत्वेन मौनी संयतवाङ् न तु शरीरयात्रानिर्वाहायापि बहुशो वाग्व्यापारोपेक्षित इत्याह । सन्तुष्ट इति । किन्तु प्रारब्धाय समर्पितं स्ववपुरिति स्मृतिन्यायेन भक्तिमानित्यर्थः । एवमनिकेतो नाम गृहेषु न स्वतन्त्रो न वा पुत्राद्यधीनः किन्तु गृहेष्वतिथिवत्तिष्ठेत्पुत्रदाराप्तसङ्गमः पान्थसङ्गम इति स्मृतिन्यायेन यस्तिष्ठेत्स मे प्रियो नर इत्याशयः ॥ १९ ॥ एतदेव स्थितप्रज्ञस्य लक्षणमवधार्योपसंहरति । ये त्विति । एवंसत्यद्वेष्टा सर्वभूतानामित्यादियथोक्तं ये पर्युपासते तएव श्रद्धाना मत्परमा भक्ता मेतीव प्रिया इत्यर्थः ॥ २० ॥ इति श्रीमत्पदवाक्यप्रमाणयोगिवर्यविप्रराजेन्द्रविरचिते तत्वैकदर्शनभाष्ये पराभक्तियोगनिरूपणं नाम द्वादशोध्यायः ॥ * ॥ क्षेत्रक्षेत्रज्ञयोर्ज्ञानन्तदन्यस्य विवेकतः । परात्मानन्ततो ज्ञेयं कैवल्य-

---

च विवेक्तव्यम् ॥ १८ ॥ तुल्य इति । तत्र तु गुणदोषौ बुधो गृह्णन्निन्दुवत् डावि-वेश्वर इतिन्यायेन स्तुतिनिन्दयोस्तुल्य इत्यर्थः ॥ १९ ॥ अद्वेष्टेति । तत्र राजधर्ममर्यादातिरिक्तत्वेनविवक्षित इत्यर्थः ॥ २० ॥ इति श्रीमद्योगिवर्यविप्रराजेन्द्रात्मजविरचिते भाष्यप्रदीपे द्वादशोध्यायः ॥ * ॥ ननु यत्र किञ्च जगत्यत्र त्वा-

एतद्यो वेत्ति तम्प्राहुः क्षेत्रज्ञ इति तद्विदः ॥ १ ॥ क्षेत्रज्ञञ्चापि माम्विद्धि सर्वक्षेत्रेषु भारत । क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥ २ ॥ तत्क्षेत्रं यच्च यादृक् च यद्विकारि यतश्च यत् । स च यो यत्प्रभावश्च तत्समासेन

न्तत् त्रयोदशे ॥ ननु कस्त्वं भवान्वै कुत आगतोसि कुतो हि गन्ता क्व च सम्वत्स्यसीत्याद्युत्तरशून्यानां कथम्परा भक्तिरुपपद्यतइत्याह । इदमिति । तत्रैवं सति हे कौन्तेय इदमिन्द्रियान्तःकरणसहितं भोगायतनं शरीरजातं क्षेत्रमित्यभिधीयतइत्यर्थः । तथा च बुद्धिर्मनोहम्चित्तश्चेत्यादिपञ्चविंशतितत्त्वात्मकमिदं सङ्घातस्वरूपमहं ममेति यो वेत्त्यभिमन्यते तं क्षेत्रक्षेत्रज्ञयोर्विवेकविदो महान्तः प्राहुरित्यर्थः ॥ १ ॥ ननु तद्विद इत्यनेन किमुच्यतइत्यप्याह । क्षेत्रज्ञमिति । एवन्तर्ह्येक एव हि भूतात्मेत्यादिश्रुत्या व्यष्टिभावेन जीवः समष्टिभावेन चेश्वर इति-द्वासुपर्णेत्यादिश्रुत्या च जीवेश्वरयोः सर्वक्षेत्रेष्ववस्थितिरित्यर्थः । नन्वेतयोः परं किमस्तीत्याह । क्षेत्रेति । तथा च हे भारत क्षेत्रं यथोक्तं शरीरं क्षेत्रक्षेत्रज्ञौ च व्यष्टिसमष्टिभावेन जीवेश्वरात्मकौ द्वौ सङ्कलनया तेभ्यश्च परं मोक्षसाधनत्वात्तदप्यविद्याविरोधि चिदम्बराख्यं ज्ञानं मम परम्पदत्वेन मतमित्यवधार्यम् ॥ २ ॥ अथ संक्षेपेणोक्तमर्थम्विस्तरेणेह वक्तुमाह । तत्क्षेत्रमिति । तत्रैवंसति तदिदम्प्रागुक्तं शरीरं क्षेत्रं यच्च स्वरूपेण परिच्छिन्नादिस्वभावं यादृक् चेच्छादिधर्मकं यद्विकारि यैश्चेन्द्रियादिविकारैर्युक्तं यतश्च चिदचिद्विशिष्टकारणमुत्पद्यते तद्वर्णयामीति

---

दिश्रुत्या सर्वस्य चिज्जडात्मकस्य प्रपञ्चजातस्य विष्णुरूपत्वे स्थिते तत्र विवेकार्थमाह । चेत्र इति । तत्र तावदचेतनमात्रस्य शरीरजातस्य क्षेत्रत्वन्तथैक एव हि भूतात्मेति द्वासुपर्णेतिश्रुतिभ्यां समष्टिव्यष्टिरूपेण च क्षेत्रज्ञत्वमित्युभयोर्ज्ञानमित्यर्थः । एवन्तदन्यस्य यो वेदाविति श्रुतिवेद्यस्य चिदम्बरात्मनो विवेकतो ज्ञानेन ततः परम्पदात्मानञ्च निष्कलम्विद्धे यमित्यर्थः ॥ १ ॥ अविद्याविरोधीति । ननु ज्ञानवतान्तयोर्विरोधाभावेपि मेचकदृष्टान्तमेव समाधेयः, तद्यथा । मेचकान्वेन तुल्यत्वे मेचकानान्तदियतामित्यादि द्रष्टव्यम् ॥ २ ॥ युग्ममिति ।

**मे शृणु ॥ ३ ॥ ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् । ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥ ४ ॥ महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च । इन्द्रियाणि दशैकञ्च पञ्च**

शेषः । एवं स च तच्छब्देन लक्ष्योऽखण्डश्चिदम्बरात्मा यत्प्रभावश्च स्वप्रकाशानन्दस्वभावस्तद्याथात्म्यं संक्षेपेण मम वचनाच्छृणु श्रुत्वा चावधारयेत्याशयः ॥ ३ ॥ ननु कैर्विस्तरेणोक्तं यद्भवतोच्यतइत्याह । ऋषिभिरिति । तदित्थं, यद्वषिभिर्वसिष्ठादिभिर्योगशास्त्रेण यमनियमादिसाधनैर्बहुधा गीतं तथोक्तात्युक्त्येत्यादिचतुर्विंशतिछन्दोभिस्ततोधिकैर्वा विविधैर्ब्राह्मणैः कर्मोपासनाकर्तृभिरुक्तमेवमथातो ब्रह्मजिज्ञासा जन्माद्यस्य यत इत्यादिब्रह्मसूत्रपदैः सत्यं ज्ञानमनन्तम्ब्रह्म यतो वा इमानि भूतानिं जायन्तइत्यादिश्रुतिमूलकतया हेतुमद्भिर्विनिश्चितैश्चोपक्रमोपसंहारैःषड्विधसिद्धान्तनिर्णायकैर्लिङ्गैश्च ज्ञानकाण्डस्थैर्बहुधा गीतमिति परमार्थः ॥ ४ ॥ अथेह क्षेत्रस्वरूपमपि तावदाह । महेति । तत्रैवंसतीह तावन्महान्ति भूतानि भूम्यादीनि पञ्च तथाहङ्कारस्तत्कारणभूतमेवम्बुद्धिरप्यध्यवसायलक्षणं महत्तत्त्वम् । तथैव तत्करणन्तु बिन्दुप्रकृत्यात्मकमव्यक्तमित्यर्थः । एवं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणाख्यानि पञ्च ज्ञानेन्द्रियाणि तथा वाक्पाणिपादपायूपस्थाख्यानि पञ्च कर्मेन्द्रियाणि चेति मिलित्वा दशेन्द्रियाणि चेत्यर्थः । एवमत्रैकमर्द्धमात्रात्मकम्बिन्द्वाधारभूतं महाप्रकृतिलक्षणमव्यक्तमेकमेवेत्यर्थः । एवमेव शब्दस्पर्शरूपरसगन्धाः पञ्च

---

तद्यथा । बुद्धिर्मनोहश्चित्तञ्च मूलाख्या प्रकृतिस्तथा । द्विधेन्द्रियाणि भूतानि वायवः पञ्चविंशतिरीत्यादिस्मृत्या तत्तद्विकारैर्युक्तमित्यर्थः ॥ ३ ॥ अथात इति । तत्र तावदथ वेदाध्ययनानन्तरमतश्शमदमादिषट्सम्पत्तिसत्त्वेनान्तःकरणस्य शुद्धत्वाद् ब्रह्मजिज्ञासा कर्त्तव्येत्यर्थः । एवंसति नह्यन्यज्ज्ञानादन्यगतानर्थनिवृत्तिरिति जीवब्रह्मणोरेकत्वमपि स्फुटीकृतम् । एवमपरमप्याह । जन्मादीति । तथा च यतोऽस्यानानाज्जगतो जन्मादि जन्मस्थितिभङ्गम्भवति तदिदम्ब्रह्म विज्ञातव्यमित्याद्यर्थयुक्तैर्ब्रह्मसूत्रपदैरित्यर्थः ॥ ४ ॥ बिन्दुप्रकृत्येति । तद्यथा । क्रियाशक्तिप्रधानायाश्शब्दशब्दार्थकारणप्रकृतेर्बिन्दुरूपिण्याः स्फोटब्रह्माभवत्परेत्यादिस्मृत्या परा पश्यन्ती मध्यमा वैखरीत्येवंक्रमेणाकोकारमकाराभ्यामष्टधा प्रकृतिरि-

**चेन्द्रियगोचराः ॥ ५ ॥ इच्छा द्वेषः सुखं दुःखं सङ्घातश्चेतना धृतिः । एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ॥ ६ ॥ अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् । आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥ ७ ॥ इन्द्रिया-**

ज्ञानेन्द्रियगोचराः एवं वचनादानगमनविसर्गमेहनानि चेति पञ्च कर्मेन्द्रियगोचरा विषयाश्चेत्यर्थः ॥ ५ ॥ एवमिह पूर्वोक्तविषयप्रयोजकमप्याह । इच्छेति । तत्र तावदिच्छा नाम सुखे तत्साधने चेदं मे स्यादिति स्पृहाख्या चित्तवृत्तिः तथा द्वेषो नाम पूर्वोक्तेच्छाविरोधिनी चित्तवृत्तिः । एवं सुखं नाम निरुपाधिकेच्छाविषयीभूता चित्तवृत्तिः । एवं दुःखमपि सोपाधिका चित्तवृत्तिः । तत्र सङ्घातस्तु पञ्चमहाभूतपरिणामः तत्र ज्ञानाख्या चित्तवृत्तिस्तु धृतिरित्यर्थः । एवं सत्येतत्सर्वं क्षेत्रमिति समासेन संक्षेपेण महाभूतादिधृत्यन्तमुक्तमित्याशयः ॥ ६ ॥ एवमिह क्षेत्राद्विवेकेन क्षेत्रज्ञम्प्रतिपाद्य तयोर्ज्ञानार्थं साधनान्यप्याह । अमानित्वमिति । तत्र तावद्विद्यमानैरविद्यमानैर्वा गुणैश्श्लाघनं मानित्वन्तथार्थलाभपूजाख्यात्यर्थं स्वधर्मस्य प्रकटीकरणं दम्भित्वम् । एवं कायवाङ्मनोभिः प्राणिनां पीडनं हिंसा तथैव तेषां निवर्त्तनन्त्वमानित्वमदम्भित्वमहिंसेत्युक्तम्भवति तथैवापरापराधसहनं क्षान्तिः । एवमकौटिल्यन्तु हृदयमार्जवमवक्रतेति यावत् एवमेवाचार्योऽत्र श्रवणादिना यमनियमादिना च मोक्षसाधनोपदेष्टा तथा तस्योपासनञ्च प्राणार्थधीवाग्भिर्न्नमस्कारादिभिश्चोपसेवनम् । तथा शौचञ्च मृज्जलाभ्यां बाह्यम्विषयेषु दोषदर्शनेन चान्तरम् । एवं स्थैर्यन्तु पुनःपुनर्विघ्नबाहुल्येपि तत्राभ्यासे यत्नाधिक्यम् । तथात्मनो देहेन्द्रियादिसङ्घातं मनसा निरुध्य मोक्षसाधने व्यवस्थापनमिति विवेकः ॥ ७ ॥

त्यपि बोध्यम् ॥ ५ ॥ परिणामइति । तद्यथा । द्विधा विभज्य चैकैकञ्चतुर्धा विभजेत्पुनः । स्वांशमन्यत्र पुनस्तेषु योजनात्पञ्च पञ्चत इत्यादिस्मृत्या पञ्चीकरणेन पृथिव्यादिसूक्ष्मपञ्चभूतानामपि महाभूतत्वं स्फुटीकृतम् ॥ ६ ॥ प्रकटीकरणमिति । तद्यथा । कर्मनाश्याजलस्पर्शात्करतोयाविलङ्घनाद्गण्डकी बाहुतरणाद्धर्मः क्षरति कीर्त्तनादितिस्मृत्यन्तरादपि स्वधर्मस्य प्रकटीकरणं नोचितमिति भावः ॥ ७ ॥ वैराग्यमिति । तद्यथा । योऽदासीन्यात्ततेनापि वर्द्धमाने दि-

र्थेषु वैराग्यमनहङ्कार एव च। जन्ममृत्यु-
जराव्याधिदुःखदोषानुदर्शनम् ॥ ८ ॥ असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु। नित्यञ्च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥ ९ ॥ मयि चानन्ययोगेन भक्तिरव्यभिचारिणी। विवि-

अथापरमपि तत्त्वप्राप्तिसाधनमाह। इन्द्रियार्थेष्विति। तत्र तावच्छब्दादिषु दृष्टेष्वानुश्रविकेषु वेन्द्रियार्थेषु भोगेषु वैराग्यम्। तथा गर्वो ऽहङ्कारस्तदभावोपीति चाद्मानित्वादीनामपि संग्रहः एवं जन्मादिव्याध्यन्तेषु च दुःखदोषानुदर्शनमप्यात्मप्राप्तिसाधनत्वेनापेक्षितमिति भावः ॥ ८ ॥ एवमपरमपि तत्साधनमात्मतत्त्वप्राप्त्यर्थमाह। असक्तिरिति। तत्र तावत्पुत्रदारगृहादिष्वसक्तिर्नामान्यस्मिन्सुखिनि दुःखिनि वाहमेव सुखी दुःखी चेति तद्राहित्यमसक्तिरित्यर्थः। एवमन्येष्वप्यत्यन्ततादात्म्यमभिष्वङ्गस्तद्रहितमित्यर्थः। ननु च तस्यैतादृशस्य जिज्ञासोः किमप्यपेक्षितमपीत्याह। नित्यञ्चेति। तथा चास्येष्टानिष्टोपपत्तिषु नित्यं समचित्तत्वमिति भावः ॥९॥ एवमपरमपि तत्साधनमाह। मयीति। तथा चाहङ्गिरोपासनया मन्ये त्वां कालमीशानमितिस्मृतिन्यायेन मयि सदाशिवे त्वनन्यभावेनाव्यभिचारिणी भक्तिर्नतु दक्षादिवद्देवतान्तरत्वेन चलितभक्तिरिति तात्पर्यम्। एवं यस्मिन्देशे हि तत्त्वज्ञो नास्ति सज्जनपादपस्सफलः शीतलच्छायो न तत्र दिवसम्वसेदित्यादिस्मृत्युक्तदेशत्वम्विविक्तदेशसेवित्वमिति तथैव वसेदिति भावः। एवमेव न धावति जनाकीर्णं नारण्यमुपशान्तधी,र्यथा तथा यत्र तत्र स्थित एवोपशाम्यतीत्यादिना त्वरतिर्जनसंस-

भेदिने। उन्मूलिते मनोमूले जगद्वृक्षः पतिष्यतीत्यादिरीत्यावधार्यम् ॥ ८ ॥ नन्वस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकमाद्यं त्रयम्ब्रह्मरूपं जगद्बीजं ततो द्वयमित्यादिश्रुत्या नामरूपयोर्जगद्बीजत्वात्तयोश्च मायारूपत्वात्तस्याश्च तस्य कारणमाहुस्त्वां साङ्ख्यास्तत्त्वविदो हरे इत्यादिस्मृत्या विष्णुरूपत्वे स्थिते किन्तस्य भक्तिरित्यभिप्रेत्याह। तथा चेति। एवन्तर्हि सगुणभावेनापि सीताञ्च पार्वतीम्पश्य द्रामञ्चैव त्रिलोचनमित्यादिरीत्यैव भजेदित्यनवद्यम् ॥ ९ ॥ दक्षादिवदिति। तद्यथा। दशवर्षसहस्राणि दक्षो वै यज्ञमाहरत्तद्यज्ञमदहच्छंभोः

कदेशसेवित्वमरतिर्जनसंसदि ॥ १० ॥
अध्यात्मज्ञाननित्यत्वन्तत्त्वज्ञानार्थदर्शनम् ।
एतद् ज्ञानमिति प्रोक्तमज्ञानन्तदतोन्यथा
॥ ११ ॥ ज्ञेयं यत्तत्प्रवक्ष्यामि यद् ज्ञात्वा-
मृतमश्नुते । अनादिमत्परं ब्रह्म न सत्तन्ना-
सदुच्यते ॥ १२ ॥ सर्वतः पाणिपादन्त-
त्सर्व्वतोक्षिशिरोमुखम् । सर्व्वतः श्रुति-

दीश्यनेनोक्तमवधार्यम् ॥ १० ॥ नन्वतः परमपि तस्य किमपेक्षितमित्याह । अध्यात्मेति । तत्र तावदात्मानमधिकृत्य प्रवर्ततइत्यध्यात्मं ज्ञानं तस्मिन्नित्यत्वमित्यर्थः । तत्रेत्थं सति विवेकनिष्ठस्य ह्यमानित्वादितत्त्वज्ञानार्थदर्शनान्तं विंशतिसङ्ख्याकं शास्त्रजन्यं ज्ञानम्प्रोक्तमतोन्यथात्वज्ञानं मोक्षानुपयोगित्वादिति भावः ॥ ११ ॥ ननु च ज्ञानशब्दितैरेभिस्साधनैः किं ज्ञेयमित्यतः प्रतिजानीते । ज्ञेयमिति । नन्विह षट्सम्पत्तिभिस्साधनैर्यज्ज्ञेयं ज्ञात्वा चामृतमश्नुते नाम संसाराद्विमुच्यते तद्ब्रह्म किंस्वरूपं भवतीत्यप्याह । अनादिमदिति । एवन्तर्हि प्रथमं सहजम्ब्रह्म मायया शून्यमागतं शून्यात्प्रकृतिरीशश्च महदाद्यास्ततो जगदित्यादिस्मृत्या मायया शून्याख्यमसदागतं ततश्च विन्द्वाख्या कार्या प्रकृतिरीशश्चेति द्वासुपर्णेत्यादिश्रुतिवेद्यं कल्पितं सदागतमिति सदसद्भ्याम्विहीनं त्रैकालाबाध्यत्वेनानादि मध्यान्तरहितं सत्यं ज्ञानमनन्तम्ब्रह्मेत्यादिश्रुतिवेद्यमवधार्यमिति परमार्थः ॥ १२ ॥ ननु च सदसद्भ्यां विहीनं त्रैकालाबाध्यत्वेन विलक्षणं सद्रूपम्ब्रह्म कथमिहाध्यस्ते

---

प्रसादेन विना चणादित्याद्यन्यत्र विस्तरः॥१०॥ अधिकृत्येति । इहात्मशब्देन बुद्धिर्मनोहस्थितश्चेत्यादिस्मृत्या पञ्चविंशतितत्त्वात्मकं शरीरं रुच्यते तच्छरीरमधिकृत्यैव यदि देहम्पृथक्कृत्येत्यादिरीत्या ब्रह्मविद्या प्रवर्त्तते तच्चात्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्य इत्यादिवेदान्तादेवेत्यध्यात्मविद्याशब्देन वेदान्तमेवोच्यतइत्याशयः ॥ ११ ॥ सदसद्भ्यामिति । तत्र तावच्चिरकालस्थायित्वेन सत्वं स्वल्पकालस्थायित्वेन चासत्त्वन्ताभ्यांविहीनं त्रैकालाबाध्यत्वलक्षणं सत्त्वमनाद्यन्तत्वर्थः ॥ १२ ॥ रज्जुसर्पवदिति । तद्यथा रामायणेप्युक्तम् । तद्यथा । यद-

मल्लोके सर्व्वमावृत्य तिष्ठति ॥ १३ ॥ स-
र्व्वेन्द्रियगुणाभासं सर्व्वेन्द्रियविवर्ज्जितम् ।
असक्तं सर्व्वभृच्चैव निर्गुणं गुणभोक्तृ च
॥ १४ ॥ बहिरन्तश्च भूतानामचरं चरमेव
च । सूक्ष्मत्वात्तदविज्ञेयं दूरस्थञ्चान्तिके
च तत् ॥ १५ ॥ अविभक्तञ्च भूतेषु विभक्त-

जगति भासतइत्याह । सर्वत इति । तत्र तावच्चेतनश्चेतनानानेको बहूनामित्यादिश्रुत्या चेतनत्वेन प्रतिभासमानानां क्षेत्रज्ञानां मध्ये चेतनस्सर्वप्रतिबिम्बकरूपस्तथा बहूनां प्रकृत्यादिमहाभूतानां क्षेत्राणां मध्ये सर्वाधिष्ठानरूपञ्च परब्रह्मैवेत्यध्यस्तसत्तयापि रज्जुसर्पवत्सर्वतः पाणयः पादाश्च यस्य परब्रह्मणस्सदाशिवस्येत्यादिसर्वमावृत्य तदेव सहजम्ब्रह्म परात्परतरं तिष्ठतीत्यर्थः ॥ १३ ॥ ननु व्यावहारिकसत्तया सद्रूपमपि जगद्वस्तुतो ऽसदित्यध्यारोपापवादाभ्यां निरूपयन्नाह । सर्वेन्द्रियेति । तथा चेह ध्यायतीव तद्ब्रह्मेत्यादिश्रुत्या परमार्थतस्सर्वेन्द्रियविवर्जितमपि तद्ब्रह्म मायया सर्वेन्द्रियगुणाभासमपि भवतीत्यन्वयः । एवम्परमार्थतस्सकलसङ्गशून्यमपि मायया सर्वाधिष्ठानत्वेन सर्वभृच्च भवति तथैव परमार्थतो निर्गुणमपि गुणानां सत्त्वरजस्तमसां शब्दादिद्वारा सुखदुःखादिगुणकार्यभोक्तृ च तद्ब्रह्म ज्ञेयमित्यर्थः॥१४॥ एवमेव रज्जुसर्पवत्तेनैव सर्वम्व्याप्तमित्याह । बहिरन्तश्चेति । तत्रैवंसति सदसद्रूपाणां सर्वेषां कल्पितानामधिष्ठानमेकमेवेति तद्दूरे तद्वदन्तिकइत्त्यादिश्रुत्या सर्वत्र तस्य विद्यमानत्वेपि सूक्ष्मत्वात्तदविज्ञेयं साधनशून्यैस्सर्वसाधारणजनैरित्यवधार्यम् ॥१५॥ अथ यदुक्तमेकमेव सर्वमावृत्य तिष्ठतीति तदप्याह । अविभक्तमिति । तत्रै-

---

न्यदन्यच्च विभाव्यते भ्रमादध्यास इत्याहुरमुं विपश्चितः । असर्पभूतेऽपि हि सर्पभावना रज्ज्वादिके तद्वदपीश्वरे जगदित्याद्यधिकमन्यच्च विस्तरः ॥ १३ ॥ अध्यारोपापवादाभ्यामिति । तद्यथा । उपायाः शिक्षमाणानां बालानामुपलालनाः असत्ये वर्त्मनि स्थित्वा ततस्सत्यं समीहत इत्यादि द्रष्टव्यम् ॥ १४ ॥ सर्वं व्याप्तमिति । तद्यथा, यद्यद् दृश्यमिदं सर्वं नेति सन्त्यज्य युक्तिभिः, प्राप्यावशिष्टं चिन्मात्रं सोऽस्मि सोऽस्तीति भावय । एकम्ब्रह्म चिदाकारं सर्वात्मकमखण्डितम् । निष्कम्पं भूरिवाशेषमिति भावयत इत्याद्यात्मार्चनप्रकरणे योगवाशिष्ठे द्रष्टव्यम् ॥ १५ ॥

मिव च स्थितम् । भूतभर्तृ च तज्ज्ञेयं ग्रसि-
ष्णु प्रभविष्णु च॥१६॥ ज्योतिषामपि तज्ज्यो-
तिस्तमसः परमुच्यते । ज्ञानं ज्ञेयं ज्ञानगम्यं
हृदि सर्व्वस्य विष्ठितम् ॥ १७ ॥ इति क्षेत्र-
न्तथा ज्ञानं ज्ञेयञ्चोक्तं समासतः । मद्भक्त
एतद्विज्ञाय मद्भावायोपपद्यते ॥ १८ ॥ प्र-

वंसति क्षेत्रक्षेत्रज्ञेषु सर्वभूतेषु चाकाशवदविभक्तमपि विभक्तमिव च स्थितमित्यर्थः। एवं गुणत्रयेण भिद्यन्ते ब्रह्मविष्णवादयस्स मे, वस्तुतस्त्वेकमद्वैतं शिवमित्याह हि श्रुति-रित्यादिश्रुत्या भूतानां प्राणिनां भर्तृ भरणकर्तृ ग्रसिष्णु प्रभविष्णु च ब्रह्मादिरूपेण तद्ब्रह्मैवेत्याशयः ॥ १६ ॥ ननु यदि सर्वप्रकाशकं सर्वत्र विद्यमानमपि नोपलभ्य-ते चेत्तर्हि किन्ततस्स्यादित्यत आह । ज्योतिषामपीति । तत्रैवंसत्यस्तमित आ-दित्ये ऽस्तमिते चन्द्रमसावस्तमितायाम्वाचि किं ज्योतिरेवायम्पुरुष इति प्रश्ने स्वयं ज्योतिरेवायं पुरुष इत्यादिश्रुत्या नाग्न्यादिज्योतिर्वज्ज्योतिस्तमस्यन्धं यतो भवेदित्या-दिस्मृत्या च तत्तमसः परं ज्योतिषामपि ज्योतिर्येन तेजसेद्धस्सूर्य्यस्तपति तस्य भासा सर्व-मिदं विभातीत्यादिश्रुत्यापि तत्परमित्यर्थः । एवंसति तदेतदिति मन्यन्ते आत्मा-नम्ब्रह्मवादिन इत्यादिश्रुत्या गुरुशास्त्राभ्यां हृदि सर्वस्याधिष्ठितं ज्ञेयत्वेन स्थितं ज्ञानन्तत्त्वविदाम्प्रत्यक्षमेवेत्याशयः ॥ १७ ॥ अथैवमिह पूर्वोक्तं सर्वमुपसंहरन्नाह । इतीति । तथा चेह समनन्तरमेव महाभूतानीत्यादिना क्षेत्रन्तथा जीवेश्वरलक्षणं क्षेत्रज्ञं ज्ञानं ज्ञेयञ्च ततोधिकम्परब्रह्मेति त्रिविधं समासतश्चोक्तमित्यर्थः । ननु केन मार्गेण तद्ब्रह्म विजानीयादित्यत आह । मद्भक्त इति । तत्रैवं सत्यहाङ्गिरोपासनया मयि सदाशिवे वसत्यद्यातु सर्वत्रेति स्मृतिन्यायेन वासुदेवे पशुपतौ वा गुरुत्वेन भक्तिर्यस्य स चैवं मद्भक्त एतद्यथोक्तं क्षेत्रक्षेत्रज्ञयोर्ज्ञानं विज्ञाय मद्भावः परम्पद-

---

ब्रह्मादिरूपेणेति । तद्यथा । ब्रह्मविष्णुसुरेन्द्राद्या यद्यत्कुर्वन्ति सर्वतः । तदेत-च्छिवपुरुषैः करोतीत्येव भावयेत्यपि बोध्यम् ॥१६॥१७॥ अधिकमिति । यो देवा-नाम्प्रभवश्चोद्भवश्च विश्वाधिको रुद्रो महर्षिर्हिरण्यगर्भं जनयामास पूर्वमित्या-दिश्रुतेरित्यर्थः । परम्पदरूप इति । यदेतदुक्तं स्कान्दे, तद्यथा । पदं यत्परमं

कृतिम्पुरुषञ्चैव विद्ध्यनादी उभावपि । विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान् ॥ १९ ॥ कार्य्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते । पुरुषस्सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥२०॥ पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान्गुणान् । कारणं गुणसङ्गोऽस्य सदस-

रूपस्तदर्थमुपपद्यतइत्यर्थः ॥ १८ ॥ अथ परब्रह्मणः सदाशिवस्याविनाशित्वेन सत्यत्वमनादित्वञ्चेत्युभयम्प्रकृतिपुरुषयोस्त्वनादित्वमेव न सत्यत्वमित्यादि विवेचयन्नाह । प्रकृतिमिति । तथा चेह नैवादिर्जन्म ययोस्तौ अनादी प्रकृतिम्पुरुषञ्च विद्धीत्यर्थः । एवंसति जन्माभावात्कुतः स्थितिरित्यादिस्मृतिन्यायेन भातीति चेद्भातु नाम मिथ्यास्वप्नगजादिवदितिस्मृतिन्यायेन चोभावप्यनादी विद्धीत्यर्थे पर्यवसन्ने तद्विकारान्गुणांश्च प्रकृतिसम्भवान्विद्धीत्यर्थः ॥ १९ ॥ तत्र तावद्विकाराणाम्प्रकृतिसम्भवत्वमपि विवेचयन्नाह । कार्येति । तत्रैवंसति कार्यं शरीरं करणमेव कारणन्तद्रूपाणीन्द्रियाणि तेषां कर्तृत्वे हेतुश्च प्रकृतिरुच्यतइत्यर्थः । एवम्पुरुषः क्षेत्रज्ञस्तु तत्र सुखदुःखानां भोक्तृत्वे हेतुरित्यर्थः ॥ २० ॥ अथ पुरुषस्य सुखदुःखादिभोक्तृत्वात्संसारित्वमित्युक्तन्तत्र किं निमित्तमित्याह । पुरुष इति । तत्र तावत्प्रकृतिस्थ एव हि पुरुषः प्रकृतिजांश्छब्दादिगुणान्भुङ्क्ते तत्र कारणन्तु

---

विष्णोस्तदेशाखिलदेहिनाम्पदम्परमतश्चैतं सशिवस्याख्यविग्रह इत्यादि द्रष्टव्यम् ॥ १८ ॥ अनादित्वमेवेति । तथा च सदेव सोम्य इदमग्र आसीदिति यदातमस्तन्न दिवा न रात्रिरित्यादिश्रुत्या एवमादावन्ते च यन्नास्ति मध्ये यदपि तत्तथा असत्यन्तमः प्रोक्तं यथैवास्ति मरीचिकेत्यादिस्मृत्या च न आदिजन्म ययोः प्रकृतिपुरुषयोस्तौ अनादी तयोर्भावस्तत्त्वमिति सिद्धान्तः ॥१९॥ कर्तृत्वइति । तदेतदुक्तं स्कान्दे, कर्तृत्वञ्चैव भोक्तृत्वं यदुक्तं जीवयोरिह । कर्तृत्वे तु हरिर्हेतुर्भोक्तृत्वे तु सदाशिव इत्यादिना ऽवान्तरत्वेन कर्तृत्वभोक्तृत्वादीनां सर्वसाक्षितया सदाशिवस्यैव सर्वाधिष्ठानतया हेतुत्वमिति । भोक्तारः पशवश्चैवं शिवो भोजयिता परं इत्यादिना सिद्धान्तितमित्यवधेयम् ॥२०॥२१॥२२॥

द्योनिजन्मसु॥२१॥ उपद्रष्टानुमन्ता च भर्ता भोक्ता महेश्वरः। परमात्मेति चाप्युक्तो देहेस्मिन्पुरुषः परः॥ २२॥ य एवं वेत्ति पुरुषं प्रकृतिं च गुणैस्सह। सर्व्वथा वर्त्तमानोपि न स भूयोभिजायते॥ २३॥ ध्यानेनात्मनि पश्यन्ति के चिदात्मानमात्मना। अ-

सत्वरजस्तमोगुणैस्तादात्म्येन सङ्ग एवेति तत्रापि सद्योनयः सात्विका देवाद्यास्तथा ऽसद्योनयस्तामसत्वात्पश्वाद्याः एवं सदसद्योनयो विमिश्रत्वादुभयगुणवत्त्वेन मनुष्याद्यास्तत्र तु सदसद्योनिषु जन्मादिना सङ्गोस्येति बोध्यम् ॥ २१ ॥ ननु किन्तर्ह्यसङ्गोह्ययं पुरुष इत्यादिश्रुतिवेद्यं शिवमद्वैतन्तुरीयम्ब्रह्मेत्याह । उपद्रष्टेति। तत्रैवंसति यथा ऋत्विग्यजमानेषु यज्ञकर्मव्यापृतेषु सत्सु समीपस्थो द्रष्टा न तु कर्त्ता ऽसङ्गो ह्ययं पुरुष इत्यादिश्रुतेः। एवं साक्षितया स्वयमप्रवृत्तोपि प्रवृत्त इव सन्निधिमात्रेण तदनुकूलत्वादनुमन्ता तथा स्वसत्तया सर्वाधिष्ठानत्वेन भर्त्ता एवं जीवेश्वरयोर्भोक्तृत्वप्रकाशकत्वाद्भोक्ता स्वतन्त्रत्वाच्च महेश्वर इत्युत्तमः पुरुषस्त्वन्य इत्यादावपि वक्ष्यते ॥ २२ ॥ तदेवं यद्दं ज्ञात्वामृतमश्नुतइत्युक्तमप्युपसंहरति । य एवमिति । तत्रैवंसत्याकाशादपि विस्तीर्णश्शुद्धः सूक्ष्मोव्ययश्शिव इत्यादिस्मृत्या य एवमुक्तप्रकारेण पुरुषं सदाशिवन्तुरीयम्वेत्ति साक्षात्करोति स सर्वथा स्वेच्छया वर्त्तमानोपि न जन्मभाग्भवेदिति परमार्थः ॥ २३ ॥ अत्रात्मदर्शने साधनविकल्पानप्यधिकारिभेदेनाह । ध्यानेनेति । तत्र तावत्के चिद्ध्यानेन श्रवणमनननिदिध्यासनशब्दितेनात्मनि शुद्धान्तःकरणे सत्यात्मना जीवात्मनात्मानं

---

परमार्थ इति। अत एव यो वैष्णवस्सोपि च योगकाले शक्तिस्वरूपेण विचिन्त्य विष्णुं शिवात्मके धामनि योजयेत्स्यादतश्चिदानन्दमयो हि भक्त इत्यादिस्मृत्यापि शिवज्ञानिनाम्पुनस्संसरणाभावो महाभारते ऽन्यत्रापि दर्शितः। तथया। ये सन्न्यासाः परं स्थानं ज्ञानयोगरता नराः। न तेषाम्पुनरावृत्तिर्घोरे संसारमण्डलेत्यादि परमार्थत्वेन द्रष्टव्यम् ॥ २३ ॥ पश्यन्तीति । ननु कथन्ते पश्यन्तीति चेच्छृणु, तथथा। यद्ब्रह्म नित्यं विरजं सनातनं अतीत-

न्ये साङ्ख्येन योगेन कर्मयोगेन चापरे ।
॥ २४ ॥ अन्ये त्वेवमजानन्तश्श्रुत्वान्येभ्य
उपासते । तेऽपि चातितरन्त्येव मृत्युं श्रुति-
परायणाः ॥ २५ ॥ यावत्संजायते किञ्चि-
त्सत्त्वं स्थावरजङ्गमम् । क्षेत्रक्षेत्रज्ञसंयोगात्त-
द्विद्धि भरतर्षभ ॥ २६ ॥ समं सर्वेषु भूतेषु
तिष्ठन्तम्परमेश्वरम् । विनश्यत्स्वविनश्यन्तं

यथोक्तमीश्वरं पश्यन्ति साक्षात्कुर्वन्तीत्यर्थः । एवमन्ये साङ्ख्येन यमनियमाद्य-ष्टाङ्गयोगात्मकेन ज्ञानेन तथा परे तु सन्ध्या स्नानं जपो होम इत्यादिषट्कर्मणा देवाराधनेन पूजाकोटिसमं स्तोत्रमित्यादिक्रमेण यथायथा प्रत्यगवस्थितं मनस्त-थातथा मुञ्चति बाह्यवासनेति स्मृतिन्यायेन च पश्यन्तीत्यवधार्यम् ॥ २४ ॥ ननु शास्त्रानभिज्ञत्वेनैतैरुपायैर्ज्ञातुमशक्तश्चेत्तदा तदर्थमप्युपायमाह । अन्ये त्वे-वमिति । तथा सत्येवं क्रममजानन्तोऽप्याचार्येभ्योऽन्येभ्यः कारुणिकेभ्यश्श्रवणादि-प्रकारं श्रुत्वेदन्तत्त्वमुपासते चेत्तेऽपि श्रुतिपरायणा मृत्युमतिशयेन तरन्त्येवेत्यर्थः॥२५॥ तत्र तु संसृतिबन्धस्याविद्यात्मकत्वात्तन्मोक्षस्यावश्यकत्वे सत्याह । यावदिति । तत्रैवंसति सदसद्योनिजन्मास्वित्येतत्प्रागुक्तं क्षेत्रक्षेत्रज्ञसंयोगादेव गुणसङ्गाद्यावत्कि-मपि स्थावरजङ्गमं वस्तु जायते तावत्सर्वमपि हे भरतर्षभ त्वमशिवाज्ञाननिमि-त्तमेवेत्यवधार्यम् ॥ २६ ॥ एवमविद्यात्मकं संसृतिबन्धनमुक्त्वा तन्निवृत्त्यर्थिका-न्विद्यामप्याह । सममिति । एवंसति सर्वेषु भूतेषु विनश्यत्स्वप्यविनश्यद्भावेन ति-

---

पोमङ्गलमौनसंयमैस्समाधिना बिभ्रति हार्थदृष्टये यच्चेदमादर्श इवावभास-तइत्यादिरीत्या पश्यन्तीत्यर्थः ॥ २४ ॥ तरन्त्येवेति । नानुध्यायेद्बहूञ्छब्दा-न्वाचो विग्लापनन्तदित्यादिबृहदारण्यकश्रुतेः एवमात्मानमेव विजानीयात्सर्व-भूतगुहाशयं श्लोकेन यदि वार्द्धेन चोपन्तस्य प्रयोजनमित्यादिस्मृतेश्चान्यो-पदेशादपि विना शास्त्रं ध्यात्वात्मानन्तरन्तीत्यर्थः ॥ २५ ॥ अवधार्यमिति । इह चेदवेदीदथ सत्यमस्ति न चेदवेदीन्महती विनष्टिरित्यादिश्रुतेश्शिवज्ञा-नस्यावश्यकत्वादवधार्यमित्यर्थः॥२६॥ विद्यामपीति । सा च शास्त्रसज्जनसम्पर्का

य: पश्यति स पश्यति ॥ २७ ॥ समम्पश्यन्हि सर्व्वत्र समवस्थितमीश्वरम् । न हिनस्त्यात्मनात्मानन्ततो याति पराङ्गतिम् ॥ २८ ॥ प्रकृत्यैव च कर्म्माणि क्रियमाणानि सर्व्वशः । यः पश्यति तथात्मानमकर्त्तारं स पश्यति ॥ २९ ॥ यदा भूतपृथग्भावमेकस्थमनुपश्यति । तत एव च विस्तारं ब्रह्म सम्प-

ष्ठन्तमात्मानमविनाशिनं शिवम्परमेश्वरमात्मा नदी संयमतोयपूर्णेत्यादिस्मृतिन्यायेन यः पश्यति स एव विज्ञानचक्षुष्मत्वात्पश्यत्यन्यथा त्वनृतम्पश्यतीति भावः ॥२७॥ अथैतदात्मदर्शनम्फलेनाप्युपपादयन्पुनराह । सममिति । तत्रैवं सत्याकाशादपि विस्तीर्ण इत्याद्युक्तरीकथा सर्वत्र समवास्थितमीश्वरं यः पश्यति स चैवंवित्पुरुषो यस्तिष्ठति स परां जन्ममरणादिसंसृतिविवर्जिताङ्गतिं यातीत्यर्थः । न त्वात्मनात्मानं हिनस्ति योन्यथाकृतमात्मानमिति श्रुतेः असूर्या नामेति श्रुतेश्चेत्यनेकशो विवेक्तव्यम् ॥ २८ ॥ ननु च कथन्तमात्मानं जनो द्रक्ष्यतीत्याह । प्रकृत्यैवेति । एवंसति यदि देहम्पृथक् कृत्य चिति विश्राम्य तिष्ठतीतिस्मृतिन्यायेन यस्तमात्मानमकर्त्तारम्पश्यति स एव क्रियमाणानि कर्माणि सर्वशः प्रकृत्यैव कृत्वा पश्यतीत्यर्थः॥२९॥ ननु कथं देहात्पृथग्भावेनात्मानम्पश्यन्नपि संसृतिजातञ्च पश्यतीत्याह । यदेति । तथा च यथोक्तरीत्या देहात्पृथग्भावेन यदा भूतपृथग्भावमेकस्थश्चिदम्बरस्थमनुपश्यति तत एव च विस्तारं सर्वगम्परम्ब्रह्म निष्कलमेकीभावेन सम्पद्यतइत्य-

---

विचारो ऽसङ्गभावना । समता स्वच्छता सौम्या सप्तधा भूमिका मतेत्यादिसप्तभूमिकाक्रमेण प्राप्यतइति तथात्मानं यः पश्यति स एव पश्यतीत्यर्थः ॥ २७ ॥ श्रुतेरिति । तत्रैव स्मृतिश्च, वरं शरावहस्तस्य चाण्डालागारवीथिषु, भिक्षार्थमटनं राम न मौर्ख्यं हत जीवितमित्यादि बहुधो द्रष्टव्यम् ॥ २८ ॥ प्रकृत्यैव कृत्वेति । तद्यथा, आत्मानं रथिनं विद्धि शरीरं रथमेव च, इन्द्रियाणि हयान्याहुर्विषयांस्तेषु गोचरान् इत्यादिरीत्या पश्यन्नप्यतःपरम्परात्मानं सर्वसाक्षिणं यो-

द्यते परम् ॥ ३० ॥ अनादित्वान्निर्गुणत्वा-
त्परमात्मायमव्ययः । शरीरस्थोपि कौन्तेय
न करोति न लिप्यते ॥ ३१ ॥ यथा सर्व्वगतं
सौक्ष्म्यादाकाशं नोपलिप्यते । सर्व्वत्राव-
स्थितो देहे तथात्मा नोपलिप्यते ॥ ३२ ॥
यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।
क्षेत्रं क्षेत्री यथा कृत्स्नं प्रकाशयति भार-
त ॥ ३३ ॥ क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षु-

र्थः ॥ ३० ॥ अथैकमेवाद्वितीयमिति श्रुतिस्थपदत्रयेण सिद्धमर्थम्पूर्वोत्तराभ्यां नि-र्द्धारयति । अनादित्वादिति । तत्र तावदेकस्थमिति पूर्वोक्तेन सजातीयः एवम-नादित्वादित्यनेन त्विहोक्तेन विजातीयः निर्गुणत्वादित्यनेन तु स्वगतश्च भेदः परमशिवैकतादात्म्येन निरस्त इत्यतो हे कौन्तेय शरीरस्थोपि स ब्रह्मभूतो न क-रोति न वा कर्मभिर्लिप्यतइत्यवधार्यम् ॥ ३१ ॥ अत्रैवार्थे दृष्टान्तमप्याह । य-थेति । तत्रैवंसति यथा सर्वगतमप्याकाशं सौक्ष्म्यान्नोपलिप्यते तथा शरीरस्थोप्य-यमात्मा तत्कर्मणा नोपलिप्यतइत्यर्थः ॥ ३२ ॥ तदेवं न केवलमाकाशवन्निरवयव-मेव किन्तु तज्ज्ञानरूपत्वेन सत्यम्प्रकाशकमपीति पुनराह । यथेति । एवन्तर्हि यथा रविरेक एव लोकमिमं कृत्स्नं प्रकाशयति न च प्रकाश्यधर्मैर्न्न वा तद्भेदाद्भिद्यते तथा क्षेत्री नाम क्षेत्रज्ञोपि समष्टिरूपेणैक एव हे भारत सर्वभूतान्तरात्मा न लि-प्यते कथन्तर्हि ततः परात्मा शिवो लिप्येद्वा भिद्येद्वेत्याशयः ॥ ३३ ॥ नन्वस्त्वे-

---

गजधर्मैर्वाकर्तारम्पश्यतीत्याशयः ॥ २९ ॥ ३० ॥ निरस्त इति । अत एव योन्यां देवतामुपास्ते ऽन्योसावन्योहमस्मीति न स वेद पशुरेव च स देवानामित्या-दिबृहदारण्यकश्रुत्यापि त्रिविधभेदनिरस्ताद्वैतसिद्धिरित्यर्थः । नन्वेवं यद्यद्वैत-भावस्तर्हि कथं सेव्यसेवकभावोपपत्तिरिति चेच्छृणु, तद्यथा । देहभावेन दासोहं जीवभावे तदंशकः, स्वात्मभावे तदेवाहमिति जानीहि राघवेत्यादिरीत्या वि-वेक्तव्यम् ॥ ३१ ॥ आकाशमिति । तथा चात्रार्थे श्रुतिरपि, तद्यथा । एवमा-काशस्याप्याकाशो यदेतद्भाति मण्डलमित्यखण्डं मण्डलाकारमित्यादिस्मृति-

षा। भूतप्रकृतिमोक्षञ्च ये विदुर्यान्ति ते परम्॥ ३४॥ इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसम्वादे क्षेत्रक्षेत्रज्ञविभागयोगो नाम त्रयोदशोध्यायः॥ * ॥ श्रीकृष्ण उवाच॥ परं भूयः प्रवक्ष्यामि ज्ञानिनां ज्ञानमुत्तमम्। यज्ज्ञात्वा मुनयस्सर्व्वे परां सिद्धिमितो गताः॥ १॥ इदं ज्ञानमुपाश्रित्य मम सा-

षम्परन्तु क्षेत्रक्षेत्रज्ञयोः परतरम्परात्मानं शिवमद्वैतन्तुरीयं कथम्विजानीयामित्याह। क्षेत्रेति। तथाचान्ततः क्षेत्रक्षेत्रज्ञयोरन्तरमेक एवं हि भूतात्मेत्यादिश्रुतिन्यायेन ये विदुस्तएव भूतप्रकृतिं क्षेत्रक्षेत्रज्ञयोस्संयोगजनिकां तन्मोक्षञ्च विदुरिति त एव तत्परम्पदं यान्तीति परमार्थः॥ ३४॥ इति श्रीमत्पदवाक्यप्रमाणयोगिवर्यविप्रराजेन्द्रविरचिते तत्वैकदर्शनभाष्ये क्षेत्रक्षेत्रज्ञनिरूपणं नाम त्रयोदशोध्यायः॥ * ॥ गुणत्रयमयं सर्वं प्रकृतिश्च गुणात्मिका। ततोतीतम्भवेद्ब्रह्म वेदितव्यञ्चतुर्दशे॥ अथ पूर्वेष्वध्यायेष्वसकृदुक्तमपि यज्ज्ञानं ज्ञात्वानुष्ठाय च मुनयो मननशीलाः परां मतिमागतास्तामप्याह। परमिति। तत्र तावद् ज्ञायतेऽनेनेति ज्ञानन्तदपि ज्ञानानामपि परं श्रेष्ठमुत्तमञ्च प्रवक्ष्यामीत्यर्थः। तत्र तावद्यद् ज्ञात्वा मुनयस्सर्वे परां कैवल्यप्रदां सिद्धिमितस्संसारसागरतो गताः प्राप्ता इत्यर्थः॥ १॥ तत्र

---

रपि श्रुत्यनुग्राहिकेत्यवधेयम्॥ ३२॥ ३३॥ न्यायेनेति। ननु तर्काप्रतिष्ठानादितिसूत्रपदेन न्यायशास्त्रस्याद्वैतेनाविकल्पेन निरासादिह बहुस्थलेषु न्यायेनेत्युक्तमिति चेच्छृणु। दुस्तर्कात्सुविरम्यतां श्रुतिमतस्तर्कोनुसन्धीयतामित्यादिस्मृत्या सुतर्कस्येह श्रुतिस्मृत्यनुकूलस्य न्यायशब्देन ग्रहणान्न चातिरित्यास्तां विस्तरः॥ ४॥ इति श्रीमद्योगिवर्यविप्रराजेन्द्रात्मजविरचिते भाष्यप्रदीपे त्रयोदशोध्यायः॥ * ॥ ननु यदि बुद्धिर्मनोहच्चित्तञ्चेत्यादिना पञ्चविंशतितत्वात्मकमेव साधनजातं तर्हि कथं तदतीतोपायैस्तदतो भविष्यतीत्याह। ततोतीतं भवेदिति। तद्यथा, देहेन्द्रियादिसङ्घातं लब्ध्वा सत्साधनैर्बुधः, सद्गुणैरितरांस्त्यक्त्वा

**धर्म्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥ २ ॥ मम योनिर्म्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहम् । सम्भवस्सर्व्वभूतानान्ततो भवति भारत ॥ ३ ॥ सर्व्वयोनिषु कौन्तेय मूर्त्तयस्सम्भवन्ति याः । तासां ब्र-**

तस्याः सिद्धेर्विष्णुधर्मतादात्म्यैनैकान्तिकत्वं दर्शयति । इदमिति । तत्रैवं सति यथोक्तज्ञानविज्ञानसाधनमुपाश्रित्यानुष्ठाय च शिवस्यार्द्धे स्थिता गौरी तदर्द्धे हरिरिष्यते । तदर्द्धार्द्धेन संयुक्तो हरिरर्द्धशरीरभागित्यादिस्मृतिन्यायेन मम विष्णोस्साधर्म्यं परमाशिवत्वमागताः प्राप्तास्सन्तस्सर्गेऽपि सृष्टावपि नोपजायन्ते तथा सर्वग्रासो महादेवस्सर्वाण्डान्यखिलं जगदिति महाप्रलयेऽपि न व्यथन्तीत्यर्थः ॥ २ ॥ तदेवम्पूर्वोक्तज्ञानोपलब्ध्यर्थमप्यारोपेण सर्वभूतोत्पत्तिमपि दर्शयन्नाह । ममेति । तथा चेह यच्च किञ्च जगत्यत्रेत्यादिश्रुत्या मायारूपी जनार्दन इत्यादिकूर्मस्मृत्या च मम विष्णोरर्द्धचन्द्रात्मिकाया मूलप्रकृत्याख्याया या योनिर्बिन्द्वात्मिका या कार्या प्रकृतिस्तस्यामव्यक्ता प्रकृतिर्देवी ब्रह्मविज्ञानमादित इत्यादिस्मृत्या महति जगद्बृंहणकर्तृत्वाद्ब्रह्माणि नाम ब्रह्माख्यायां योनौ गर्भं सर्वभूतकारणमेकोऽहम्बहु स्यामितीक्षणरूपं संकल्पं दधाम्यहमित्यतस्सर्वभूतानां सम्भवो भवतीति भावः ॥ ३ ॥ ननु कथं सर्वभूतानां ततः सम्भव इत्याह । सर्वयोनिष्विति । तत्र तावद्धे कौन्तेय देवपितृमनुष्यपशुमृगादिसर्वयोनिषु या मूर्तयस्तासां मूर्त्तीनां तत्तत्कारणभावापन्नं

---

गुणातीतो भवेद्ध्रुवमित्याद्यवधार्यम् ॥ १ ॥ विष्णोस्साधर्म्यमिति । अत एव कूर्मपुराणे, दृष्ट्वा सिंहासनासीनं देव्या नारायणेन च । प्रणम्य देवमीशानमपृच्छन्त्यो वराङ्गनाः । कस्त्वम्विभ्राजसे कान्त्या केयं बाला रविप्रभा, कोन्वयं भाति पुरुषः पङ्कजायतलोचन इत्यादिप्रश्नोपन्यासेन कासाञ्चिद्द्वक्तन्यानां विष्णोस्साधर्म्यं परमशिवस्य स्पष्टमेव दर्शितम् ॥ २ ॥ विष्णोरिति । तत्र तावद्विष्णोरर्द्धचन्द्रात्मकप्रकृतिरूपत्वञ्च सत्वं रजस्तमो विष्णो जगदण्डं जनार्द्दन, तस्य कारणमाहुस्त्वां साङ्ख्यास्तत्त्वविदो हरे इत्यादिना हरिवंशएवोक्तत्वादिति भावः ॥ ३ ॥ पुम्भाविनेति । तथा च श्रुतिः, तद्यथा, एकापि शक्तिः परमेश्वरस्य भिन्ना चतुर्धा व्यवहारकाले । भोग्ये भवानी पुरुषे च विष्णुः क्रोधे च काली समरे च दुर्ग-

ह्ममहद्योनिरहम्बीजप्रदः पिता ॥ ४ ॥ सत्वं
रजस्तम इति गुणाः प्रकृतिसंभवाः । निब-
घ्नन्ति महाबाहो देहे देहिनमव्ययम् ॥ ५ ॥
तत्र सत्वं निर्मलत्वात्प्रकाशकमनामय-
म् । सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ
॥ ६ ॥ रजो रागात्मकम्विद्धि तृष्णासङ्गसमु-
द्भवम् । तन्निबध्नाति कौन्तेय कर्म्मसङ्गेन
देहिनम् ॥ ७ ॥ तमस्त्वज्ञानजं विद्धि मोहनं
सर्वदेहिनाम् । प्रमादालस्यनिद्राभिस्तन्नि-

महद्ब्रह्म योनिर्या भिन्द्वात्मिका प्रकृतिस्तस्यामहमेवमेवार्द्धचन्द्रात्मकप्रकृतिरू-
पः पुम्भावेन विष्णुः सन्बीजप्रदः पितेति भावः ॥ ४ ॥ ननु कथं तर्हि देहि-
नमव्ययम्प्रकृतिर्न्निबध्नातीत्याह । सत्वमिति । तत्र तावत्सत्वरजस्तमसां गुणानां
साम्यावस्था प्रकृतिर्माया द्विविधा यथोक्ता ततश्च प्रकृतिसम्भवाः सत्वादयो गुणा
देहेस्मिन्देहिनं जीवं निबध्नन्तीत्यर्थः ॥ ५ ॥ ननु तत्र कोस्ति गुणः केन च सङ्गेन
निबध्नातीत्याह । तत्रेति । तत्र तावत्तेषु गुणेषु मध्ये सत्वं निर्मलत्वात्प्रकाशकं
चिद्बिम्बग्रहणयोग्यत्वादनामयञ्चेति सुखसङ्गेन च बध्नातीत्यर्थः ॥ ६ ॥ एवमपर-
स्यापि बन्धनप्रकारमाह । रज इति । तत्रैवंसति यतस्तृष्णासङ्गसमुद्भवमतो रजो
रागात्मकम्विद्धि ततश्च तं देहिनं हे कौन्तेय रजसः प्रवृत्तिहेतुत्वात्कर्मसङ्गेन नि-
बध्नातीत्यर्थः ॥ ७ ॥ एवन्तदुभयोर्विरोधि तृतीयमप्याह । तमस्त्विति । तत्रेत्थं

---

त्यादिना सष्टमेव पुम्भावस्योक्तत्वादिति भावः ॥ ४ ॥ सत्वादय इति । तत्र ता-
वत्सत्वाद्रजो भूद्रजसस्तमस्तेभ्यो ऽभवज्जगदित्यादिरीत्या देहादिरूपेण देहिनं
निबध्नातीत्याशयः ॥ ५ ॥ निबध्नातीति । तत्र विमलसत्वन्तु चित्ताख्यन्तद्योग-
धर्मेण निर्गुणसाधकत्वात्संसृतिबन्धनिवर्तकमेव भवतीति विवेक्तव्यम् ।
॥ ६ ॥ सर्वदेहिनामिति । एवंसति सत्वाज्जाग्रद्रजस्स्वप्नस्सुषुप्तिस्तमसो भवेन्नि-
द्राप्रमादिभिर्जीवो निबद्धो नाप्नुते पदमित्यादिरीत्या देहिनं तमस्तु विग्र-

बध्नाति भारत ॥ ८ ॥ सत्वं सुखे संजयति रजः कर्मणि भारत । ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत ॥ ९ ॥ रजस्तमश्चाभिभूय सत्वं भवति भारत । रजस्सत्वं तमश्चैव तमस्सत्वं रजस्तथा ॥ १० ॥ सर्व्वद्वारेषु देहेऽस्मिन्प्रकाश उपजायते । ज्ञानं यदा तदा विद्याद्विवृद्धं सत्वमित्युत ॥ ११ ॥ लोभः प्रवृत्तिरारम्भः कर्म्मणामशमः स्पृहा । रजस्येतानि जाय-

सति यतः सर्वदेहिनां तमस्ततो ऽज्ञानजन्तत्तमो विद्धीति तत्तमः प्रमादालस्यनिद्राभिर्देहिनं निबध्नातीत्यर्थः ॥ ८ ॥ अथोक्तानां सत्वादिगुणानां मध्ये कस्मिन्कार्ये कस्य गुणस्योत्कर्षत्वमित्याह । सत्वमिति । तत्र तावत्सत्वं दुःखकारणमभिभूय सुखे संजयति संयोजयतीत्यर्थः । एवं सत्वमभिभूय रजः कर्मणि सञ्जयति तथा तमस्तु देहिनो ज्ञानमावृत्य प्रमादालस्यादौ सञ्जयतीत्यर्थः ॥ ९ ॥ ननु परस्पराङ्गाङ्गिभावेनोक्तं कार्यं गुणाः कथं कुर्वन्तीत्याह । रजस्तम इति । तथा चेह रजस्तमश्च युगपदुभावपि गुणावभिभूय सत्वं भवति वर्द्धते एवं रजोपि सत्वं तमश्चेति गुणद्वयमभिभूय वर्द्धते तथा तमोपि सत्वं रजश्चेति गुणद्वयमभिभूय वर्द्धतइत्यवधेयम् ॥ १० ॥ इदानीन्तूद्भूतानान्तेषां लिङ्गान्यप्याह । सर्वद्वारेष्विति । तथा चास्मिन्भोगायतने देहे सर्वेष्वपि श्रोत्रादीन्द्रियद्वारेषु शब्दादिविषयोपलब्धिसाधनेषु यद् ज्ञानमुपजायते तदनेन शब्दादिविषयकज्ञानाख्यप्रकाशेन लिङ्गेन प्रकाशात्मकं सत्वं विवृद्धमुद्भूतमिति विद्याद्विजानीयादित्यर्थः ॥ ११ ॥ एवं रजस्यपि प्रवृद्धे वृत्तान्तमाह । लोभ इति । तत्रैवंसति रजसि प्रवृद्धे सति सत्यपि धने धनाकाङ्क्षा गार्ध्यं लोभो

---

थेण निबध्नातीत्यर्थः ॥ ८ ॥ कस्मिन्कार्यइति । तद्यथा, सत्वादिगुणवैषम्यात्कार्यवैषम्यमिष्यते । सङ्घातस्य परार्थत्वात्पुंसो भोक्तृत्वमिष्यतइत्याद्यवधार्यम् ॥ ९ ॥ ॥ १० ॥ सत्वं विवृद्धमिति । तद्यथा, सत्वानुरूपा यागस्य शास्त्रे लोके विशारदः तस्माद्विशेषतस्सत्वाकैवल्यं योगतः सर्वज्ञत्वादिसम्भूत्या विमलसत्वेन चेतसा कैवल्यमपीत्यनवद्यम् ॥ ११ ॥ मध्यायेनेति । एवंमतीदमनर्थसाधकमपीति

न्ते विवृद्धे भरतर्षभ ॥ १२ ॥ अप्रकाशो-
प्रवृत्तिश्च प्रमादो मोह एव च। तमस्येतानि
जायन्ते विवृद्धे कुरुनन्दन ॥ १३ ॥ यदा
सत्वे प्रवृद्धे तु प्रलयं याति देहभृत्। तदो-
त्तमविदां लोकानमलान्प्रतिपद्यते ॥ १४ ॥
रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते। त-

नित्यम्प्रयत्नेन प्रवृत्तिरारम्भश्च। एवमिदं कृत्वेदं करिष्यामीति संकल्पप्रवाहः कर्मणामशमः तथा न्यायेनाप्युच्चावचेषु धनेषूत्पित्सा स्पृहेत्यादिरजसि रागात्मके विवृद्धे सत्येतानि रागात्मकानि लिङ्गानि जायन्तइत्यर्थः ॥ १२ ॥ एवन्तमस्यपि प्रवृद्धे वृत्तान्तमाह। अप्रकाश इति। तत्रैवमप्रकाशस्तूपदेशेपि सर्वथा बोधायोग्यत्वम्। एवमप्रवृत्तिर्न्नाम वर्णाश्रमधर्मेषु सत्यप्युपदेशे प्रवृत्त्यभावत्वम्। तथा प्रमादस्तु तत्कालावच्छेदेन कर्त्तव्यत्वस्यानुसन्धानाभावः एवं मोहस्तु निद्रा कर्त्तव्यकर्मणाम्विपर्ययो वेत्यादि तमसि प्रवृद्धे त्वेतानि लिङ्गानि जायन्ते हे कुरुनन्दनेत्यर्थः ॥ १३ ॥ अथेदानीन्तु पञ्चत्वे प्राप्ते सत्वादीनाम्विवृद्धानाम्फलविशेषमप्याह। यदेति। तत्रैवंसति यदा सत्वे प्रवृद्धे देहभृद्देहाभिमानी जीवः प्रलयं याति तदोत्तमविदां हिरण्यगर्भादीनाममलान् लोकान्यथा सुकृततारतम्येन प्रतिपद्यतइत्यर्थः ॥ १४ ॥ एवमेव रजसि तमसि च प्रवृद्धे मृत्योः फलमाह। रजसीति। तथासति तदानीं रजसि प्रवृद्धे तु प्रलयङ्गत्वा कर्मसङ्गिषु मनुष्ययोनिषु जायते एवन्तमसि प्रवृद्धे प्रलीनस्तु मूढयोनिषु पश्वादिषु यथायथं

---

धर्मनिवन्धेप्युक्तम्। तद्यथा। अन्यायोपार्जितं वित्तं दशवर्षाणि तिष्ठति। प्राप्ते त्वेकादशे वर्षे समूलं च विनश्यतीत्यादि द्रष्टव्यम् ॥ १२ ॥ विपर्ययो वेति। तद्यथा, अपूज्यपूजने चैव पूज्यस्य वाप्यपूजने, सद्यो देवकृतस्तत्र दण्डः पतति दारुण इत्यादिदत्त्वयं प्रथमनादवधार्यमित्यधिकमन्यत्र विस्तरः॥१३॥ तारतम्येनेति। तत्रेत्थं सति भूर्लोके वै भुवर्लोके स्वर्लोके च यथायथं, जनो लोके तपोलोके सत्यलोके यथाक्रममित्यादिरीत्या विश्रुतानमलान् लोकान्यथा सुकृततारतम्येन गच्छन्तीत्यधिकमन्यत्र विस्तरः ॥ १४ ॥ तथा रजसि तमसि च प्रवृद्धे सति पञ्च-

था प्रलीनस्तमसि मूढयोनिषु जायते ॥ १५ ॥ कर्मणस्सुकृतस्याहुस्सात्विकं निर्मलम्फलम् । रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥ १६ ॥ सत्वात्संजायते ज्ञानं रजसो लोभ एव च । प्रमादमोहौ तमसो भवतो ऽज्ञानमेव च ॥ १७ ॥ ऊर्ध्वङ्गच्छन्ति सत्वस्थाः मध्ये तिष्ठन्ति राजसाः । जघन्य-

कर्मानुगुण्येनोच्चावचेषु जायतइति विवेकः ॥ १९ ॥ इदानीन्तु सत्वादीनाम्विचित्रफलतां दर्शयति । कर्मण इति । तत्रैवंसति सुकृतस्य कर्मणो धर्माख्यस्य सात्विकं निर्मलं फलमाहुरित्यर्थः । एवं रजसो राजसस्य तु कर्मणः पापामिश्रस्य पुण्यस्य राजसं दुःखबहुलमल्पं सुखन् । तथा तमसस्तामसस्य त्वज्ञानजन्यत्वाद्बहुतरं दुःखमेवाहुरित्याशयः ॥ १६ ॥ नन्वेतादृशफलवैचित्र्ये को हेतुरित्याह । सत्वादिति । तत्र तावत्सात्विकस्य कर्मणः प्रकाशबहुलं सुखज्ञानरूपं फलं सत्वात्सञ्जायते एवं रजसो लोभो ऽभिलाषविशेषो गार्ध्यलक्षणो जायते तथा प्रमादमोहौ तमसः सकाशाद्भवतो जायेते अथ च वृथायुःक्षणःक्षिपेदित्येवं कर्मसु प्रवृत्तिशैथिल्येनाज्ञानम्प्रवृत्त्यभावश्चेत्याशयः ॥ १७ ॥ इदानीन्तु सत्वादिवृत्त्या कर्मकर्तॄणां स्पष्टमेव फलं दर्शयति । ऊर्ध्वमिति । तत्र तावत्सत्वस्थाः सत्ववृत्त्या कर्म कुर्वन्तः सत्यलोकपर्यन्तमूर्ध्वङ्गच्छन्ति नाम ते ज्ञानकर्मतारतम्येन देव-

---

त्वस्य फलमाह । एवमेवेति । तस्मात्मनुजैस्सत्ववृत्त्यैव वर्तितव्यमित्याशयः॥१५॥ निर्मलमिति । अत एव सगेरजयं जरसोपदिष्टमदेहबन्धाय पुनर्बन्धेत्यादिरीत्या मलिने कर्मणि नैव प्रीतिङ्कुर्यात् अन्यथा पूर्वभ्यासेनैवान्यकालेपि तत्रैव प्रवृत्त्या तज्जन्मभागिनो भविष्यन्तीत्यवधेयम् ॥ १६ ॥ सत्वात्संजायतइति । तस्मात्सात्विकैस्सह संसर्गेण सात्विकबुद्धिमेव वर्धयेदित्युचितम् । तद्यथा ख्यायिकायोक्तमवधार्यम् । अहं मुनीनां वचनं शृणोमि शृणोति राजन्स गवाशिनावचः, नैवास्य दोषो न च मद्गुणो वा संसर्गजा दोषगुणा भवन्तीत्यादि द्रष्टव्यम् ॥ १९ ॥ ज्ञानकर्मतारतम्येनेति । तत्रैवंसति शिवो देवो द्विजो ब्रह्मा

गुणवृत्तिस्था अधो गच्छन्ति तामसाः ॥१८॥
नान्यं गुणेभ्यः कर्तारं यदा द्रष्टानुपश्य-
ति। गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छ-
ति ॥ १९ ॥ गुणानेतानतीत्य त्रीन्देही देहस-
मुद्भवान्। जन्ममृत्युजरादुःखैर्विमुक्तोऽमृत-
मश्नुते ॥ २० ॥ अर्जुन उवाच। कैर्लिङ्गै-

लोकेषूत्पद्यन्ते तथैव राजसा रजोवृत्त्या ऽतिलोभेन कर्मनिरताजघन्यगुण-वृत्तिस्थाः कर्मतारतम्येन मध्ये तिष्ठन्तीत्यर्थः। एवमेव तामसास्तमोवृत्त्या कर्म कुर्वन्तः पश्वादिष्वधो वा कर्मतारतम्येन गच्छन्तीत्यर्थः ॥ १८ ॥ अथेदानीन्तु पूर्वोक्तगुणेभ्यः कथं मोक्षणं किम्वा तस्य लक्षणमित्याह। नान्यमिति। एवंसति यदि देहं पृथक्कृत्य चिति विश्राम्य तिष्ठतीति स्मृतिन्यायेन यदा द्रष्टा ऽऽत्मविचारकुशलो देहेन्द्रियादितत्तदवस्थापन्नेभ्यो गुणेभ्यो नान्यङ्कर्त्तारमनुपश्यति तदा तु त्रिविधगुणेभ्यः पराञ्चिदम्बरात्मानं पश्यति स च तदुत्तरं मद्भावम्मत्परम्पदङ्गच्छतीत्यर्थः ॥ १९ ॥ नन्वेतावतापि कथम्परममृताख्यं शिवङ्गच्छतीत्याह। गुणानिति। तत्रैवं सत्येतान्मायात्मकांस्त्रीन्सत्वरजस्तमोनाम्नो देहसमुद्भवान्देहोत्पत्तिबीजभूतानतीत्य जीवन्नेव शिवैकतत्त्वज्ञानेन जन्ममृत्युजरादुःखैर्विमुक्तः सन्मद्भावं साम्बशिवङ्गाश्नुतइत्यवधार्यम् ॥ २० ॥ ननु कथं जानीमो गुणातीतोयम्पुरुष इति तस्य लक्षणमप्यर्जुनः पृच्छति। कैरिति। एवं सति हे प्रभो सत्वरजस्त-

---

क्षत्रियस्तु हरिः स्मृतः, इन्द्रो वैश्यस्तथैवान्ये यक्षाद्याः शूद्रजातय इत्यादिभारतस्मृत्या यथायथं, ज्ञानकर्मानुरूपेण तारतम्येन देवलोकेष्वप्युत्पद्यन्त इत्यर्थः॥१८॥ अथ विना शिवप्रसादं हि भ्रान्तिः क्वापि न नश्यतीत्यादिस्कान्दस्मृत्या यदा चर्मवदाकाशमित्यादिश्रुत्या च शिवोपासनाया आवश्यकत्वे स्थिते सत्याह। सत्परम्पदमिति। तद्यथा, पदं यत्परमं विष्णोस्तदेवाखिलदेहिनाम्पदं परममद्वैतं स शिवस्याखविग्रह इत्याद्यवधार्यम् ॥ १९ ॥ अमृताख्यमिति। शृण्वन्ति विश्वे अमृतस्य पुत्रा आये धामानि दिव्यानि तस्थुरित्यादिश्रुतेरिति भावः। शिवैकतत्त्वज्ञानेनेति। तद्यथा, शिवज्ञानसमं ज्ञानं यथा नास्ति श्रुतावित्यादिश्रुतेरि-

**त्रीन् गुणानेतानतीतो भवति प्रभो । किमाचारः कथञ्चैतांस्त्रीन्गुणानतिवर्त्तते ॥ २१ ॥ श्रीकृष्ण उवाच । प्रकाशञ्च प्रवृत्तिञ्च मोहमेव च पाण्डव । न द्वेष्टि सम्प्रवृत्तानि न निवृत्तानि काङ्क्षति ॥ २२ ॥ उदासीनवदासीनो गुणैर्यो न विचाल्यते । गुणा**

भोगुणानेतान्कैर्लिङ्गैरतीतो भवतीति प्रथमः प्रश्नः तथैव क आचारोऽस्येति किमाचारः किं यथेष्टचेष्टः किम्वा कर्मनियन्त्रित इति द्वितीयः प्रश्नः एवं केन प्रकारेणैतांस्त्रीन्गुणानातिक्रम्य वर्त्ततइति गुणातीतत्वोपायः क इति तृतीयः प्रश्न इत्याशयः ॥ २१ ॥ ननु निस्त्रैगुण्यो भवार्ज्जुन इत्यादिलक्षणलक्षितस्य योगिनः कीदृशः समाचार इत्यस्योत्तरमप्याह । प्रकाशमिति । तत्र तावत्समाधितो वा निद्रातश्चोत्थानम्वा न द्वेष्टि किन्तु सर्वं सर्वत्र सर्वदेतिन्यायादुपलभ्यमानतत्त्वेन शारीरकर्मप्रवृत्तिलक्षणं न द्वेष्टि एवमेव मोहनिद्राकृतं व्यावहारिकम्वा प्राप्नुवन्न द्वेष्टि यतः सर्वत्रोपलभ्यमानत्वान्न तन्निवृत्तान्यपि काङ्क्षतीत्यर्थः ॥ २२ ॥ एवमपरमपि तल्लक्षणमाह । उदासीनवदिति । तथा च यथा द्वयोर्विवदमानयोर्यः कस्य चित्पक्षं न भजते तद्वदयमात्मविद्रागद्वेषविमुक्ततया परमशिवानुसन्धानेनासीनो भवति न तु त्रिविधगुणजन्यैर्गुणैर्दोषैर्वा विचाल्यतइत्यर्थः । किन्तु छायाशरीरे प्रतिबिम्बगात्रे यत्स्वप्नदेहे हृदि कल्पिताङ्ग इत्यादिस्मृतिन्यायेन गुणा एव देहेन्द्रियविषयाकारपरिणताः परस्परम्प्रवर्त्तन्तइत्येवं मत्वा योऽवतिष्ठति स च

---

ति भावः ॥ २० ॥ २१ ॥ नन्विह सत्वरजस्तमसां साधारण्येन फलमुक्तान्तदिह विमलसत्वस्य तु निस्त्रैगुण्यप्रयोजकतावच्छेदकीभूतस्यापि फलमाह । तच्च तावदिति । तच्चेत्थं सति निमिषार्द्धं न तिष्ठन्ति वृत्तिम्ब्रह्ममयीम्विना । यथा तिष्ठन्ति ब्रह्माद्यास्सनकाद्याश्शुकादय इत्यादिस्मृत्या सर्वमित्यादिरीत्या सर्वम्भिजानन्न द्वेष्टीत्यादिरर्थः ॥ २२ ॥ गुणैर्दोषैर्वेति । तद्यथा, अहौ वा हारे वा बलवति रिपौ वा सुहृदि वा मणौ वा लोष्टे वा कुसुमशयने वा दृषदि वा, तृणे वा स्त्रैणे वा मम समदृशो यान्तु दिवसाः क्वचित्पुण्यारण्ये शिवशिवशिवेति प्र-

वर्त्तन्त इत्येवं योऽवतिष्ठति नेङ्गते ॥ २३ ॥ समदुःखसुखः स्वस्थः समलोष्टाश्मकाञ्चनः । तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ॥ २४ ॥ मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः । सर्व्वारम्भपरित्यागी गुणातीतस्स उच्यते ॥ २५ ॥ माञ्च यो ऽव्यभिचारेण भक्तियोगेन सेवते । स गुणान्सम-

स्वयं जीवन्मुक्तत्वेन विमुक्तः सन्नेङ्गते न व्याप्रियतइत्यवधेयम् ॥ २३ ॥ एवमपरमप्यार्थिकं तल्लक्षणमाह । समदुःखेति । तत्रैवंसत्यन्तस्त्यागीति स्मृतिन्यायेन समे दुःखे सुखे च यस्य सः यतस्स्वस्था यतश्च सर्वस्य प्रपञ्चजातस्य कल्पितत्वेन समलोष्टाश्मकाञ्चन इत्यर्थः एवन्तुल्ये प्रियाप्रिये सुखदुःखसाधने यस्य सः यतश्च धीरो ध्यानशीलः अत एव च तुल्ये निन्दात्मसंस्तुती यस्य स गुणातीत इत्यर्थः॥२४॥ अथ चापरमपि योगिनो लक्षणमाह । मानापमानयोरिति । एवमिह हर्षविषादजनकयोर्लाभहानिप्रयोजकयोर्मित्रारिपक्षयोश्च तुल्य इत्यर्थः । एवमिदं कृत्वेदं करिष्यामीत्येवंरूपस्य सर्वारम्भस्य यस्तु परित्यागी स एव गुणातीत इत्यर्थः॥२५॥ ननु कथमेतत्तत्त्वोपलब्धिरित्याह । माञ्चेति । तथा च न स्वयं ध्यानतः कश्चित्सर्वज्ञसिद्धिपारग इत्यादिस्मृतिन्यायेन सद्गुरोरावश्यकत्वे स्थिते माञ्च वसत्यद्धा तु सर्वत्रेति स्मृतिन्यायेन वासुदेवाख्यम्पाशुपतं योऽव्यभिचारेण यस्य देवे परा भक्तिर्यथा देवे तथा गुराविति रीत्या भक्तियोगेन सेवते स एव तान्गुणान्समतीत्य

लपत इत्याद्यवधार्यम् ॥२३॥ ध्यानशील इति । तद्यथा, सज्जासनस्थो ऽथ परिव्रजन्वा मुक्तः परिक्षीणवितर्कजालस्संसारबीजक्षयमीक्षमाणस्स्यान्नित्यमुक्तो ऽमृतभागभोगीत्यादिस्मृत्युक्तरीत्या दुग्धगीतामृतं महदित्यत्र प्रतिज्ञातस्यास्मच्छब्दाभिधेयस्य शिवस्य ध्यानशीलस्सन्विहरेदित्यवधेयम् ॥ २४ ॥ २५ ॥ सद्गुरोरावश्यकत्वमिति । तद्यथा, वेदान्ततर्कोक्तिभिरागमैश्च नानाविधैः शास्त्रकदम्बकैश्च । ध्यानादिभिस्साधनैरपि नैव गम्यं चिन्तामणिन्त्वेकगुरुम्प्रियायेत्यादि

तीत्यैतान्ब्रह्मभूयाय कल्पते ॥ २६ ॥ ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च । शाश्वतस्य च धर्म्मस्य सुखस्यैकान्तिकस्य च ॥ २७ ॥ इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसम्वादे गुणत्रयविभागयोगो नाम चतुर्दशोऽध्यायः ॥ * ॥ श्रीकृष्ण उवाच । ऊर्ध्वमूलमधश्शाखमश्वत्थम्प्राहुरव्ययम् । छन्दांसि यस्य

ब्रह्मभूयाय चिदम्बरात्मना शिवत्वाय कल्पतइत्यर्थः ॥ २६ ॥ अत्र हेत्वन्तरमप्युपसंहरन्नाह । ब्रह्मणो हीति । तत्रैवंसति त्वद्विस्तारो यतो देवास्ततो भूतपतिस्त्वहमित्यादिस्मृत्या हि यतो मृत्युक्षयत्वेनामृतशब्दाभिधेयस्याव्ययस्य च परब्रह्मणस्सदाशिवस्याहम्प्रतिष्ठेत्यर्थः । एवन्तत्प्राप्तिसाधनभूतस्य शाश्वतस्यैकान्तिकस्य धर्मस्य दक्षदुहितर्यजनिष्टमूर्त्यामित्यत्रोक्तस्य भस्मत्रिपुण्ड्ररुद्राक्षादिधारणरूपस्य धर्मस्याप्यहम्प्रतिष्ठा प्रवर्तक इति परमार्थः ॥ २७ ॥ इति श्रीमत्पदवाक्यप्रमाणयोगिवर्यविप्रराजेन्द्रविरचिते तत्वैकदर्शनभाष्ये गुणत्रयनिरूपणं नाम चतुर्दशोऽध्यायः ॥ * ॥ परत्वापरभेदेनपुरुषो हि द्विधा मतः । तत्रोत्तमः परः प्रोक्तः प्रोचे पञ्चदशेऽखिलम् ॥ ननु कथन्तदमृतशब्दाभिधेयं परब्रह्म ज्ञातुं शक्यमित्यतोऽध्यारोपापवादन्यायेनात्मानात्मविवेचनमप्याह । ऊर्ध्वमिति । तत्रैवंसत्यूर्ध्वं

---

द्रष्टव्यम् ॥ २६ ॥ प्रतिष्ठेति । अत एव रामेश्वरमाहात्म्ये रामायणेप्युक्तम् । तद्यथा, षष्ठीतत्पुरुषं ज्ञात्वा तिष्ठ त्वं परमेश्वर । बहुव्रीहिमहं ज्ञात्वा तिष्ठामि रघुनन्दनेत्यादिस्मृत्या हरिहरयोस्संवादेन स्फुटीकृतम् ॥ २७ ॥ इति श्रीमद्योगिवर्यविप्रराजेन्द्रात्मजविरचिते भाष्यप्रदीपे चतुर्दशोऽध्यायः ॥ * ॥ ननु द्विपदां वरिष्ठ इत्यादिस्मृत्या पुरुषो ह वै नारायण इत्ययं पुरुषोत्तमः, अथ च विश्वाधिकतया पुरुषो ह वै रुद्र इत्ययम्पुरुषोत्तमइत्यनयोः का व्यवस्थेति निरूपयितुम्प्रतिजानीते । परत्वापरभेदेनेति । एवंसति रोदयत्येष यस्सर्वानित्यादिस्मृत्या त्रिविधदुःखात्यन्तनिवर्तकत्वेन सहस्रशीर्षैत्वा-

पर्णानि यस्तं वेद स वेदवित् ॥ १ ॥ अध-
श्चोर्ध्वं प्रसृतास्तस्य शाखा गुणप्रवृद्धा विष-
यप्रवालाः । अधश्च मूलान्यनुसंततानि क-
र्मानुबन्धीनि मनुष्यलोके ॥ २ ॥ न रूपम-
स्येह तथोपलभ्यते नान्तो न चादिर्न च

शिरोमूलमन्नपानादिनावर्द्धकं यस्य तथाधश्शाखा विराड्रूपेऽपि जघनादीनि यस्येति प्राकृतवृक्षाणां पादपत्वेन स्फुटीकृतम् । तदप्येतद्रज्जुसर्पादिवाह्निना ज्ञानं केवलदण्डादिकर्मणा विनाशरहितत्वादव्ययमित्यर्थः एवं यस्याङ्गुल्यादीनि पर्णानि छन्दांस्याच्छादकानि यस्येति तं ज्ञानेनैवच्छेदनार्हम्वृक्षस्वेद स एव वेद ततोन्यथा तु मुग्धश्रोत्रियो ऽहिभक्षकन्यायानभिज्ञ इत्यर्थः ॥ १ ॥ एवमिह विराड्रूपेण संसारवृक्षं विशेषतो दर्शयति । अधश्चोर्ध्वमिति । तत्र तावदेषु ये दुष्कृतिनस्ते ऽधः पश्वाद्यारभ्याधोयोनिषु प्रसृता विस्तारङ्गतास्तस्य शाखाः ये तु रमणीयाचरणाः सुकृतिनस्ते तूर्ध्वं मनुष्यत्वमारभ्य देवादियोनिषु प्रसृता विस्तारङ्गतास्तस्य संसारवृक्षस्य शाखा इति यावत् ताश्च पुनः सत्वरजस्तमोभिर्देहेन्द्रियविषयाकारपरिणतैर्ज्जलसेचकैरिव प्रवालाः प्रवृद्धाः स्थूलीकृता इति यावत् । एवमिह मनुष्यलोके तथान्यास्मिन्नपि लोके धर्माधर्मनिबन्धीन्यस्य वृक्षस्य मूलानीव मूलान्यनुसन्ततानीत्याशयः ॥ २ ॥ ननु यस्त्वयं संसारवृक्षो वर्णितस्तस्य किं वस्तुतः स्वरूपमिति, नेत्याह । न रूपमिति । तथा सति यत्रातमस्तन्न दिवा न रात्रिर्न्न

---

द्दी गीयमानएवोत्तमः पुरुष इति वक्ष्यते । मुग्धे ति । तत्र तावत्तत्वज्ञानहीनत्वे न मूढास्तथांहश्च त्वश्चेत्यादिवक्तृत्वेन श्रोत्रियाश्चेत्यर्थः । एवमहिभक्षको नटो यथ-च्छीर्षम्पुच्छश्च विहाय शेषमहिं भक्षयति तथा ब्रह्मविदपि नामरूपे विहाय शेषम्ब्रह्मेत्यवधारयतीत्यर्थः ॥ १ ॥ जलसेचकैरिति । तत्र जलसेचकैः पादपैरित्यर्थः । ननु कथमस्योर्ध्वमूलत्वं सृषात्वश्चेच्छृणु, ऊर्ध्वमूलं यतो ह्यस्य पादपत्वं वनस्पतेः । श्रमम्भवोक्तितश्चास्य मिथ्यात्वञ्चाप्युदीरितमित्यादिश्रुतियुक्तिभ्यां द्रष्टव्यम् । निबन्धीनीति । एतदप्युक्तम्, ऊर्ध्वाधोमध्यभेदेन गुणकर्मभिरुज्झितं, न्यूनाधिकप्रभेदेन विश्वमेतन्निदर्शितमित्याद्यवधार्यम् ॥ २ ॥ रज्जुसर्पादि-

**सम्प्रतिष्ठा । अश्वत्थमेनं सुविरूढमूलमसङ्ग-**
**शस्त्रेण दृढेन छित्वा ॥ ३ ॥ ततः पदन्तत्प-**
**रिमार्गितव्यं यस्मिन्गता न निवर्त्तन्ति भू-**
**यः । तमेव चाद्यं पुरुषम्प्रपद्ये यतः प्रवृत्तिः**

सन्न चासच्छिव एव केवलस्तदक्षरन्तत्सवितुर्वरेण्यं यतः प्रवृत्ताः प्रसृता पुरातनीत्यादावन्ते च यन्नास्ति मध्ये तदपि तत्तथेति न्यायेन चास्य विश्वरूपं स्वप्नमरीच्युदकवन्मिथ्यात्वेन तन्नोपलभ्यते । अत एव रज्जुसर्पादिवद्विना ज्ञानं केवलदण्डादि कर्मणां विनाशानर्हत्वान्नान्तो न वारज्जुसर्पादिवद्देवादिर्जन्म न वास्य जगतोतः प्रतिष्ठेत्यर्थः । एवं सत्यश्वत्थं नश्वरमप्येनम्वृक्षं मायया सुविरूढं दृढमपि देहेन्द्रियेष्वसङ्गशस्त्रेणासङ्गोह्ययम्पुरुष इत्येवं शिवज्ञानलक्षणेन दृढेन ज्ञानासिनाच्छित्वेत्याशयः ॥ ३ ॥ ननु सर्वसङ्गान्परित्यज्य ज्ञात्वा मायामयं जगदित्यादिस्मृत्याप्यसङ्गशास्त्रेण छित्वा किङ्कुर्यादित्याह । तत इति । तथा च स्कान्दे पीन्द्रद्युम्नम्प्रति विष्णुनोक्तम् । तद्यथा, अपरञ्च पदं राजन्परमञ्च पदं मम । भस्मज्योतिर्दिदृक्षूणां शिवन्तत्परमम्पदमित्यतोपि यस्मिन्परस्मिन्निष्कले पदे गता भूयः पुनर्न निवर्त्तन्ति तच्छिवमद्वैतन्तुरीयम्पदं शमदमादिना योगारूढः सन्मार्गितव्यमित्यर्थः । नन्वमुनी भगवद्रूपे मया ते अनुवर्णिते । उभे अपि न गृह्णन्ति मायासृष्टे विपश्चित इति पाद्मोक्त्या मनुष्यस्य देवस्य वा तव कथम्परब्रह्मरूपत्वमित्याशङ्क्याह । तमेवेति । एवंसति स सर्वधीवृत्त्यनुभूतसर्व आत्मा यथा स्वप्नजनेक्षितैकः तं सत्यमानन्दनिधिं भजेत नान्यत्र सज्जेद्यत आत्मपात इत्यादिप्र-

---

वदिति । तद्यथा, आत्माऽम्बुराशौ निखिलोपि लोको मग्नोपि नाचामति नेक्षते च । आश्चर्यमेतन्मृगतृष्णिकाभे भवाम्बुराशौ मृगते मृषैवेत्यादिस्मृत्या मृगजलादेरिव जन्माभावात्कुतस्स्थितिरित्यवधेयम् । अत एव जन्माद्यस्य यत इति सूत्रस्य यतोऽज्ञानादस्य जगतो जन्मादीत्येवार्थो दर्शितस्तद्वाक्यपरत्वेनेत्यवधेयम्॥२॥ भस्मज्योतिरिति । तथा च श्रुतिः ओमग्निरिति भस्म जलमिति भस्म स्थलमिति भस्म सर्वं ह वा इदं भस्म सर्वेन्द्रियाणि चक्षूंषि भस्मानि तस्माद्व्रतमेतत्पाशुपतं पशुपाशविमोक्षणायेत्यादिश्रुत्या भस्मशब्देन विज्ञानाख्यज्योतीरूपब्रह्मैवावगमादिति द्रष्टव्यम् । आत्मशब्दाभिधेयमिति । तदुक्तम्भा-

प्रसृता पुराणी ॥ ४ ॥ निर्मानमोहा जि-
तसङ्गदोषा अध्यात्मनित्या विनिवृत्तकामाः ।
द्वन्द्वैर्विमुक्तास्सुखदुःखसञ्ज्ञैर्गच्छन्त्यमूढाः
पदमव्ययन्तत् ॥ ५ ॥ न तद्भासयते सू-
र्य्यो न शशाङ्को न पावकः । यद्गत्वा न
निवर्त्तन्ते तद्धाम परमं मम ॥ ६ ॥ ममैवां-
शो जीवलोके जीवभूतस्सनातनः । मनष्ष-

माणसिद्धमात्मशब्दाभिधेयं शिवमद्वैतम्पुरुषमहमपि हे अर्ज्जुन प्रपद्ये यतश्च पुरुषाद्यत्रातमस्तन्न दिवा न रात्रिरित्यादिश्रुत्युक्तरीत्या सर्वापि जगताम्पुराणी पुरातनी प्रसृता विस्तृता प्रवृत्तिरित्यर्थः ॥ ४ ॥ नन्वन्येपि कथन्तर्हि तद्वृत्तयस्तत्पदम्प्राप्स्यन्तीत्याह । निर्मानेति । तत्र तावन्मानोऽहङ्कारः संशयविपर्ययाभ्यां मोहो ऽविवेकस्ताभ्यां निष्क्रान्ताः तथा विवेकवैराग्यद्वारा जितसङ्गदोषा एवमध्यात्मनि वेदान्तवेद्ये परमशिवे नित्यालोचनतत्पराः अत एव विनिवृत्ताः कामा विषया येषान्तइत्यर्थः तत्रैवंसति तएव शीतोष्णक्षुत्पिपासादिभिस्सुखदुःखसंज्ञैर्द्वन्द्वैर्विमुक्तत्वेनामूढास्सन्तस्तदव्ययम्पदङ्गच्छन्तीत्यर्थः ॥ ५ ॥ एतदेवं श्रुतिस्मृतिपुराणेषु सर्वत्र विष्णोः परम्पदत्वेनाभिधीयतइत्याह । न तदिति । तथा चेह श्रुतिः न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोयमग्निस्तमेव भान्तमनुभाति सर्वमित्यादिवेद्यं मम विष्णोः परम्पदरूपं भूमाख्यं निरतिशयं धामेत्यवधार्यम् ॥ ६ ॥ नन्वमुनी भगवद्रूपे इत्यनेन मम स्वल्पबृहद्रूपयोरपि वस्तुतो हेयत्वमुक्तन्तत्रावान्तराभासभेदेनाप्याह । ममैवेति । तथा चैक एव हि भूतात्मेति

---

गवते । धारयिष्यति ते वेगं रुद्रस्त्वात्मा शरीरिणां, यस्मिन्नोतमिदम्प्रोतं सूत्रं शाटीव तन्तुष्वित्यादिनावधार्यम् ॥ ४ ॥ जितसङ्गदोषा इति । तद्यथा, औदासीन्यास्ततेनापि वर्द्धमाने दिनेदिने, उन्मूलिते मनोमूले जगद्वृक्षः पतिष्यतीत्यादिषु व्यन्तरादिति भावः ॥ ५ ॥ भूमाख्यमिति । तद्यथा, भूमानं यं सदानन्दं शिवमेकमनामयं विद्धि त्वं श्रुतिभिर्गम्यं दर्शयिष्ये परम्पदमित्यर्जुनाय समग्रेनेव भागवते दर्शितमित्यवधेयम् ॥ ६ ॥ व्यष्टिभावेनांशइति । तत्र ता-

षष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥ ७ ॥ शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः। गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥ ८ ॥ श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च। अधिष्ठाय मनश्चायं विषयानुपसेवते ॥ ९ ॥ उत्क्रामन्तं स्थितं वापि

श्रुत्या द्वासुपर्णेति श्रुत्या च जीवेश्वरमायातोऽतिरिक्तमेव तत्परम्पदमित्यवधार्यं मम विष्णोर्व्यष्टिभावेनांशो जीवलोके जीवभूतो बहुकालत्वात्सनातन इत्यर्थः। तथा वेदानध्यापयामास महाभारतपञ्चमानित्यादिवदनिन्द्रियेणापि मनसा षट्त्वसंख्यापूरणान्मनसा सहितानि षष्ठानि श्रोत्रादीन्द्रियाणि प्रकृतिरज्ञानन्तत्रस्थनि स जीवः कूर्मोऽङ्गानीव प्रवेशनिःसारणाभ्याम्विषयेष्वेकादश रुद्रैरधिदैवतैः कृत्वा कर्षतीत्यर्थः। तद्यथा। निश्चलाभिः कथं किं स्यात्प्रजाभिश्चेति चिन्तयन्ब्रह्मरन्ध्रात्ततः शम्भुः प्रादुर्भूत्वाब्रवीद्वचः। मच्छायैकादशा रुद्रास्तव सृष्ट्युपकारकाः। मनष्षष्ठेन्द्रियाणाम्वै चैतन्यन्तद्गमिष्यतीत्यवधार्यम् ॥ ७ ॥ ननु च कदोत्कर्षतीत्याह। शरीरमिति। तत्र तु यदा जीवो यच्छरीरं जन्मकाले ऽवाप्नोति यच्चाप्युत्क्रामति बहिर्गच्छति तदेश्वरो देहेन्द्रियसंघातस्वामी जोवो यतो देहादुत्क्रामति ततो मनःषष्ठानीन्द्रियाणि कर्षतीति पूर्वेणान्वयः एवम्पुनरेतानि मनःषष्ठानीन्द्रियाणि गृहीत्वा वायुर्गन्धानिवाशयात्संयाति जन्मेत्यर्थः ॥ ८ ॥ तत्र तान्येव प्रत्येकशो दर्शयन्नाह। श्रोत्रमिति। तत्रैवंसति श्रोत्रमित्यादीनि चात्कर्मेन्द्रियाणि मनः प्राणश्चाधिष्ठाय विषयान् शब्दादीञ्जीव उपसेवतइत्यर्थः ॥ ९ ॥ नन्वेवं

---

वदेक एव द्वीत्यादिश्रुतिभ्याम्व्यष्टिसमष्टिभावेन जीवेश्वरयोर्निर्णीते त्विह समष्टिरूपस्य विष्णोर्व्यष्टिभावेनांशो जीव इत्यर्थः। तयोरतिरिक्तश्चिदम्बरात्मा प्रतिबिम्बकस्त्वन्यो बिम्बाधिकइत्यवधेयम् ॥ ७ ॥ उपसेवतइति। ननु कया सामग्र्योपसेवतइति चेच्छृणु। इन्द्रियाणि हयान्यच शरीरे प्रग्रहो मनः, बुद्धिन्तु सारथिम्विद्धि विषयास्तेषु गोचरा इत्यादिरीत्योपसेवतइत्याशयः ॥ ८ ॥ पश्यन्तीति। नच तावच्छिवस्थाने शरीरेऽस्मिन्संस्थितस्त्वात्ममायया दुःखादिसागरे

भुञ्जानं वा गुणान्वितम्। विमूढा नानुप-
श्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥ १० ॥ यत-
न्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम्।
यतन्तोप्यकृतात्मानो नैनं पश्यन्त्यचेत-
सः ॥ ११ ॥ यदादित्यगतन्तेजो जगद्भास-
यते ऽखिलम्। यच्चन्द्रमसि यच्चाऽग्नौ तत्तेजो
विद्धि मामकम् ॥ १२ ॥ मामाविश्य च
भूतानि धारयाम्यहमोजसा। पुष्णामि चौष-

कस्माद्गन्ता कुतः कोयं नैव जानाति प्राणभृदित्यादिस्मृत्या प्रत्यक्षतोपि जीवस्या-ल्पज्ञत्वे स्थिते कस्तर्हि सर्वं जानातीत्यप्याह। उत्क्रामन्तमिति। तत्र तावदुत्क्रा-मन्तं पूर्वस्माद्देहान्तरङ्गच्छन्तं स्थितम्वेत्यादि त्वस्यैवावान्तरम्वृत्तम्विमूढा नानुप-श्यन्ति ये तु ज्ञानचक्षुषो विवेकिनस्ते तु पश्यन्तीत्यर्थः ॥ १० ॥ अथैवन्तर्हि पश्यन्ति ज्ञानचक्षुष इत्येतदपि विवृणोति। यतन्त इति। तत्र तावद् ध्यानादि-भिर्यतन्तो योगिनश्चैनमात्मानम्परमशिवमात्मन्यन्तःकरणे ऽवस्थितं स्वत एव पश्यन्ति ये तु यज्ञादिभिरशोधितान्तःकरणास्ते तु यतमाना अप्यकृतात्मनस्त्व-चेतसो नैनम्पश्यन्तीत्यर्थः ॥ ११ ॥ एवमेव चिदम्बराभासरूपचैतन्यं समष्टिभा-वेन ममैवेश्वरस्य व्यष्टिभावेनापीत्याह। यदिति। तथा च यदादित्यगतन्तेजो ऽखिलं जगद्भासयते यच्चन्द्रमसि यच्चाग्नौ तत्तच्छ्रीमदूर्जितम्प्रधानमपि मामकमेव विद्धीत्यर्थः ॥ १२ ॥ एवमपरमप्याह। मामाविश्येति। तत्रैवंसति गाम्पृथिवीं यथोक्तचिदाभासरूपेणौजसाविश्य भूतानि धारयामीत्यर्थः। एवमौषधीः सर्वा

---

घोरे मुह्यमानश्च शोचतीत्येवंरूपेणाविवेकिनो दुर्घटत्वे स्थिते विवेकिनस्त्व-धिष्ठानं समस्तस्य जगतस्सत्यचिद्घनं सोहमस्मीति निश्चित्य वीतशोको भ-वत्ययमित्यादिरीत्या पश्यन्तीत्याशयः ॥ १० ॥ ११ ॥ मामकमेवेति। तद्यथा, समष्टिरूपः पुरुषोन्तरात्मा उच्चावचैर्भाति गुणप्रभेदैः। तस्यैव वांशो विविधो हि जीवस्तयोर्विभिन्नस्तु परः परस्तादिति रीत्यावधार्यम् ॥ १२ ॥ १३ ॥

धीस्सर्व्वास्सोमो भूत्वा रसात्मकः ॥ १३ ॥ अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः। प्राणापानसमायुक्तः पचाम्यन्नञ्चतुर्विधम् ॥ १४ ॥ सर्व्वस्य चाहं हृदि संनिविष्टो मत्तः स्मृतिर्ज्ञानमपोहनञ्च। वेदैश्च सर्व्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् ॥ १५ ॥ द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च। क्षरस्सर्व्वाणि भूतानि कूटस्थो-

अपि रसात्मकः सोमो भूत्वाविश्य पुष्णामीत्यर्थः ॥ १३ ॥ अथापरमप्याह। अहमिति। एवमीश्वर एव व्यष्टिभावेन वैश्वानरो भूत्वा देहमाश्रितः सन्प्राणापानसमायुक्तश्च चतुर्विधमन्नम्पचामीत्यर्थः। अत एव गायत्र्याराधने ब्रह्मरन्ध्रे शिवं ध्यायेद्ब्रह्माणं तु हृदि स्थितं, नाभौ विष्णुं समाराध्य प्रजपेत्परदेवतामित्यप्युक्तं सङ्गच्छते ॥ १४ ॥ एवमपरमपि ततो विशेषमाह। सर्वस्येति। एवन्तर्हि सर्वस्य प्राणिजातस्य चाहं हृदि संनिविष्टो यतो मत्त एव प्राणिनां शब्दादिविषयिका स्मृतिस्तज्ज्ञानमपोहनञ्च भवतीत्यर्थः। एवं शिवध्यानार्चनज्ञानादहमपि शिवरूप एवेत्याह॥ वेदैरिति॥ तथा चाहङ्गिरोपासनया तत्त्वमस्यादिमहावाक्यैरहमेव वेद्य इत्यादिरर्थः ॥ १५ ॥ एवम्पूर्वोक्तमेव जीवेश्वरयोःस्वरूपमवधारयति। द्वाविमाविति। तत्र तावदिह लोके समष्टिव्यष्टिरूपेण जीवेश्वररूपौ पुरुषावेक एव हि भूतात्मेति द्वासुपर्णाविति श्रुतिद्वयवेद्यौ भवतस्तत्र तावत्समस्तकार्यजातानि सर्वा-

---

ब्रह्मरन्ध्र इति। नन्विह ध्यानक्रमे ब्रह्मणस्तु विष्णोर्लघुत्वं कथमिति चेच्छृणु। तद्यथा, दशावतारिणा मूर्धा ब्रह्मणश्च पृथक्कृता, यदिच्छयालघुर्ब्रह्मा विष्णोर्यतः पुरा खल्विल्यवधारिते परिच्छेत्तुं यातावनलमनिलस्कन्दवपुषेत्यादितोप्यवधार्यम् ॥ १४ ॥ १५ ॥ भूतानि चर इति। ननु सम्भवति सामानाधिकरण्ये वैयधिकरण्यमन्याय्यमिति न्यायाद्विप्रतिषिद्धमेतदिति चेच्छृणु। तद्यथा। आरोपितत्वेन रूपः प्रमोदैर्विरोधलेशोपि न राधिकायाम्। वेदाः प्रमाणं पश्यतो

क्षर उच्यते ॥ १६ ॥ उत्तमः पुरुषस्त्वन्यः
परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य
बिभर्त्यव्यय ईश्वरः ॥ १७ ॥ यस्मात्क्षरम-
तीतोहमक्षरादपि चोत्तमः । अतोस्मि लो-
के वेदे च प्रथितः पुरुषोत्तमः ॥ १८ ॥ यो

णि भूतानि क्षरः प्रत्येकं नश्वराणीत्यर्थः । एवं कूटः सर्वस्मिन्सङ्घाते ऽवस्थितत्वात्कूटस्थ ईश्वर इत्यर्थः ॥ १६ ॥ नन्वेवमपि सर्वम्प्रपञ्चजातं कल्पितमुक्तम्परन्तु तत्त्वमस्यादिचतुर्विधमहावाक्यलक्षणं शिवमद्वैतन्तु तुरीयं नोक्तमित्याह । उत्तम इति । एवन्तर्ह्युत्तमः पुरुषस्तु हे अर्जुन मत्तोन्योहमन्तरात्मा शिवस्तु परमात्मेति महेश्वरे वा जगतामधीश्वरे जनार्दने वा जगदन्तरात्मन इत्यादौ यो वेदादौ स्वरः प्रोक्त इत्यादौ च श्रुतावुक्तम्विवेक्तव्यम् । तत्राभ्यां क्षराक्षराभ्याम्विलक्षणम्पुनस्स्वयमेव दर्शयति । य इति । एवंसति यश्चैवमुत्तमः पुरुषस्तमसः परस्तात्परमेश्वरोऽव्ययो विश्वाधिकः परमशिवो लोकत्रयाधिष्ठानत्वेनाविश्य बिभर्तीत्यर्थः ॥ १७ ॥ ननु च त्वं कस्मात्कारणाल्लोके वेदे च पुरुषोत्तमत्वेन प्रथित इति संशयं निराकुर्वन्नाह । यस्मादिति । तत्रैवंसति ततः क्षीणमलं कृष्णमुपमन्युर्यथाविधि । भस्मनोद्धूल्य तं मन्त्रैरग्निरित्यादिभिः क्रमात् । अथ पाशुपतं साक्षाद्व्रतं द्वादशवार्षिकं, कारयित्वा मुनिस्तस्मै ददौ ज्ञानमनुत्तमम् । तदाप्रभृति तं कृष्णं मुनयश्शंसितव्रताः, दिव्याः पाशुपताः सर्वे परिवृत्योपतस्थिरइत्यादिकूर्मस्मृत्य न्तराद-

---

धनञ्जेत्यस्मिन्बहुत्वेन न चैकतायाद्याद्यावेकत्र प्रकृत्यर्थतावच्छेदके सङ्ख्यान्वयात्प्रत्येकाभिप्रायेण वान्वयान्न चतिरित्याशय: ॥ १६ ॥ तमस: परस्तादिति । तथा चात्र श्रुतिः तमादिमध्यान्तविहीनमेकम्विभुं चिदानन्दमरूपमव्ययम् । उमासहायम्परमेश्वरंत्रिलोचनं नीलकण्ठम्प्रशान्तं ध्यात्वा मुनिर्गच्छति भूतयोनिं, समस्तसाक्षि तमस: परस्तादित्यादिकैवल्योपनिषदादौ द्रष्टव्यम ॥ १७ ॥ अवगन्तव्यमिति । तत्रार्थे श्रुतिश्च हृष्टेश्वरं भक्तिगम्यं भस्म भवयदच्युत, नमस्तेस्तु नमस्तेस्तु त्वामेव शरणं गतः, ततःप्रभृति शुक्लाभो वासुदेवः प्रतापवानित्यादिश्रुत्यातसीकुसुमोपमत्वमेघद्युतिमत्वञ्चेत्याद्यपि स्फु-

मामेवमसंमूढो जानाति पुरुषोत्तमम् । स सर्व्वविद्भजति मां सर्व्वभावेन भारत ॥ १९ ॥ इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ । एतद्बुध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत ॥ २० ॥ इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्ज्जुनसम्वादे पुरुषोत्तमयोगो नाम पञ्चदशोऽध्यायः ॥ * ॥ श्रीकृष्ण उवाच ॥ अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः । दा-

प्यवगन्तव्यम् ॥ १८ ॥ ननु त्वां केन रूपेण विजानीयादित्याह । य इति । एवंसति तदाप्रभृति ते कृष्णमित्यादिपूर्वोक्तरीत्या यथोक्तज्ञानेनासंमूढो यस्स कथं शिवध्यानार्चनज्ञानाच्छ्रीकृष्णम्पुरुषोत्तमत्वेन न विजानीयादित्याशयः । किन्तु हे भारत सशिवैकतादात्म्येन सर्वविद् भूत्वा मामपि सर्वभावेन भजति भजेदित्यर्थः ॥ १९ ॥ इदानीन्त्वध्यायार्थमुपसंहरति । इतीति । तत्रैवंसत्यनेन प्रकारेण गुह्यतमं शास्त्रमिदं बुध्वा हे ऽनघ कश्चिदन्योपि बुद्धिमान्स्यात्कृतकृत्यश्चेत्याशयः ॥ २० ॥ इति श्रीमत्पदवाक्यप्रमाणयोगिवर्य्यविप्रराजेन्द्रविरचिते तत्वैकदर्शनभाष्ये पुरुषनिरूपणं नाम पञ्चदशोऽध्यायः ॥ * ॥ दैवी चैवासुरी चेति सम्पद् द्वेधा प्रकीर्तिता । मोक्षबन्धप्रदत्वेन षोडशे तन्निरूप्यते ॥ ननु कैः प्रकारैस्सर्वोपि जनश्शिवैकतत्त्वम्प्राप्नोतीति पञ्चविंशति साधनान्यप्याह । अभयमिति । तत्र तावद् द्वैतिनो बिभ्यति ह्यस्माद्भये भयदर्शिनइत्यादि विमृशन्नभयं

---

टीकृतम् ॥ १८ ॥ उपसंहरतीति । तद्यथा, इत्याद्यर्थे समाप्तौ च विपर्यासकृतेपि च, तथानेकव्यवस्थार्थे निपातत्वात्समीरितमित्यादिवाक्यपदीयादवधार्यम् ॥ १९ ॥ इति श्रीमद्योगिवर्यविप्रराजेन्द्रात्मजविरचिते भाष्यप्रदीपे पञ्चदशोऽध्यायः ॥ * ॥ नन्वसुरसुरयोरुभयोरपि समुद्रोद्भवलक्ष्मतुर्दशरत्नान्तर्गतत्वञ्चेति तयोस्समानत्वमेवेतिचेन्मैवमित्याह । दैवी चेति । तथा च न सु ।

नं दमश्च यज्ञश्च स्वाध्यायस्तप आर्ज्जव-
म् ॥ १ ॥ अहिंसासत्यमक्रोधस्त्यागश्शा-
न्तिरपैशुनम् । दया भूतेष्वलोलुप्त्वं मार्दवं
ह्रीरचापलम् ॥ २ ॥ तेजः क्षमा धृतिश्शौच-
मद्रोहो नातिमानिता । भवन्ति सम्पदं दै-

भयराहित्यं निष्कामकर्मणा सत्वस्यान्तः करणस्य शुद्धिर्निर्मलता सद्गुरुवेदवाक्यैरात्मतत्वस्यावगमो ज्ञानं यमनियमादिना च योगस्तयोर्व्यवस्थितिरित्यर्थः । एवं दानं शाठ्यरहितं दमो बाह्येन्द्रियसंयमः तत्र यज्ञस्तु देवयज्ञः पितृयज्ञो मनुष्ययज्ञो भूतयज्ञो ब्रह्मयज्ञश्चेति पञ्चविधः तत्र स्वाध्यायोपि वेदाध्ययनम्प्रणवादिना गायत्र्याराधनन्तज्जपश्चेति द्विविधः एवं तपश्च शारीरादिभेदेन त्रिविधं यथान्तस्तथा बहिश्चेत्यार्जवमवक्रतेत्यर्थः ॥ १ ॥ एवमिहापरमप्याह । अहिंसेति । तत्र तावत्प्राणिवृत्तिविच्छेदाभावो ऽसिंहा, एव धर्माननुसम्बान्धिसत्यममन्यायेनोक्तिरक्रोधो, विषयेष्वनासक्तिस्त्यागः, एवमन्तःकरणस्योपशमश्शान्तिः, परदोषप्रकाशनाभावोऽपैशुनम् । एवंभूतेषु दुःखितेष्वनुकम्पा दया, विषयसान्निधानेप्यविक्रियत्वमलोलुप्त्वं,मार्दवं चाक्रूरत्वम् स्वधर्मशैथिल्याभावत्वं ह्रीः,प्रयोजनम्विनापि वाक्पाण्यादिव्यापारयितृत्वञ्चापल्यन्तदभावत्वमचापलमित्यर्थः ॥२॥ एवमिहापरमप्याह । तेज इति । तत्र तावत्तेजस्स्वधर्मेषु प्रागल्भ्यम् । एवं क्षमा सहिष्णुता, धृतिर्धैर्यं, शौचं सबाह्याभ्यन्तरशुद्धिः, एवमद्रोहः परापकारराहित्यम्, तथात्मनि पूज्यत्वातिशयभावनातिमानितेति । वेदे बोधितकर्मणात्मज्ञानोपायनुष्ठानप्रवृत्तिहेतुस्सात्विकी शुभभा-

---

विद्यते येषान्ते ऽसुरास्तृप्तिमागताः, सुरास्त्वमृतमासाद्य दैवीं सम्पदमाश्रिता इत्यादिस्मृत्या द्वयोरपि मोक्षबन्धहेतुत्वमवधार्यम् । पञ्चविध इति । तद्यथा, देवपितृमनुष्याश्च भूतब्रह्मेति पञ्चधा प्रत्यहं ब्राह्मणः कुर्वन्निहामुत्रादि साधयेदिति बोध्यम् ॥ १ ॥ अचापलमिति । तद्यथा, दृष्टिस्स्थिरा यस्य विनैव दृश्याद्वायुस्स्थिरं यस्य विना प्रयत्नाच्चित्तं स्थिरं यस्य विनावलम्बात्स एव योगी स गुरुस्स पूज्य इत्यादि द्रष्टव्यम् ॥ २ ॥ प्रागल्भ्यमिति । तद्यथा, उद्यमः साहसं धैर्यंबलम्बुद्धिः पराक्रमः षडिमे यस्य तिष्ठन्ति स सर्वं प्राप्नुयात्पुमा-

**वीमभिजातस्य भारत ॥ ३ ॥ दम्भो दर्पो ऽभिमानश्च क्रोधः पारुष्यमेव च। अज्ञानञ्चाभिजातस्य पार्थ सम्पदमासुरीम् ॥ ४ ॥ दैवी सम्पद्विमोक्षाय निबन्धायासुरी मता। मा शुचस्सम्पदं दैवीमभिजातोऽसि पाण्ड-**

वना दैवी सम्पदिति तां दैवीं सम्पदमभिजातस्य हे भारत एते पञ्चविंशत्यभयादयो धर्मा भवन्तीत्यत्र तमेतम्वेदानुवचनेन ब्राह्मणा विविदिषन्तीत्यादिश्रुतिरप्यनुकूलेत्यवधार्यम् ॥ ३ ॥ अथ मुमुक्षुभिर्ग्राह्यत्वेन दैवीं सम्पदमुक्त्वेदानीं हेयत्वेनासुरीं सम्पदमप्याह। दम्भ इति। तत्र तावद्धार्मिकतयात्मनः ख्यापनं दम्भः एवं धनस्वजनादिनिमित्तो गर्वविशेषो दर्पः तथात्मन्यत्यन्तपूज्यत्वाध्यारोपो ऽभिमानः। अत एव स्वेष्वेवास्येष्वसुरा जुह्वतश्चेरुस्ते ऽतिमानेनैव पराबभूवुरिति श्रुतिरपात्याशयः। एवं स्वपरापकारत्वप्रवृत्तिहेतुरभिज्वलनात्मकान्तःकरणप्रवृत्तिविशेषः क्रोधः तथा प्रत्यक्षमेव रूक्षवद् दुश्शीलत्वम्पारुष्यम्। एवं कर्तव्याकर्तव्यादिविषयकविवेकाभावो ऽज्ञानञ्चेति चकारेण चापलादीनामन्येषामपि सङ्ग्रहो वेद्य इत्यतो रजस्तमोमयीमासुरीं सम्पदमभिजातस्य हे पार्थ दम्भाद्यज्ञानान्तजन्या नरकाद्यनिष्ठा दोषा एव भवन्तीति विवेकः ॥ ४ ॥ नन्वनयोः सम्पदोः कीदृशः फलविशेष इत्याह। दैवीति। तत्र तावद्दैवी सम्पत्संसृतिबन्धविमोक्षाय कैवल्याय भवति तत्रासुरी तु राजसी तामसी च सर्वाप्यासुरी सम्पन्नियतसंसारबन्धनाय मता संमतेत्यर्थः। नन्वेवन्तर्ह्यहं किमासुर्या सम्पदा युक्त इति चेन्नेत्याह। मा शुच इति। तत्र हे पाण्डव पण्डुपुत्रेष्वन्येष्वपि दैवीस-

---

नित्यादिस्मृत्यावधार्यम्। अवधार्यमिति। तदुक्तन्धर्मनिबन्धेष्वपि तद्यथा। सत्यञ्च धर्मञ्च पराक्रमञ्च भूतानुकम्पां प्रियवादिताञ्च। द्विजातिदेवातिथिपूजनञ्च पन्थानमाहुस्त्रिदिवस्य सन्त इत्यवधेयम् ॥ ३ ॥ अभिमानमिति। तदुक्तम्। अभिमानं सुरापानं गौरवं घोररौरव,मतिष्ठा शूकरीविष्ठा त्रयं त्यक्त्वा सुखी भवेदिति धर्माधर्मविषयभेदेन पूर्ववद्विवेक्तव्यम् ॥ ४ ॥ कैवल्यायेति। तद्यथा, परब्रह्म तदाख्यातं मनोवाचामगोचरं, परमात्मा शिवश्चेति कैवल्यं निष्कलः

व ॥ ५ ॥ द्वौ भूतसर्गौ लोकेस्मिन्दैव आ-
सुर एव च । दैवो विस्तरशः प्रोक्त आसुरं
पार्थ मे शृणु ॥ ६ ॥ प्रवृत्तिञ्च निवृत्तिञ्च
जना न विदुरासुराः । न शौचं नापि चाचारो
न सत्यन्तेषु विद्यते ॥ ७ ॥ असत्यमप्रति-
ष्ठन्ते जगदाहुरनीश्वरम् । अपरस्परस-

म्पत्त्यतिद्धास्ति किम्पुनस्त्वयीति त्वं दैवीं सम्पदमभिजातोसीति मा शुचः शोकं मा कार्षीरित्याशयः ॥ ५ ॥ ननु गुणत्रययुक्ता प्रकृतिस्तत्र कतिविधः सर्गो येनायम्बन्ध इत्याह । द्वाविति । तत्र तावदस्मिन् लोके श्रुतिस्मृतिसंस्कारप्राबल्येन रागद्वेषावभिभूय यदा धर्मपरायणो भवति स तदा दैवीं सम्पदमापन्नो भवतीति विस्तरो दर्शितः यदा तु श्रुतिस्मृतिविरुद्धरागद्वेषपरायणो भवति स तदा त्वासुर इत्यतस्तमासुरं सर्गं हे पार्थ हेपार्थ शृण्वित्यर्थः ॥ ६ ॥ ननु तर्हि किमस्त्यसुराणां लक्षणमित्याह । प्रवृत्तिञ्चेति । तत्र तावत्सकामेनानिष्टेनापि यजनपूजनादिनेहामुत्रफलसाधिकाम्प्रवृत्तिन्तथा निष्कामकर्मणा तु शुद्धचित्तस्य यमनियमादिना योगधर्मेण कैवल्यप्रदां निवृत्तिञ्चासुरा जना न विदुरित्यर्थः यतस्तेषु श्रुतिस्मृतिविहितं शौचं सन्ध्यादिषट्कर्मरूपाचारविशेषस्सत्यञ्च मुद्राजटारचनमौण्ड्यवतामृषैवेत्यत्रोक्तेषु न विद्यतइत्यवधार्यम् ॥ ७ ॥ ननु धर्माधर्मयोः प्रवृत्तिनिवृत्तिविषययोः प्रतिपादकस्वेदाख्यं निर्दोषम्प्रमाणन्तदुपजीवि पुराणादि च यत्र

---

शिव इत्यादिलिङ्गपुराणोक्त्या कैवल्यप्रदाय शिवाय च दैवी सम्पद्भवतीत्याशयः ॥ ५ ॥ संस्कारेति । स च संस्कारः सत्सङ्गत्या गुरुदैवतभक्तिप्राबल्यादेवेत्यप्युक्तम् । तद्यथा, गुरुसंभ्येत सङ्गत्या गुरोर्मन्त्रादिपूजनमित्यादिनोक्तत्वादिति भावः ॥ ६ ॥ षट्कर्मेति । तत्र तावत्सन्ध्या स्नानं जपो होमो देवतानाञ्च पूजनमातिथ्यञ्चैवदेवञ्च षट् कर्माणि दिने दिनइत्यादिस्मृत्या षट्कर्मणामावश्यकत्वे स्थिते तत्रातिथ्यन्तु दूरादुपगतं श्रान्तं क्षुधितं रिक्थवर्जितं, धर्मंमार्गैकतत्त्वञ्च पूजयेत्स्वागतादिना, नत्वपथं यथाकथञ्चिदपीत्यवधेयम् ॥ ७ ॥ निर्दोषमिति । एवं सत्यस्य महतो भूतस्य निःश्वसितमेतद्यदेतदृग्वेदो यजुर्वेदः

म्भूतं किमन्यत्कामहैतुकम् ॥ ८ ॥ एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः । प्रभवन्त्युग्रकर्म्माणः क्षयाय जगतोऽहिताः ॥ ९ ॥ काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः । मोहाद्गृहीत्वाऽसद्ग्राहान्प्रवर्त्तन्तेऽशुचिव्रताः ॥ १० ॥ चिन्तामपरि-

नास्ति तदसत्यमित्याह । असत्यमिति । अत एव नास्ति धर्माधर्मरूपाप्रतिष्ठाव्यवस्था हेतुर्यस्य तदप्रतिष्ठं तथा नास्ति शुभाशुभकर्मणो फलनियन्तेश्वरो यस्य तदनीश्वरमित्यनीशो वा कुर्याद् भुवनजननं कः परिकर इत्यादिस्मृतिविरुद्धं ते त्वसुरा जगदाहुरित्यर्थः । एवं ततश्च क्व कर्मप्रध्वस्तम्फलति पुरुषाराधनमृते इत्यादिस्मृतिविरुद्धाभिप्रायेणापरस्परसम्भूतमेवेदं रजो वीर्यसंयोगादेव कामहेतुकं जायमानं जगत्स्वाभाविकं किमन्यद्दृष्टं कारणमस्ति नास्तीत्याशयः ॥ ८ ॥ ननु ते कीदृशा अनर्थवादिनस्तदाह । एतामिति । तत्रैवंसत्येताम्प्रागुक्ताम्वर्णाश्रमधर्मविरुद्धां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयस्तथोग्रकर्माणो हिंसका जगतोऽहिताश्च यतस्तत्क्षयाय प्रभवन्तीति श्रेयोर्थिभिस्सर्वथा सा दृष्टिर्हेयैवेत्यर्थः ॥ ९ ॥ ननु ते कथञ्चित्कर्मणा मनुष्ययोनिमप्यागताश्चेत्कथं लक्ष्यन्तइत्याह । काममिति । एवंसति ते दम्भमानमदान्वितास्सन्तो दुष्पूरं काममाश्रित्य मोहादज्ञानादेवासद्ग्रहानशुभनिश्चयान्गृहीत्वा त्वशुचिव्रतास्सन्तो नरकेऽशुचौ प्रवर्त्तन्तइत्यग्रिमेणान्वयः॥१०॥ एवमिह तामेव दृष्टिम्पुनराह । चिन्तामिति । तत्र तावच्चिन्तामात्मीययोगक्षेमोपाया लोचनात्मिकाम्परमार्थशून्यामपरिमेयाम्प्रलयान्तां कदास्या उपरमो भवेदिति निश्चयरहितामुपाश्रिताः प्राप्तास्ते तु न कदा चित्पारलौकिकचिन्तायुताः

---

सामवेदोऽथर्ववेदश्चेत्यादिश्रुत्या वेदस्येश्वरोच्चरितत्वेन स्वतो वा प्रामाण्येन निर्दोषत्वे स्थिते तत्रापि प्रामाण्यजिज्ञासायां मूलविप्लवापत्तिर्दोषः । तद्यथा, स्वतः प्रमाणभूतेऽस्मिन् प्रामाण्ये मूलविप्लवः तस्मान्नान्याश्रयो ह्यत्र ज्योतिर्यद्वदर्कायतइत्यादि द्रष्टव्यम् । स्वाभाविकमिति । तदेतच्च देव एको विश्वस्य कर्त्ता भुवनस्य गोप्तेत्यादिश्रुतिविरुद्धमेव ते वदन्तीत्याशयः ॥८॥९॥१०॥

सेप्राश्च प्रलयान्तामुपाश्रिताः । कामोपभो-
गपरमा एतावदिति निश्चिताः ॥ ११ ॥ आ-
शापाशशतैर्बद्धाः कामक्रोधपरायणाः । ई-
हन्ते कामभोगार्थमन्यायेनार्थसंचयान् ॥१२॥
इदमद्य मया लब्धमिमं प्राप्स्ये मनोर-
थम् । इदमस्तीदमपि मे भविष्यति पुनर्ध-
नम् ॥ १३ ॥ असौ मया हतश्शत्रुर्हनिष्ये
चापरानपि । ईश्वरोहमहं भोगी सिद्धोहं ब-

किन्तु कामभोग एव परमः पुरुषार्थो येषान्ते तथैतावदेव दृष्टं सुखं नान्यदेतच्छरीरवियोगेपीतिनिश्चितार्था इत्याशयः ॥ ११ ॥ एवमपरानपि तद्दृष्टियुक्तानाह । आशेति । तत्रानवगतोपायार्थविषया त्वाशा तस्याश्चानेकरूपत्वात्तच्छतैस्समूहैर्बद्धास्तथा कामक्रोधपरायणास्सन्तः कामभोगार्थमन्यायेनाप्यर्थसञ्चयानीहन्तइत्यन्वयः ॥ १२ ॥ ननु कीदृशी तस्येहेत्याह । इदमिति । तत्र तावदद्येदानीमिदं धनादिकम्वस्तु पुरैव मया लब्धन्तथेमञ्च मनोरथं मया पुनश्शीघ्रमेव प्राप्स्ये तथेदञ्च वस्तु मम गृहे सञ्चितमस्तीदञ्च पुनर्मे धनं भविष्यतीत्यादिपरमार्थशून्यम्वदन्तीति तत्पापान्नरकेप्यशुचौ पतिष्यन्तीत्याशयः ॥ १३ ॥ एवमिह लोभं प्रपञ्चक्रोधमपि प्रपञ्चयन्नाह । असाविति । तत्रैवंसत्यसौ देवदत्तनामा दुर्जयश्शत्रुर्हतस्तथा परानपि सर्वान्हनिष्यामि यतो महीश्वरो राजसंनिभः प्रबलो नास्ति मत्तुल्यः कश्चिदहमेव च भोगी सर्वभोगोपकरणैर्युक्तो भृत्यादिभि-

---

परमार्थशून्यमिति । तद्यथा, स्त्रीबालान्धजडोपमास्त्वहमिति भ्रान्त्या भ्रमन्त्यादिन इत्यादिलक्षणयुक्ता एव परमार्थशून्यां चिन्तां कुर्वन्तीत्याशयः ॥ ११ ॥
अन्यायेनेति । ह्यन्यायोपार्जितं वित्तं दश वर्षाणि तिष्ठतीत्युक्तमेव स्मर्तव्यम् ॥ १२ ॥ तत्पापादिति । तत्रैवंसति पापप्रभावात्तु भवेद्दरिद्रो दरिद्रभावादकरोति पापमितिन्यायेनाबद्धा एवेत्याशयः ॥ १३ ॥ शत्रुर्हत इति । नन्वधर्मनिरतः शत्रुर्भाग्ये नैव तु लभ्यतइत्यादिस्मृत्या भीषास्माद्वातः पवतइत्यादिश्रुत्या च कामक्रोधादेरावश्यकत्वे स्थिते कथमेतदिति चेच्छृणु । तद्यथा, का-

लवान्सुखी ॥ १४ ॥ आढ्यो ऽभिजनवानस्मि कोन्यो स्ति सदृशो मया । यक्ष्ये दास्यामि मोदिष्ये इत्यज्ञानविमोहिताः ॥ १५ ॥ अनेकचित्ता विभ्रान्ता मोहजालसमावृताः । प्रसक्ताः कामभोगेषु पतन्ति नरके ऽशुचौ ॥ १६ ॥ आत्मसम्भाविताः स्तब्धा धनमानमदान्वि-

स्सहायैस्सिद्धो बलवान्सुख्यप्यहमेवेत्यर्थः ॥ १४ ॥ एवं धनाद्यभिमानेनाप्यसद्वादिनाम्प्राबल्यमाह । आढ्य इति । तत्र तावदाढ्यो धन्यभिजनवान्कुलीनश्चाहमेवास्मीति कोस्ति मया सदृश इत्यर्थः एवं निरीश्वरवादिनां मीमांसकानां मतमप्याह । यक्ष्यइति । एवंसति स्वर्गकामो यजेदित्यादिकर्मणां फलं क्व कर्मप्रध्वस्तम्फलतीत्यादिस्मृतिविरुद्धं देव एको विश्वस्य कर्ता भुवनस्य गोप्तेत्यादिश्रुतिविरुद्धत्वाद्ज्ञानविमोहितास्ते निरीश्वरवादिनो वदन्तीत्यर्थः ॥ १५ ॥ एवमिह लोकेपि स्त्रीबालान्धजडोपमास्त्वहमिति भ्रान्ता भृशं वादिनाम्वृत्तमप्याह । अनेकेति । तत्रैवंसति यतश्श्रुतिमार्गबहिर्भूतत्वेनानेकचित्तविभ्रान्ता मोहजालसमावृतास्सन्तः कामभोगेष्वेव केवलम्प्रसक्ता नरकेपीह दुष्कर्मणात्वशुचौ पतन्तीत्यवधार्यम् ॥ १६ ॥ ननु कथं ते यज्ञादिकं कुर्वाणा अपि पतिष्यन्तीत्याह । आत्मेति । तत्र त्वयस्त्वात्मसम्भावितास्स्वयमेवाहंकारेण पूज्यत्वम्प्राप्तास्तथैव स्तब्धाः कैश्चिद्ब्राह्मणैरपि नृगादिवदनम्राः यतश्च धनमानमदान्विता यजन्ते नाम प्रसिद्धिमात्रं किन्तु दम्भे-

---

मथे त्वस्त्रियञ्चक्रे त्क्रोधो धर्मार्थमाश्रयेत्, लोभो धर्मस्य चाभिख्ये मोहाद्या देवकर्मणोत्यादिस्मृत्यन्तरादिति भावः ॥ १४ ॥ निरीश्वरवादिन इति । तदुक्तम् । निरीश्वरे कुतो धर्मस्तर्कादौ जाग्रतीश्वरे साङ्ख्ययोगे विवादोक्तिः शाब्दिकाः शब्दवादिनः पाखण्डिनः स्मृता ह्यन्ये ज्ञानवार्त्तासुदुर्लभा एकं वेदार्थं विज्ञानङ्कर्मोपास्त्या विराजतइत्यादि द्रष्टव्यम् ॥ १५ ॥ वादिनामिति । इह तु भ्रान्ता भृशंवादिनस्तेषामिति परिनिष्ठितविभक्त्या निर्देशो बोध्यः ॥ १६ ॥ प्रसिद्धिमात्रमिति । तद्यथा, कर्मनाशा जलस्पर्शात्कर्मनाशाविलङ्घनात्करतोयां बाहुतरणाद्धर्मः चरति कीर्त्तनादित्याद्युक्तमपि पुनरवधार्यं, नहि मन्त्रा-

ताः । यजन्ते नाम यज्ञैस्ते दम्भेनाविधिपूर्व्वकम् ॥ १७ ॥ अहङ्कारम्बलं दर्पं कामं क्रोधञ्च संश्रिताः । ममात्मा परदेहेषु प्रद्विषन्तो ऽभ्यसूयकाः ॥ १८ ॥ तानहं द्विषतः क्रूरान्संसारेषु नराधमान् । क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥ १९ ॥ आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि । मामप्राप्यैव कौन्तेय ततो यान्त्यधमाङ्गतिम् ॥ २० ॥ त्रिविधं नरकस्येदं द्वारं नाशन-

नाविधिपूर्वकमेव यजन्ते दक्षादिवदिति भावः ॥ १७ ॥ ननु च कथं ते विनष्टा इत्याह । अहंकारमिति । तत्रैवंसति देहादावहन्त्वाभिमानमहंकारो बलञ्च पराभिभवनिमित्तं दर्पं शरीरगतसामर्थ्यविशेषन्तथाभीष्टविषयाभिलाषं काममनिष्टद्वेषं क्रोधञ्च संश्रिताः प्राप्ता इत्यर्थः । तत्र यत एवंभूताः परदेहेषु व्यष्टिभावेन ममेश्वरस्यैवात्मत्वाविजानन्तः श्रुतिस्मृतिविरुद्धत्वेन प्रद्विषन्तोऽभ्यसूयकाश्चेत्याशयः १८॥ ननु तेषां नराधमानां का गतिरित्याह । तानिति । तत्रैवंसत्येतान्संसारेषु द्विषतः क्रूरान्नराधमानशुभानासुरीष्वेव व्याघ्रसर्पादिषु योनिष्वहमजस्रं क्षिपामीत्यर्थः॥ १९॥ नन्वेवमपि जन्मान्तरत्वेन कदा चिच्छ्रेयो भविष्यतीति, नेत्याह । आसुरीमिति । तत्र ये तु पूर्वोक्तामासुरीं योनिमापन्ना मूढास्ते जन्मनि जन्मन्यप्यधमाङ्गतिम्प्राप्नुवन्तीत्यर्थः । यतश्च मन्ये त्वां कालीमीशानमित्यादिस्मृतिन्यायेन मां मत्परम्पदम्वा त्वप्राप्यैव ते मुद्राजटारचनमौण्ड्यवतां वृथैवेति स्मृतिन्यायेनान्यथा वेदमर्यादया भजन्तीत्यधिकम्विष्णुपुराणे द्रष्टव्यम् ॥ २० ॥ नन्वासुरी सम्पदनेक-

---

षां यामितास्तीति न्यायेनोपदिष्टमपि पुनरुपदिष्टमित्यवधार्यम् ॥ १७ ॥ अविजानन्निति । ममैवांशो जीवलोके जीवभूतः सनातन इत्याद्यविजानन्नित्यर्थः ॥ १८ ॥ १९ ॥ द्रष्टव्यमिति । तत्र तावद्बृहन्नारदीये, गङ्गास्नानरतो वापि अश्वमेधरतोपि वा चक्राङ्कितततनुं दृष्ट्वा पश्येत् सूर्यं नरेश्वर इत्यादिमुद्राधारि-

मात्मनः । कामः क्रोधस्तथा लोभस्तस्मा-
देतत्त्रयं त्यजेत् ॥ २१ ॥ एतैर्विमुक्तः कौन्तेय
तमोद्वारैस्त्रिभिर्नरः । आचरत्यात्मनश्श्रेय-
स्ततो याति पराङ्गतिम् ॥ २२ ॥ यः शास्त्र-
विधिमुत्सृज्य वर्त्तते कामचारतः । न स सि-
द्धिमवाप्नोति न सुखं न पराङ्गतिम् ॥ २३ ॥ त-
स्माच्छास्त्रं प्रमाणं ते कार्य्याकार्य्यव्यवस्थि-

विधोक्ता सा कथम्पुरुषेण परिहर्तुं शक्येति संक्षिप्याह । त्रिविधमिति । तस्मादेतत्त्रिविधं नरकस्य द्वारं साधकन्तथात्मनो जीवात्मनो ऽत्यन्ताधमयोनिप्रदत्वेन नाशनमित्यर्थः यस्माच्च कामादित्रितयमेव श्रुतिस्मृतिविरुद्धत्वेनानर्थमूलन्तस्मादेतत्त्रितयन्त्यजेदिति सर्वाप्यासुरी सम्पत्त्यक्ता भवतीति भावः ॥ २१ ॥ नन्वेतत्त्रितयन्त्यजतः किं स्यात्फलमित्याह । एतैरिति । एवन्तर्ह्येतैः कामादिभिस्त्रिभिर्विमुक्तस्सन्यस्त्वात्मनो वेदबोधितं श्रेयः पुरुष आचरति हे कौन्तय स चैहिकामुष्मिकीञ्च पराङ्गतिम्प्राप्नोतीत्यर्थः ॥ २२ ॥ नन्वेतावता प्रपञ्चेन यदि कामादिषु दोष एव तर्हि तेषामुत्पत्तिरेव कथमित्याह । य इति । तत्रैवंसति कामश्चेत्स्वास्त्रियङ्गच्छेत्क्रोधश्शत्रोर्विनाशने, लोभो धर्मस्य रक्षार्थं श्रुतितत्त्वैकशालिनामित्यादिस्मृतिविरुद्धं कुर्वन्नेवेह कर्माणीत्यादिश्रुतिविरुद्धश्च यः कामकारतस्स्वेच्छामात्रेण वर्तते करोति वा स च नैव सिद्धिमवाप्नोति न वा सुखमैहिकम्परां स्वर्गादिगतिं मोक्षञ्च प्राप्नोतीत्यर्थः ॥ २३ ॥ एतमेव सिद्धान्तमुपसंहरन्नाह । तस्मादिति । तत्र यस्मादेवन्तस्माद्धे अर्जुन ते तवान्येषाम्वा कार्याकार्यव्यवस्थितौ श्रुतिस्मृत्या-

---

प्यान्तप्तमुद्राङ्कितानां निषेधः एवं सचिमजटाधारिणां भौद्धवताञ्चासुरत्वं स्पष्टमेवोक्तं न विचारतव्यम् ॥ २० ॥ २१ ॥ अनर्थमूलमिति । नन्वेवञ्चेत्कथं कामादयो रचिता इति चेन्नैवम् । कामश्चेत् स्वस्त्रियङ्गच्छेत्क्रोधश्चेच्छत्रुनाशनइत्यादिना धर्ममूलकत्वेन तेषामावश्यकत्वादिति भावः ॥२१॥ एतैरिति । तत्राप्यधर्मनिरतश्शत्रुभोग्यं नैव तु लभते यतोऽधर्मात्स्वयं नष्टस्तन्नाशे नाधिकः अस्य इत्यादिस्मृत्यनुकूलश्च युक्तमेवेत्याशयः ॥ २३ ॥ शास्त्रमेवेति । तद्यथा, श्रुतयः

तौ। ज्ञात्वा शास्त्रविधानोक्तङ्कर्म्म कर्त्तुमि-
हार्हसि ॥ २४ ॥ इति श्रीमद्भगवद्गीतासूप-
निषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णा-
र्जुनसम्वादे दैवासुरसम्पद्विभागयोगो ना-
म षोडशोध्यायः ॥ * ॥ अर्ज्जुन उवाच ॥
ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः।
तेषां निष्ठा तु का कृष्ण सत्वमाहो रजस्त-
मः ॥ १ ॥ श्रीकृष्ण उवाच ॥ त्रिविधा भवति
श्रद्धा देहिनां सा स्वभावजा। सात्विकी रा-

दिशास्त्रमेव प्रमाणमितीस्थिते तदेव ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसीति परमार्थः ॥ २४ ॥ इति श्रीमत्पदवाक्यप्रमाणयोगिवर्यविप्रराजेन्द्रविरचिते तत्त्वैकदर्शनभाष्ये दैवासुरसंपन्निरूपणं नाम षोडशोध्यायः ॥ * ॥ श्रद्धात्र त्रिविधा प्रोक्ता तत्तद्भेदैरनेकधा। न्यूनाधिकफलैस्सप्तदशे त्वेतान्निरूप्यते ॥ ननु वैदिकविधानं कथञ्चिदुपेक्ष्य येपि श्रद्धयैवानुतिष्ठन्ति ते किं देवेष्वन्तर्भवन्त्यथासुरेष्विति सन्दिहान आह। य इति। एवंसति सत्वरजस्तमसां मध्ये केषां किम्विषयिणी निष्ठेति विवेकतो वक्तव्यमिति प्रश्नाशयः ॥ १ ॥ अथ च सर्वप्राणिनां यथा त्रिगुणापन्ना या स्वभावजा श्रद्धा रुचिर्वा भवति तथैव तावदुत्तरमप्याह। त्रिविधेति। तत्रैवंसति यादृशी श्रद्धा देहिनां त्रिगुणात्मिकास्ति तादृश्येव पु-

---

स्मृतयश्चैव युक्तयश्चेश्वरेश्वरं वदन्ति तद्विरुद्धं यो वदेत्तस्मान्न चाधम इत्यादिस्मृत्यन्तराच्छास्त्रानुकूला युक्तिरपीत्यवधार्यम् ॥ २४ ॥ इति श्रीमद्योगिवर्यविप्रराजेन्द्रात्मजविरचिते भाष्यप्रदीपे षोडशोध्यायः ॥ * ॥ ननु मुद्राजटारचनमौण्ड्यव्रतास्तथैवेत्यादिविष्णुपुराणोक्तानां कलिनोपहतचित्तानांवेदबाह्यानां वैदिकधर्मानुष्ठानं युक्तं न वेत्याशङ्कते। नन्विति। तद्यथा, स्वेषु स्वेषु च धर्मेषु यत्र वर्णाश्रमास्तथा। निष्ठावन्तो हि तिष्ठन्ति शिवतत्वैकशालिनः। श्रुतिहीना द्विजा नैव दानहीना न भूमिपाः। शिवहीना क्रिया नैव कलि-

जसी चैव तामसी चेति तां शृणु ॥२॥ सत्वानुरूपा सर्व्वस्य श्रद्धा भवति भारत । श्रद्धामयोयं पुरुषो यो यच्छ्रद्धस्स एव सः ॥ ३ ॥ यजन्ते सात्विका देवान्यक्षरक्षांसि राजसाः । प्रेतान्भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥ ४ ॥ अशास्त्रविहितं घोरं तप्यन्ते ये तपोजनाः । दम्भाहङ्कारसंयुक्ताः कामरा-

नब्रवीमीति शृण्वित्यर्थः ॥ २ ॥ नन्वेवं स्वभावजापि तेषां श्रद्धा कथं जातेति न जानीम इत्याह । सत्वेति । एवं सत्यारब्धे जन्मनि शुद्धकर्मसंस्कारवशात्सात्विक्येव श्रद्धा मलिनसंस्कारवशात्तु राजस्येव ततोप्यतिमालिन्येन तामस्येवेति ताढशकर्मसंस्कारवशात्तदनुरूपया सर्वस्य जनस्य हे भारत श्रद्धा रुचिर्वा भवतीत्यर्थः। यतो यच्छ्रद्धस्स एवायं तन्मयस्सँस्तच्छ्रद्धः पुरुषो भवतीति यावदर्थः ॥ ३ ॥ ननु त्रिगुणैर्विभिन्नामिह श्रद्धां शास्त्रोक्तां ज्ञातुमिच्छामि चेत्कथं ज्ञास्यामित्याह । यजन्तइति । तत्र तावत्सात्विकास्सत्वगुणयुक्ता यज्ञेष्वग्रभोक्तृत्वेन दध्यक्षतं शिवायोक्तमितिस्मृत्युक्तरीत्या साङ्गाय सपरिवारायेत्यादिरीत्या च महारुद्रादीन्गणपतिञ्च यजन्ते एवं राजसास्तु यक्षरक्षांसि च यजन्ते एवं तामसाश्चान्ये प्रेतान्पूतनाप्रभृतींश्च भूतगणान्यजन्तइत्यर्थः ॥ ४ ॥ तत्रैवंसति ये तु वेदबाह्यास्तामसाधमाद-

---

स्तच न चेचतदत्यादि द्रष्टव्यम् ॥ १ ॥ २ ॥ शुद्धकर्मेति । नन्वादौ यदि शुद्धैव सृष्टिस्तर्हि कथमिदानीं मालिन्यमागतमिति चेत्सत्यम् । तद्यथा, ब्राह्मणोऽस्य मुखेत्यादौ शुद्धा सृष्टिश्श्रुतौ स्मृता शुद्धा कर्माङ्गसम्भूता मध्ये जीवैर्विडम्बितेत्यादिरीत्यावधार्यम् ॥ ३ ॥ साङ्गायेति । अत एव वेदादित्वेन सर्वत्र प्रणवस्य सदाशिवबीजत्वेनोमित्यस्योपन्यासः अत एव च तदुत्तरं गणानान्त्वागणपतिं हवामहइत्याद्युक्तम् । तथा च सकलयज्ञेष्वग्रभोक्तृत्वेन शिवस्यैव तत्पुत्रत्वेन गणपतेर्गौर्याश्च साङ्गाय सपरिवाराय सशक्तिकाय सायुधाय सवाहनाय श्रीसदाशिवाय गन्धपुष्पादिकं सर्वं समर्पयामि नम इत्यादिरीत्यैव पूजनं युक्तमिति भावः ॥ ४ ॥ तपोहव्येति । ननु का तर्हि तपोवृत्तिर्यया हव्या

मबलान्विताः ॥ ५ ॥ कर्षयन्तश्शरीरस्थं भूतग्राममचेतसः । माञ्चैवान्तश्शरीरस्थं तान्विद्ध्यासुरनिश्चयान् ॥ ६ ॥ आहारस्त्वपि सर्व्वस्य त्रिविधो भवति प्रियः । यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ॥ ७ ॥ आयुस्सत्वबलारोग्यसुखप्रीतिविवर्द्धनाः । रस्याः स्निग्धाः स्थिरा हृद्या आहारास्सात्विकप्रि-

प्यधमास्सात्विकमर्यादया दुराग्रहेण शास्त्रीयसाधनेन तपोवृत्त्या प्रवर्तन्ते वस्तुतस्तएवासुरा भवन्तीति द्वाभ्यां निदर्शयति । अशास्त्रेति । एवन्तर्हि मुद्राजटारचनमौञ्ज्यवताम्वृथैवेत्यादिविष्णुपुराणोक्ताः दरिया नाभा कबीरश्च नान्हकस्सुथरस्तथा, शठकोपो भिषक्चाष्टौ कर्मचाण्डालभागिन इत्यादयस्तत्सम्प्रदायानुगाश्चेदानीन्तना दम्भाहारयुक्तत्वेन भूतग्रामं माञ्चाप्यसद्वृत्त्या शरीरान्तस्स्थं त्रिदण्डमुपजीवतीति स्मृतिन्यायेन कर्षयन्तस्तिष्ठन्तीति तानप्यासुरनिश्चयान्सुतराम्विद्धीति द्वयोरर्थः ॥ ५ ६ ॥ ननु तत्र केवला श्रद्धैव त्रिविधा किन्तु सर्वसाधारण्येनाहारोपि त्रिविध इत्याह । आहारस्त्विति । तत्रैवंसति सर्वस्य जनस्याहारोपि मितो हितः प्रियश्च सात्विकादिभेदेन त्रिविधो भवति तथैव यज्ञो दानन्तपश्चापि त्रिविधमिति तेषामपीमं त्रिविधं भेदं शृण्वित्यर्थः ॥ ७ ॥ एवन्तत्राहारादीनामपि पुनः प्रत्येकं त्रिविधभेदानाह । आयुरिति । तत्रायुश्चिरजीवनं सत्वं चित्तस्थैर्य्यं बलं शरीरसामर्थ्यमारोग्यं व्याध्यभावत्वमित्येतैरिहामुत्र सुखे प्रीतिश्चेत्येतेषां विवर्द्धना रस्याः स्निग्धा स्थिराः स्थिरकालस्थायित्वेन हृद्याश्चेत्याहाराः सात्विकप्रिया भवन्तीति भावः॥८॥

---

मुद्राजटेत्यादिवेदबाह्या अपि चरन्तीति चेच्छृणु । वनकूपतडागान्ते समुद्रं लिङ्गमाश्रितो युद्धस्थाने समाधाय कालमेभिर्विडम्बित इत्याद्यधिकमन्यत्र विस्तारः ॥ ५ ॥ ६ ॥ आहारोपीति । अत एव तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेनेति मन्त्रे त्वाशको भोक्ता यस्तु ब्रह्माहुतिमप्यसमाप्याहुतिञ्च कृत्वा भुङ्क्ते स चानाशको यतस्तत्र देव एव भुङ्क्ते स्वयन्तु तपश्चरतीति भोक्तुरनाशकत्वं स्फुटीकृतमिति तच्चैवंसतीत्यादिनावधा-

याः ॥ ८ ॥ कट्वम्ललवणात्युष्णतीक्ष्णरूक्ष-
विदाहिनः । आहारा राजसस्येष्टा दुःखशो-
कामयप्रदाः ॥ ९ ॥ यातयामं गतरसं पूतिप-
र्युषितं च यत् । उच्छिष्टमपि चामेध्यं भो-
जनं तामसप्रियम् ॥ १० ॥ अफलाकाङ्क्षिभि-
र्यज्ञो विधिदृष्टो य इज्यते । यष्टव्यमेवेति
मनस्समाधाय स सात्विकः ॥ ११ ॥ अभि-
संधाय तु फलं दम्भार्थमपि चैव यत् । इज्यते

एवं राजसभेदानप्याह । कट्वम्लेति । तत्र तावत्कट्वम्लादयस्त्वाहारा राजसस्येष्टास्ते चेहामुत्र दुःखशोकप्रदास्तथामयो रोगस्तत्प्रदाश्चेत्यर्थः ॥ ९ ॥ एवमेव तामसान-प्याह । यातयाममिति । तत्र तावद्याममध्ये न भोक्तव्यं यामद्वयं न लङ्घयेदि-त्यायुर्वेदविरुद्धं यातयाममित्यर्थः । तथा गतरसं समुद्धृतसारम्पूतिमद् दुर्गन्धम्प-र्युषितञ्च यदित्यर्थः । एवमुच्छिष्टङ्गुरोरन्यत्र भुक्तावशेषममेध्यं यज्ञानर्हं मां-सादिभोजनञ्च तामसप्रियमित्यर्थः ॥ १० ॥ तदिदानीं क्रमप्राप्तेषु त्रिविधं यज्ञ-मप्याह । अफलेति । तत्र तावदफलाकाङ्क्षिभिस्त्वन्तःकरणशुद्ध्यर्थितया विधि-दृष्टः श्रुतिसिद्धो यज्ञो य इज्यते तथा तच्छुद्ध्युत्तरमपि यष्टव्यं यजेदेवेति मनः समाधाय यः कुरुते स सात्विक इत्यर्थः ॥ ११ ॥ एवं राजसमपि यज्ञमाह । अभिसन्धायेति । तत्रैवंसतीहामुत्रस्थम्फलमभिसन्धाय तु यत्क्रियते तथैव दम्भो

---

र्थम् ॥ ७ ॥ ८ ॥ ९ ॥ गुरोरन्यत्रेति । अत एव स्कान्दे, नारदो हि पुरा भ्रान्त्या किरातं गुरुमावहन्सनत्कुमारतः पश्चाच्छैवीं दीक्षां समाचरदित्याद्यधिकारव-र्णाश्रमधर्मनिरूपणे द्रष्टव्यम् ॥ १० ॥ श्रुतिसिद्ध इति । तद्यथा, बाधया रहिता गावो यत्र सन्ति महीतले । स्त्रियः सन्ति हि सुश्लोकाः पातिव्रत्यपरायणाः । विधियज्ञाः प्रवर्तन्ते पृथिव्याम्बहुदक्षिणाः निराबाधं तपश्चर्या च चास्ति तप-स्विनाम् । निष्प्रत्यूहम्पठन्त्येव साङ्गान्वेदान्द्विजोत्तमाः, मह्नीपालाः प्रजा यत्र धर्मशीला बभूविरे इत्यादिस्मृत्या विधिदृष्टश्श्रुतिसिद्धश्च यत्र यज्ञः स एव देशो

भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥ १२ ॥ वि-
धिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् । श्र-
द्धाविरहितं यज्ञं तामसम्परिचक्षते ॥ १३ ॥
देवद्विजगुरुप्राज्ञपूजनं शौचमार्ज्जवम् । ब्र-
ह्मचर्य्यमहिंसा च शारीरन्तप उच्यते ॥ १४ ॥
अनुद्वेगकरम्वाक्यं सत्यं प्रियहितञ्च यत् ।

नाम लोके धार्मिकत्वख्यापनार्थमपि यदिज्यत्वेन क्रियते तदपि हे भरतश्रेष्ठ तं यज्ञं राजसम्विद्धीत्यर्थः ॥ १२ ॥ एवमेव प्रकारान्तरेण तामसमप्याह । विधिहीनमिति । तथा चेह विधिहीनं नाम श्रुतिस्मृतिविरुद्धन्तथा न सृष्टं त्यक्तमन्नं यस्मिन्निति वैश्वदेवादिरहितन्तथा मन्त्रहीनं स्वरतो वर्णतो वा मिथ्याप्रयुक्तं सर्वथा तद्रहितम्वा तथैवादक्षिणं कारयित्रे दक्षिणारहितं श्रद्धाविरहितञ्च तामसं यज्ञमिति परिचक्षत इत्यर्थः ॥ १३ ॥ इदानीन्तु क्रमप्राप्तेषु सामान्यतस्तपःस्वरूपमपि त्रिभिर्भेदैराह । देवेति । तत्र तावद्धरे मध्यगते सूर्यगणेशगिरिजाच्युतानग्निनैर्ऋत्यवायव्येशानेषु परिपूजयेदित्यादिरीत्या पूजार्हा देवास्तथा द्विजा ब्राह्मणास्तत्रापि गुरवो ज्ञानतः कर्मणा वा गरिष्ठास्तत्रापि प्राज्ञा धर्माधर्मविवेकशालिनः सर्वसंशयनिवर्त्तकास्तेषाम्पूजनं यथाशास्त्रतो मृज्जलाभ्यान्तेषामवसेचनं तेष्वार्जवञ्च युक्तमित्यर्थः । एवं ब्रह्मचर्यमपि श्रुतिस्मृतिविरुद्धत्वेन मैथुननिवृत्तिस्तथैवाहिंसा तु शास्त्रविरुद्धप्राणिपीडनाभावश्चेत्यादिशारीरन्तप उच्यते श्रुतिस्मृतिमर्यादयेत्यवधार्यम् ॥ १४ ॥ एवम्प्रकारान्तरेणापि तपश्चरणमेवाह । अनुद्वेगेति । तत्र तावच्छास्त्राविरुद्धत्वेनानुद्वेगकरम्वाक्यम्प्रमाणमूलत्वेन च सत्यन्तथा श्रोतुस्तत्कालावच्छेदेन सुखकरत्वात्प्रियम्परिणामेपि हितञ्च यत्तथा स्वाध्यायो गाय-

---

वा ग्रामो वा मनुष्यो वा सात्विको भवतीति भावः॥११॥१२॥१३॥असृष्टान्नं इति । तद्यथा, येस्सृष्टानि चान्नानि चण्डिया नावभुञ्जते न वैश्याश्चापि चान्ये च कुतोन्यो ब्राह्मणोत्तमः। यो वै सकलगोत्राणां मूलभूतो द्विजोत्तमः। यतो वै चण्डियाः सर्वे गोचिणोत्यपि चानुगा इत्यादिशास्त्रत इत्यर्थः॥ १४ ॥ पीडाभावइति । तदेतद्राजधर्मसंयुक्तम् । तद्यथा, प्रजापीडनसन्तापात्समुद्भूतो हुताशनः । राज्ञां

स्वाध्यायाभ्यसनञ्चैव वाङ्मयन्तप उच्य-
ते ॥ १५ ॥ मनःप्रसादस्सौम्यत्वं मौनमा-
त्मविनिग्रहः । भावसंशुद्धिरित्येतत्तपो मा-
नसमुच्यते ॥ १६ ॥ श्रद्धया परया तप्तं त-
पस्तत्त्रिविधं नरैः । अफलाकाङ्क्षिभिर्य्युक्तै-
स्सात्त्विकं परिचक्षते ॥ १७ ॥ सत्कारमान-
पूजार्थं तपोदम्भेन चैव यत् । क्रियते तदि-

त्रयादिवेदस्तस्याभ्यसनञ्चेति वाङ्मयन्तप उच्यतइत्यर्थः ॥ १५ ॥ एवम्प्रकारान्तरेणाप्याह । मन इति । तत्र तावत्कदा चिच्चिद्विम्बितानन्दाभिषिक्तत्वेन मनःप्रसादः प्रसन्नता एवं शास्त्रसज्जनसम्पर्केत्यादावन्तिमभूमिकाप्राप्तत्वेन सौम्यत्वम् । एवम्वाचा मौनन्तु बालानां सतां सहजसंज्ञितमित्यत्रोक्तञ्च मौनम् । एवमेवात्मनो मनसोपि विशेषेण सर्ववृत्तिनिरोधस्तेन त्वसम्प्रज्ञातः समाधिर्भवतीति भावस्य हृदयस्य संशुद्धिरिति तपो मानसमुच्यतइत्यर्थः ॥ १६ ॥ अथ शारीरादिभेदेन तपस्त्रैविध्यस्योक्तस्य पुनस्त्रैविध्यन्तु त्रिगुणभेदेन दर्शयति । श्रद्धयेति । तत्र तावच्छ्रद्धयास्तिक्यबुद्ध्या परयाप्रामाण्याशङ्काशून्यया तपस्तप्तं जनैः प्रशस्तैः कृतमित्यर्थः । एवमफलाकाङ्क्षिभिर्नाम फलाभिसन्धिराहितैर्युक्तैः समाहितैः सावधानचित्तैश्च यत्कृतङ्कर्म तत्सात्त्विकं शिष्टा महान्तः परिचक्षतइत्यर्थः ॥ १७ ॥ एवमिह तपस्त्रैविध्येषु राजसमप्याह । सत्कारेति । तत्रैवंसति जनैः सत्कारार्थं स्वमानेन पूजार्थञ्च दम्भेन च यदिह क्रियते तद्राजसं

---

श्रियं कुलम्प्राणान्हत्वा तुष्यति नान्यथेत्यादि द्रष्टव्यम् ॥ १४ ॥ स्वाध्याय इति । तच्च तावत्सकलवेदमूलकत्वेन विप्रो वृक्षस्तस्य मूलञ्च सन्ध्येत्यादिना तस्या आवश्यकत्वादिति भावः ॥ १५ ॥ असम्प्रज्ञात इति । तद्यथा, पश्येत्तु चिन्मयम्ब्रह्म जगच्चापि स किञ्चन । न ततोन्यत्परम्पश्येत्त्वसम्प्रज्ञात इष्यतइत्यादिस्मृत्याप्यवधार्यमित्यधिकं सर्वशास्त्रार्थदर्शने चिदम्बरभाष्ये च तत्प्रदीपे द्रष्टव्यम् ॥१६॥ यत्कृतं कर्मेति । यस्मिन् कृते न किञ्चित्कर्म क्रियते तन्मे मनस्सङ्कल्पमस्त्वित्यादिश्रुतिवेद्यमित्यर्थः ॥ १७ ॥ बोध्यमिति । अकरणात्करणं श्रेयस्ततोप्यधि-

ह प्रोक्तं राजसं चलमध्रुवम् ॥ १८ ॥ मूढ-
ग्राहेणात्मनो यत्पीडया क्रियते तपः । पर-
स्योत्सादनार्थम्वा तत्तामसमुदाहृतम् ॥ १९ ॥
दातव्यमिति यद्दानं दीयते ऽनुपकारिणे । दे-
शे काले च पात्रे च तद्दानं सात्त्विकं स्मृत-
म् ॥ २० ॥ यत्तु प्रत्युपकारार्थं फलमुद्दिश्य
वा पुनः । दीयते च परिक्लिष्टं तद्दानं राजसं
स्मृतम् ॥ २१ ॥ अदेशकाले यद्दानमपात्रेभ्य-
श्च दीयते । असत्कृतमवज्ञातं तत्तामसमुदा-

फलांशैश्च तच्चलमध्रुवञ्चेति बोध्यम् ॥ १८ ॥ एवमुक्तेष्वेव तपःसु तामसमप्याह । मूढेति । एवं सति मूढगुरूपदेशेन मूढग्राहेण मूढगुरुणोपदिष्टेनात्मनो जन्तुमात्रस्य पीडया यत्तपः क्रियते यच्च परस्य शत्रोरन्यायेनोत्सादनार्थमभिचारेण क्रियते तदपि तामसन्तप उदाहृतमित्यर्थः ॥ १९ ॥ इदानीन्तु पूर्वोक्तक्रमप्राप्तस्य दानस्यापि त्रैविध्यमाह । दातव्यमिति । तत्र तावदभिगम्योत्तमं दानमाहूयैव तु मध्यम,मधमं याचमानाय सेवादानन्तु निष्फलमित्यादिस्मृतिन्यायेन यद्दानं सत्पात्रदानन्तदप्यनुपकारिणे यद्दानन्तदपि देशे काले पात्रे च यत्तदेव सात्त्विकं स्मृतमित्यर्थः ॥ २० ॥ एवमिह प्रकारान्तरेणाप्याह । यत्त्विति । तत्रैवंसति यत्तु प्रत्युपकारार्थं कालान्तरे मामुपकरिष्यतीत्येवमर्थं स्वर्गादिफलमुद्दिश्य वा परिक्लिष्टम्वा कथमेतावद्दत्तमिति पश्चात्तापकरम्वा यद्दीयते तद्दानं राजसं स्मृतमित्यर्थः ॥२१॥ एवमिह प्रकारान्तरेण तामसमप्याह । अदेशेति । एवन्तर्ह्यदेशे पापकृत्तमत्वहे-

कतरं यद्दितिन्यायेन बोध्यमित्यर्थः ॥ १८ ॥ मूढगुरूपदिष्टेनेति । तद्यथा, धर्महीनो गुरुस्त्याज्यो मिथ्यावादी विडम्बकः । स्वविश्रान्तिं न जानाति परेषां स करोति किमित्येव निषेधे पर्यवसिते जन्मना कर्मणा वापि प्रसिद्धब्रह्मणोत्तमस्त्वतैः पाशुपतैर्युक्तं गुरुङ्कुर्याद्विवेकत इत्याद्यवधार्यम् ॥ १९ ॥ २० ॥ २१ ॥ नन्विह सत्वरजस्तमोभेदेन तत्तज्जातिभेदेन यज्ञभेदेन च धर्मा दर्शितास्तथापि

हृतम् ॥ २२ ॥ ओन्तत्सदितिनिर्देशो ब्रह्मणस्त्रिविधस्स्मृतः । ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥ २३ ॥ तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः । प्रवर्त्तन्ते विधानोक्तास्सततम्ब्रह्मवादिनाम् ॥ २४ ॥ तदित्यनभिसंधाय फलं यज्ञतपःक्रियाः । दानक्रियाश्च विविधाः क्रियन्ते मोक्षका-

तावदशुचिस्थाने तथैवाकाले पुण्यहेतुत्वेनाप्रसिद्धे यस्मिन्कस्मिंश्चित्काले ऽशौचकाले वा विद्यातपोरहितेभ्यो ब्राह्मणेभ्यस्तथैवासत्कृतमवज्ञातञ्च यद्दानन्तत्तामसमुदाहृतमित्यर्थः ॥ २२ ॥ अथेह पूर्वोक्तानां यज्ञतपोदानानां दृष्टादृष्टार्थानाम्फलवैगुण्यपरिहाराय त्वाह । ओन्तत्सदिति । तत्रैवंसतीह ब्रह्मणः परब्रह्मणः सदाशिवस्याविनाशिनस्त्रिविधो हि वागर्थाविव सम्पृक्ताविवेतिन्यायेनोन्तत्सदितिनिर्देशो नाम वाच्यवाचकत्वेन स्मृतः प्रसिद्ध इत्यर्थः । यतो ब्राह्मणोस्य मुखमासीदित्यादिश्रुत्या, एवम्ब्रह्मणोस्य मुखाज्जातो वेदो ऽग्निर्ब्राह्मणः खल्वित्यादिस्मृत्या च प्राक्तनत्वेन ब्राह्मणादीनां यज्ञमूलत्वं स्फुटीकृतम् ॥ २३ ॥ तत्र यस्मादेवं तस्मादुपसंहरति । तस्मादिति । तत्र तावन्मन्त्रादित्वेन सर्वत्रोमित्युच्चार्यैव यज्ञदानतपश्चर्यादिक्रियास्तत्तद्विधानोक्ता ब्रह्मवादिनां सततम्प्रवर्त्तन्तइत्यवधार्यम् ॥ २४ ॥ एवमिह पूर्वोक्तं तच्छब्दम्व्याचष्टे । तदिति । चेति । तत्रैवंसति तत्त्वमसीत्यादिवाक्यस्थेन तदित्यनेनोपलक्षितं शिवमद्वैतन्तुरीयम्ब्रह्माभि-

---

तेषां स्वस्वज्ञात्यानुगुण्येन कर्मारम्भेष्वादौ किम्वक्तव्यं येन तत्तत्कमफलं स्यादित्याह । अथेति । तथा च सर्वत्र सङ्कल्पादावोन्तत्सदद्य नमः पुराणपुरुषोत्तमायेत्यादिरीत्यैव पठेदिति भावः ॥ २२ ॥ वाच्यवाचकत्वेनेति । तत्र तावद्वाच्यस्सदाशिवो वाचकस्तु विष्णुस्तत्त्वेनेत्यर्थः । वेदो नारायणस्साक्षात्स्वयम्भूरिति...

द्भिताः ॥ २५ ॥ सद्भावे साधुभावे च सदि-
त्येतत्प्रयुज्यते । प्रशस्ते कर्म्मणि तथा स-
च्छब्दः पार्थ युज्यते ॥ २६ ॥ यज्ञे तपसि दा-
ने च स्थितिः सदिति चोच्यते । कर्म्म चैव त-
दर्थीयं सदित्येवाभिधीयते ॥ २७ ॥ अश्र-
द्धया हुतं दत्तन्तपस्तप्तं कृतञ्च यत् । अस-
दित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥२८॥
इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्या-
यां योगशास्त्रे श्रीकृष्णार्ज्जुनसम्वादे श्रद्धा-
त्रयविभागयोगो नाम सप्तदशोध्यायः ॥ * ॥

सन्धाय यज्ञतपोदानादिक्रिया मोक्षप्रभृतिकाङ्क्षिभिः क्रियन्तइत्यर्थः ॥ २९ ॥
एवमिहापरमपि तृतीयं सच्छब्दम्व्याचष्टे । सद्भाव इति । तथाचेह सदेव सत्य-
मिति सत्यं ज्ञानमनन्तम्ब्रह्मेत्यादिश्रुतिवेद्ये सद्भावे साधुभावे प्रशस्ते च कर्मणि हे
पार्थ सच्छब्दः प्रयुज्यतइत्याशयः ॥ २६ ॥ एवमिह प्रकारान्तरेणाप्याह । यज्ञ
इति । तत्र तावद्यज्ञादौ सद्भावेन सदित्येतत्प्रयुज्यते एवं तदर्थीयं नाम तच्छब्देन
प्रतिपाद्यो यः सदाशिवस्तदर्थन्तद्वै मनश्शम्भुपदारविन्दयोरिति स्मृतिन्यायेन यत्कि-
मपि कर्म क्रियते तदेतत्सादितिशब्देनाभिधीयतइत्यर्थः ॥ २७ ॥ तत्र तावच्छ्र-
द्धाविरहितं सर्वं यज्ञादिकं कर्म दक्षादिवन्निष्फलमनर्थप्रदञ्चेत्यप्याह । अश्रद्ध-
येति । तत्रैवंसत्यश्रद्धया हुतं दत्तन्तपस्तप्तम्वा तथैवान्यदपि यत्कृतं कर्म हे पार्थ
तदसदित्युच्यते तदिह प्रेत्य च फलदं न भवतीति भावः ॥ २८ ॥ इति श्रीम-
त्पदवाक्यप्रमाणयोगिवर्यविप्रराजेन्द्रविरचिते तत्त्वैकदर्शनभाष्ये श्रद्धात्रयनिरू-
पणं नाम सप्तदशोऽध्यायः ॥ * ॥ उपक्रमादितो ज्ञानम्विनिश्चित्य विवेकजम् ।

---

सभावे तदेवाहमिति जानीहि सत्तमित्याद्यवधार्यम् ॥ २५ ॥ साधुभाव इति ।
तद्यथा, साधवो ब्राह्मणाश्शान्ताः शिवतत्वपरायणाः चरन्त्यघं तेष्वसज्जात्तेष्वास्ते
ब्रह्मभिच्छिव इत्यवधेयम् ॥ २६ ॥ २७ ॥ इति श्रीमद्योगिवर्यविप्रराजेन्द्रात्मज-

अर्ज्जुन उवाच॥ संन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम् । त्यागस्य च हृषीकेश पृथक् केशिनिषूदन ॥ १ ॥ श्रीकृष्ण उवाच॥ काम्यानां कर्म्मणां न्यासं संन्यासं कवयो विदुः । सर्वकर्म्मफलत्यागं प्राहुस्त्यागं वि-

फलाशक्तिम्विना त्वष्टादशे चैतन्निरूप्यते ॥ ननु न वेणुभिर्भवेद्यतिरित्यादिना दण्डिनान्तदनुयायिनां तदन्येषाञ्च वेदबाह्यानां निषेधात्संन्यासत्यागयोः को विशेष इत्याह । संन्यासस्येति । तत्रैवंसति संन्यासत्यागशब्दयोः पर्यायत्वेपि कर्मणः फलस्य वा त्यागेन वैलक्षण्योक्तेः संशय इति तत्पृथक्त्वेन वेदितुमिच्छामीति प्रश्नाशयः ॥ १ ॥ तत्रेत्थं सति संन्यासत्यागयोर्मतभेदेन व्यवस्थामाह । काम्यानामिति । तत्र तावत्तमेतम्वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेनेत्यादिश्रुतेर्नित्यनैमित्तिककर्मणामावश्यकत्वे स्थिते स्वर्गकामो यजेदित्यादिकाम्यानाङ्कर्मणां क्षयिष्णुफलकत्वेन संन्यासं कवयः सूक्ष्मदर्शिनो विदुरित्यर्थः । एवमानिष्टमिष्टं मिश्रञ्च त्रिविधं कर्मणः फलमित्यादिस्मृत्या कैवल्यार्थिभिरपि

---

विरचिते भाष्यप्रदीपे सप्तमोऽध्यायः ॥ * ॥ ननु कैर्लिङ्गैः शास्त्रसिद्धान्तो वर्णनीय इत्याह । उपक्रमेति । तत्र तावदिहोपक्रमे अमृतशब्देन परमशिवस्यैवाभिधानम् । तथोपसंहारे तु सर्वत्राध्याये तद्विष्णोः परमम्पदमित्याद्यभिधानम् । एवमिह परम्पदाख्यशिवज्ञानिनस्त्वनावृत्तित्वेन पुनःपुनःकथनमभ्यासः तथोत्तमः पुरुषस्त्वन्य इत्यादिना परमशिवज्ञानेनैवापूर्वताफलम् । एवमव्यक्तं व्यक्तिमापन्नमित्यादिना शिवत्वेन विष्णोर्ज्ञानमर्थवादः तथा महेश्वरेत्यनेन परमशिवस्येश्वरविनाशित्वाद्गरिष्ठत्वमित्युपपत्तिश्चेत्यादिषड्विधलिङ्गैः शास्त्रसिद्धान्तोऽर्थः प्रतिपाद्यत इत्यवधार्यम् । निषेधादिति । तद्यथा, निर्व्याजो स्त्रीयधर्मज्ञो वेदज्ञस्तत्त्वपारगः । विरक्तो वेषनिर्मुक्तः षड्भिर्योगी मुनिर्भवेदित्यादिना सर्वेषाम्पूर्वोक्तानां निषेधादिति भावः ॥१॥ ध्यानविच्छेदहेतुत्वादिति । एवंसति पूजाकोटिसमं स्तोत्रं स्तोत्रकोटिसमो जपः, जपकोटिसमं ध्यानं ध्यानकोटिसमो लय इत्येवंक्रमेण गरिष्ठत्वे स्थिते तत्र यथायथा प्रत्यगवस्थितं मनस्तथातथा सुखाति बाह्यवासनेति न्यायेन ध्यानविच्छेदहेतुत्वात्कर्मसंन्यस्यजेदित्याशयः । विविदिषोत्पत्त-

चक्षणाः ॥ २ ॥ त्याज्यं दोषवदित्येके कर्म प्राहुर्म्मनीषिणः । यज्ञदानतपःकर्म्म न त्याज्यमिति चापरे ॥ ३ ॥ निश्चयं शृणु मे तत्र त्यागे भरतसत्तम । त्यागो हि पुरुषव्याघ्र त्रिविधः सम्प्रकीर्त्तितः ॥ ४ ॥ यज्ञो दानं तपः कर्म्म न त्याज्यं कार्य्यमेव तत् । यज्ञो

निष्कामनयैवानिष्टं त्यक्त्वा यज्ञदानादिकं कर्त्तव्यमेवैहिकन्तु विक्रीते करिणि किमङ्कुशे विवाद इतिन्यायेन स्वत एव सिद्ध्यतीति सर्वकर्मफलत्यागं विचक्षणाः प्राहुरित्याशयः ॥ २ ॥ ननु संन्यासत्यागयोर्वस्तुतो ऽविशेषस्योक्तत्वेपीह विशेषमाह । त्याज्यमिति । तत्रैवंसति विज्ञानोत्तरं वासो यथा परिकृतं मदिरामदान्धइत्यादिरीत्या शुकादिवज्जडभरतादिवच्च सप्तम्यां भूम्यां तिष्ठतां योगिनां ध्यानविच्छेदहेतुत्वाद्दोषवदेव कर्म त्याज्यमित्येके मनीषिणो ध्यानशीलाः प्राहुरित्यर्थः । अथ मुमुक्षुभिः कर्माधिकारिभिस्त्वन्तःकरणशुद्धिद्वारा विविदिषोत्पत्त्यर्थं यज्ञो दानन्तपः कर्म तु न त्याज्यमिति चापरे मनीषिणः पञ्चम्यां भूम्यामवस्थिताश्च प्राहुरित्यर्थः ॥ ३ ॥ एवमिह विप्रतिपत्तौ सत्यामप्रत्युत्तरम्वक्तुम्प्रतिजानीते । निश्चयमिति । तत्रैवंसति हे भरतसत्तम कर्मणां त्यागे त्यागविषये मे मम वचनान्निश्चयं पूर्वाचार्यैः कृतं शृण्वित्यर्थः । तथैव हे पुरुषव्याघ्र शृण्वतां गरिष्ठसत्वरजस्तमोभेदैस्त्रिविधस्त्यागः सम्प्रकीर्त्तितस्त्वया बोद्धव्य इत्यर्थः ॥ ४ ॥ ननु तावतापि कर्मणान्त्यागसंग्रहयोः कोसौ निश्चय इत्याह । यज्ञ इति । तदिहान्तःकरणं ज्ञानाच्छुद्ध्यति कर्मणा वेति विप्रतिपत्तौ प्राप्तायां ज्ञानात्मनस्तु परब्रह्मणः सर्वदा वर्त्तमानत्वात्कदाप्यन्तःकरणस्याशुद्धिरेव न स्यात्तस्मात्कर्मणैवादर्शवत्तच्छुद्-

ध्यमिति । तत्रैवं सत्यात्मविविदिषोत्पत्तेः पूर्वमन्तःकरणशुद्ध्यर्थं कर्मोपासनयोरावश्यकत्वमेव तु आभ्यामेव पक्षाभ्यां यथा खे पक्षिणां गतिस्तथैव भक्तिकर्मभ्याम्प्राप्यते ब्रह्म शाश्वतमित्यादि द्रष्टव्यम् ॥ ३ ॥ ४ ॥ शुद्ध्युपयोगित्वेनेति । इह तु यथा भूम्यादौ सर्वत्र मुखप्रतिबिम्बस्य सत्त्वेपि न सर्वत्र प्रकाशते किन्त्वादर्शादावेव स्वच्छतया प्रकाशते एवमस्याः शुद्धान्तःकरणस्यैवात्मोपलब्धिरिति

दानं तपश्चैव पावनानि मनीषिणाम् ॥ ५ ॥
एतान्यपि तु कर्म्माणि सङ्गं त्यक्त्वा फलानि
च । कर्त्तव्यानीति मे पार्थ निश्चितं मतमुत्त-
मम् ॥ ६ ॥ नियतस्य तु संन्यासः कर्म्मणो
नोपपद्यते । मोहात्तस्य परित्यागस्तामसः
परिकीर्त्तितः ॥ ७ ॥ दुःखमित्येव यत्कर्म्म

धिरपेक्षितेति यज्ञो दानन्तपः कर्म न त्याज्यं किन्तु तत्कार्यमेवावश्यकत्वादित्यर्थः । यतोन्तःकरणस्य शुद्ध्युपयोगित्वेन यज्ञादीन्येव मनीषिणां पावनानीत्याशयः ॥ ५ ॥ ननु काम्येपि शुद्धिरस्त्येव भोगसिद्ध्यर्थमेव सा, विड्वराहादिदेहेन नह्यैन्द्रं भुज्यते फलमित्यादिस्मृत्या सकामस्यापि कर्मणोन्तःकरणशोधने सामर्थ्यमस्तीति कृतं फलाभिसन्धित्यागेनेत्याह । एतान्यपीति । एवन्तर्हि काम्येनापि कर्मणा कृतेन तत्फलभोगोत्तरं विविदिषया विज्ञानस्य सिद्धावप्यविलम्बेन तत्सिद्ध्यर्थन्त्वेतान्यापि यज्ञादीनि कर्माण्याशाप्रत्याशयोः सङ्गम्फलानि च त्यक्त्वा कर्त्तव्यानीति मे मम निश्चितं मतमुत्तममित्यर्थः ॥ ६ ॥ ननु स्वर्गकामो यजेदित्यादिश्रुत्या कॢप्तस्य स्वर्गाद्युद्देश्येन काम्यस्य कर्मणः कदा चित्क्षयिष्णुत्वेन त्यागोस्तु परन्तु नित्यनैमित्तिकादेःशारीरस्य तु ज्ञानिनोप्यावश्यकत्वात्तत्त्यागानर्हत्वमित्याह । नियतस्येति । तत्रैवंसति नियतस्य तु तस्य स्वस्वज्ञात्यनुसारेण नित्यनैमित्तिकादेः शारीरस्य कर्मणः संन्यासस्त्यागो नोपपद्यतइति तस्य कदा चिन्मोहादज्ञानादालस्याद्वा परित्यागश्चेत्स परित्यागस्तामसः परिकीर्त्तित इत्यर्थः ॥ ७ ॥ ननु मृता नारी दरिद्रैस्तु दूषिताः पापबिन्दवः । स्वाद्वन्नभक्ष्यकामेन वेषं धृत्वा पराङ्मुखा

---

यज्ञादीनामन्तःकरणशुद्ध्युपयोगित्वेन तदवश्यमेव तत्पर्यन्तं कर्तव्यम् । तदुत्तरन्त्वात्मोपलब्ध्या जानामि धर्मं न च मे प्रवृत्तिरित्यात्मोपदेशेनैव वर्तितव्यमित्याशयः ॥ ५ ॥ भोगोत्तरमिति । अत एव त्र्यम्बकमितिमन्त्रेप्युर्वारुकमिवबन्धनान्मुचीयेत्युक्तमपि सङ्गच्छतइत्यधिकं रुद्रकल्पे भाष्येपि द्रष्टव्यम् ॥ ६ ॥ तामस इति । तदुक्तमात्मप्रदीपे । तद्यथा, बुद्धाद्वैतसतत्त्वस्य यथेच्छाचरणं यदि शुनान्तत्त्वदृशां चैव को भेदोऽशुचिभक्षणइत्यादि द्रष्टव्यम् ॥ ७ ॥ पापबिन्दव इति ।

कायक्लेशभयात्त्यजेत्। स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥८॥ कार्य्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन। सङ्गं त्यक्त्वा फलञ्चैव स त्यागस्सात्त्विको मतः ॥९॥ न द्वेष्ट्यकुशलं कर्म्म कुशलेनानुषज्जते। त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः ॥१०॥

इत्यादिस्मृतिन्यायेन कर्मसंन्यासः कृतश्चेत्स कीदृशस्त्याग इत्याह। दुःखमिति। तत्रैवंसति यथोक्तरीत्या स्वस्वजात्यनुसारेण सन्ध्यादिकमपि कर्म तदपि कायक्लेशभयाद् दुःखमित्येव मत्वा त्यजेच्चेत्स राजसं त्यागं कृत्वा नैव त्यागस्य फलमिहामुत्रगङ्कैवल्यम्वा लभेदित्याशयः ॥ ८ ॥ ननु राजसस्तामसश्च त्यागो दर्शितस्सात्त्विकस्त्विह कीदृशो भवतीत्याह। कार्यमित्येवेति। तत्रैवं सति नियतं स्वस्वजात्यनुसारेण नित्यनैमित्तिकप्रायश्चित्तानुष्ठानाख्यं यदवश्यं कार्यमित्येव मत्वा सङ्गम्फलञ्च त्यक्त्वा क्रियते हे अर्जुन स त्यागस्तु स्वधर्मसाध्यहेतुत्वेनेश्वरप्राप्तिहेतुत्वेन च सात्त्विको मत इत्यर्थः ॥ ९ ॥ ननु तामसं राजसं सात्विकम्वा कर्मान्यैः क्रियमाणं तत्त्वज्ञः किं निवर्तयेत्कारयेद्वेत्याह। न द्वेष्टीति। तत्रैवं सत्यन्यैस्तामसादिभिस्त्वकुशलं कर्म स्वसंस्कारवशेन क्रियमाणमपि तत्त्वज्ञो न द्वेष्टि न च कुशलेनानुषज्जते वेति स च त्यागी सत्त्वसमाविष्टो न बुद्धिभेदं जनयेत्यादिस्मृत्यनुकूलत्वान्मेधावी छिन्नसंशयश्चेत्यर्थः ॥ १० ॥ तदेवंसति बुद्ध्याद्वैतसत-

---

अत एवाप्राप्तज्ञानमार्तण्डं कर्मजन्यफलं शुभम्। इतो भ्रष्टास्ततो भ्रष्टा धीतस्थेव च निष्फला इत्यतोपि पापबिन्दुत्वमेवावधारितम् ॥ ८ ॥ प्राप्तिहेतुत्वेनेति। ननु यदि सात्त्विकस्य यथोक्तकर्मणस्त्वीश्वरप्राप्तिहेतुत्वं तर्हि कथमसङ्गत्वमिति चेच्छृणु। तत्र तावन्निष्कामस्य कर्मणस्त्वे तावतैवासङ्गत्वं यस्मादीश्वरप्राप्त्युत्तरं प्राप्तव्यं नास्ति न वा चयित्वाशङ्का स्वर्गादिफलादिवदिति यस्मिन् सति न किञ्चित्कर्म क्रियते तस्मै मनःसङ्कल्पमस्त्वित्यप्यवगतं भवतीति भावः ॥९॥ न च कुशलेनेति। तत्र स्वस्य त्वात्मज्ञानात्पूर्वमेव शुद्धचित्तत्वेनाकुशले कर्मणि प्रवृत्तिरेव न भवतीति भावः ॥ १० ॥ अशेषतस्त्यक्तुमिति। ननु विहितं कर्म

**नहि देहभृता शक्यं त्यक्तुं कर्म्माण्यशेषतः । यस्तु कर्म्मफलत्यागी स त्यागीत्यभिधीयते ॥ ११ ॥ अनिष्टमिष्टं मिश्रञ्च त्रिविधं कर्म्मणः फलम् । भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित् ॥ १२ ॥ पञ्चैतानि महाबाहो कारणानि निबोध मे । साङ्ख्ये कृतान्ते प्रोक्तानि सिद्धये सर्व्वकर्म्मणाम् ॥ १३ ॥**

स्वस्य यथेच्छाचरणं यदीत्यादिस्मृत्यात्मज्ञानवतोपि नित्यनैमित्तिकादिकर्मावश्यकत्वमेवेत्याह । नहीति । एवंसति देहभृतां कथमपि कर्मावश्यकत्वे स्थिते तेषां कर्माण्यशेषतस्त्यक्तुं नहि शक्यमित्यर्थः किन्तु यः कर्मफलत्यागी स एव त्यागीति विद्वद्भिरभिधीयतइत्यवधार्यम् ॥ ११ ॥ ननु निरर्थकं स कुर्याद्वै बालवद् बुद्धिवर्जित इत्यादिस्मृत्या सार्थकस्य कर्मणः कर्तुमावश्यकत्वे स्थिते कतिविधन्तदित्याह । अनिष्टमिति । तत्र तावत्कर्मफलात्यागिनामनिष्टमित्यादि त्रिविधं कर्मणः फलम्प्रेत्य भवतीत्यर्थः एवं नित्यनैमित्तिकादिकर्म कुर्वतान्तत्फलासङ्गिनां संन्यासिनां तु नैवानिष्टं नरकादिकं न वेष्टं स्वर्गादिकं न वा तदुभयमिश्रञ्च लौकिकं तेषामनित्यत्वेन तुच्छत्वादित्यवधेयम् ॥ १२ ॥ ननु सांसारिकैर्जीवैर्देवतिर्यङ्नरादिभिरेवैतत्कर्म कर्तव्यन्तत्र कतिविधं कारणमित्याह । पञ्चैतानीति । तत्र तावद्वेदान्तान्नापरं मानमित्यादिस्मृत्या साङ्ख्ये नाम वेदान्ते कृतान्ते नाम सिद्धान्ते सर्वकर्मणाम्फलसिद्धये ऽधिष्ठानन्तथा कर्तेत्यादिवक्ष्यमाणानि पञ्चैतानि

---

न कुर्यादित्येव तस्याशय इति चेत्कुर्वन्नेवेह कर्माणीत्यादिश्रुतिरपि तदाकरणे प्रत्यवायशासनादित्यवधार्यम् ॥ ११ ॥ तुच्छत्वादिति । तथा चात्माम्बुराशौ निखिलोपि लोको मग्नोपि नाचामति नेच्छते च आश्चर्यमेतन्मृगतृष्णिकाभे भवाम्बुराशौ मगते नषैवेत्येवंरीत्या जगतस्तुच्छत्वे स्थिते तेषां तत्वज्ञानिनां शरीरयात्रा तु जानामि धर्मं न च मे प्रवृत्तिरिति न्यायेन भवतीत्यवधार्यम् ॥ १२ कर्म कर्त्तव्यमिति । कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समा इत्यादिश्रुत्यनुकूलत्वात्तदवश्यन्तैः कर्म कर्त्तव्यमेव अन्यथा श्रुत्युल्लङ्घनेन तेषां

अधिष्ठानं तथा कर्त्ता करणञ्च पृथग्विधम् ।
विविधाश्च पृथक्चेष्टा दैवं चैवात्र पञ्चमम् ॥१४॥
शरीरवाङ्मनोभिर्यत्कर्म्म प्रारभते नरः । न्या-
य्यं वा विपरीतम्वा पञ्चैते तस्य हेतवः ॥१५॥
तत्रैवं सति कर्त्तारमात्मानं केवलन्तु यः । प-
श्यत्यकृतबुद्धित्वान्न स पश्यति दुर्म्म-
तिः ॥ १६ ॥ यस्य नाहंकृतो भावो बुद्धिर्य्यस्य

कारणानि जीवस्य सर्वानर्थनिवर्तकत्वेन हे महाबाहो मे मत्तो निबोधेत्यर्थः ॥ १३ ॥ ननु कानि तर्हि पञ्च कारणानि वस्तुतो हेयत्वेन ज्ञातव्यानीत्याह । अधिष्ठानमिति । तत्रेत्थं सत्यधिष्ठानं शरीरन्तथामेमत्यभिमानवान्कर्ता श्रोत्रादिशब्दादि च विषयोपलब्धिसाधनं पृथग्विधं करणं, एवं प्राणापानोदानव्यानसमानत्वेन तदन्तर्गतनागकूर्मकृकलदेवदत्तधनञ्जयत्वेन च पृथग्विधाश्चेष्टास्तथापञ्च दैवमाकाशादिदेवताजातमिति मिलित्वेहामुत्रार्थफलसाधकमित्याशयः ॥ १४ ॥ नन्वेतैः पञ्चभिः किं क्रियतइत्याह । शरीरेति । तथा चेहामुत्र सिद्ध्ये शारीरम्वाचिकं मानसञ्च यत्त्रिविधं कर्म शास्त्रीयोक्तत्वेन न्याय्यन्तद्विपरीतम्वा क्रियते तस्यैते ऽधिष्ठानादयो हेतव इत्यर्थः ॥ १५ ॥ तदिदानीमधिष्ठानादिपञ्चविधनिरूपणस्य तत्त्वज्ञानिनः फलमप्याह । तत्रैवमिति । तत्रेत्थंसत्यधिष्ठानादिपञ्चविधसंघातस्य कर्तृत्वे स्थिते यस्तु सजातीयादित्रिविधभेदरहितमात्मानं शिवमद्वैतं कर्तारम्पश्यति स चाकृतबुद्धित्वान्न स पश्यत्यतो दुर्मतिरित्यर्थः ॥ १६ ॥

---

प्रायश्चित्तभागित्वं स्यादिति भावः ॥ १३ ॥ श्रोत्रादीति । तत्र तावच्छ्रोत्रत्वक्चक्षुर्जिह्वाघ्राणेति पञ्च ज्ञानेन्द्रियाणि तथा शब्दस्पर्शरूपरसगन्धेति तद्विषयाः । एवं वाक्पाणिपायूपस्थाख्यानि पञ्च कर्मेन्द्रियाणि तथा वचनादानगमनविसर्गमेहनानि च तद्विषयरूपाणीति कर्तृत्वसाधनस्य पृथग्विधं करणमित्यर्थः । एवन्तेषाञ्चेष्टा प्रसिद्धास्तथा दिग्वातार्कवरुणपृथ्वीत्यादिभेदेन देवजातमपि मिलित्वा सर्वेष्टसाधकमित्यवधेयम् ॥ १४ ॥ त्रिविधमिति । अत एव वाग्भिर्दत्तं मनोदत्तं दत्तं पाणिकुशोदकमित्यादौ धर्मनिबन्धे त्रिभिरेव कृतं विशेषतः

**न लिप्यते। हत्वापि स इमाँल्लोकान्न हन्ति न निबध्यते ॥ १७ ॥ ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्म्मचोदना। करणं कर्म्म कर्त्तेति त्रिविधः कर्म्मसङ्ग्रहः ॥१८॥ ज्ञानं कर्म्म च कर्ता च त्रिधैव गुणभेदतः। प्रोच्यते गुणसंख्या-**

नन्वेवं विवेकतो योगजधर्मेणात्मप्रत्यक्षं कुर्वतोपि जन्ममरणादिकन्तु भविष्यतीति चेन्नैवमित्याह। यस्येति। तत्रैवंसति यदि देहपृथक्त्वस्य चिति विश्राम्य तिष्ठतीत्यादिस्मृत्युक्तरीत्या यस्य पूर्ववदधिष्ठानादिविवेकेन देहादौ नाहंकृतो भावः किन्त्वसङ्गोह्ययम्पुरुष इत्यादिश्रुत्युक्तबोधेन च यस्य देहादिकृतकर्मणा बुद्धिर्न लिप्यते स चैवन्तत्वज्ञस्सर्वानिमाँल्लोकान्हत्वापि तेन कर्मणा न निबध्यते कुतस्तेस्वल्पाहवकृतकर्मणा बन्ध इत्यलम् ॥ १७ ॥ नन्वधिष्ठानादिपञ्चात्मसंघातस्य कथन्तत्कर्मकर्तृत्वमित्याह। ज्ञानमिति। तथा चेह शब्दस्पर्शादितत्तद्वस्तुत्वावच्छिन्नविषयकं ज्ञानं तत्तद्वस्तुत्वावच्छिन्नञ्च ज्ञेयन्तादृशज्ञानाधिकरणञ्चाहमित्यभिमानवान्परिज्ञातेति त्रिविधा कर्मप्रेरणेति भावः। सा च केन कुर्यात्कथं कुर्यात्कः कुर्यादिति त्रिविधस्तत्तत्कर्मकर्तृत्वे संकर इत्यपि बोध्यम् ॥ १८ ॥ इदानीन्तु ज्ञानज्ञेयज्ञातृस्वरूपस्य करणकर्मकर्तृस्वरूपस्य च त्रिकद्वयस्य त्रिगुणात्मकत्वम्वक्तव्यमितीह पुनराह। ज्ञानमिति। तत्रैवंसति ज्ञानमित्यादित्रिविधङ्गुणसंख्याने

---

पुण्यपापादौ प्रयोजकम्भवतीति तत्र तत्र द्रष्टव्यम् ॥१५॥ १६ ॥ योगजधर्मेणेति। तत्र तावदात्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्यादि श्रुत्यार्थक्रमेण श्रवणाद्यनन्तरं शमदमादिषट्सम्पत्त्यनन्तरञ्च यमनियमाद्यष्टाङ्गरूपेण योगजधर्मेणेत्यर्थः। इत्यलमिति। तत्रैवंसतीह मदुपदेशदार्ढ्येन क्षतयुद्ध्येदित्यलं समर्थ इत्यर्थः। नोचेदलं व्यर्थमित्यर्थ इति द्वयमप्यवधार्यम् ॥ १७ ॥ त्रिविध इति। तद्यथा, साध्यञ्च साधनञ्चैव प्रकारो यत्र यादृशः सेतिकर्त्तव्यता शास्त्रे सर्वत्रैव प्रयुज्यत इत्यादि द्रष्टव्यम् ॥ १८ ॥ त्रिगुणात्मकत्वमिति। तत्र तावद् ज्ञानं द्विविधमागमोत्थं विवेकजञ्च, तदिह तावदागमोत्थमेव ज्ञानन्त्रिविधं वक्तव्यमिति प्रतिज्ञातमित्याशयः। तद्यथा, आगमोत्थं विवेकोत्थं द्विधा

ने यथावच्छृणु तान्यपि॥१९॥ सर्व्वभूतेषु येनै-
कं भावमव्ययमीक्षते । अविभक्तं विभक्तेषु
तज्ज्ञानं विद्धि सात्विकम् ॥ २० ॥ पृथक्त्वेन
तु यद्ज्ञानं नानाभावान्पृथग्विधान् । वेत्ति
सर्व्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ॥ २१ ॥
यत्तु कृत्स्नवदेकस्मिन्कार्ये सक्तमहेतुकम् ।
अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम् ॥२२॥
नियतं सङ्गरहितमरागद्वेषतः कृतम् । अफ-

गुणभेदतस्त्रिधैव प्रोच्यते तान्यपि यथावच्छृण्वित्यर्थः ॥ १९ ॥ एवमिह ज्ञानस्य कर्मणः कर्तुश्च प्रत्येकं त्रैविध्यम्पुनर्वक्तुमाह । सर्वभूतेष्विति । एवन्तर्हि समष्टि-व्यष्ट्यात्मकेषु सर्वेषु भूतेषु विभक्तेष्वविभक्तमव्ययमेकमेवाद्वितीयं भावं येनेक्षते तज्ज्ञानं सात्विकम्विद्धीत्यर्थः ॥ २० ॥ एवम्प्रकारान्तरेणाप्याह । पृथक्त्वेनेति । तत्रेत्थंसति यस्तु सर्वेषु भूतेषु नानाभावान्पृथग्विधान्वेत्ति तस्य तज्ज्ञानं राजसम्वि-द्धीत्यर्थः॥२१॥ एवन्तामसन्तृतीयमप्याह । यत्त्विति । तत्रैवंसति सर्वेषु भूतेषु वि-द्यमानेष्वप्येकस्मिन्नेव कार्ये विकारभूते देहे प्रतिमादौ वाहेतुकं हेतुरुपपत्तिस्तद्रहितं कृत्स्नवत्परिपूर्णवत्सक्तमेतावानेवात्मेश्वरो वा नातः परमस्तीति परिच्छिन्नभावेन लग्नमतत्त्वार्थवदल्पञ्च न तु सर्वभावेनेति तत्तादृशं समुदाहृतमित्यर्थः ॥ २२ ॥ तदेवं ज्ञाने त्रैविध्यमुक्त्वा कर्मण्यपि त्रैविध्यमाह । नियतमिति । तत्र तावत्तद्ब्रमन-श्शम्भुपदारविन्दयोरित्यादिस्मृतिन्यायेनात्मार्पणबुद्ध्या नियतं तथा रागद्वेषाभ्यां

---

ज्ञानं तदुच्यते यद्ब्रह्मागममयं परब्रह्मविवेकजमित्यादिस्मृत्या विवेक्तव्यम्॥१९॥ देहेप्रतिमादौ वेति । तत्रैवंसति यथा गुरौ नृबुद्धिश्च मन्त्रे ष्वप्यर्णबुद्धिश्च प्रति-मासु शिलाबुद्धिकुर्वन्तो यान्त्यधस्तम इत्यादिस्मृत्या गुर्वादिदेहे प्रतिमादौ च देवबुद्धिरेवोचिता तत्र तु शिलादिबुद्धिं कुर्वन्त एव जडबुद्धयः । तद्यथा, शिला-दौ देवतां मत्वा पूजयन्ति विधानतः जडत्वं येन मन्यन्ते तएव जडबुद्धय इ-त्यादिस्मृत्या स एव तस्मिन्नेव सर्वत्रैवेति मत्वा मन्दमध्यमोत्तमैः त्रिविध-

लप्रेप्सुना कर्म यत्तत्सात्त्विकमुच्यते ॥ २३ ॥
यत्तु कामेप्सुना कर्म्म साहङ्कारेण वा पुनः ।
क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥२४॥
अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषम् ।
मोहादारभ्यते कर्म यत्तत्तामसमुच्यते ॥ २५ ॥
मुक्तसङ्गोऽनहम्वादी धृत्युत्साहसमन्वितः ।
सिद्ध्यसिद्ध्योर्न्निर्व्विकारः कर्त्ता सात्त्विक उच्यते ॥ २६ ॥ रागी कर्म्मफलप्रेप्सुर्लुब्धो हिंसात्मको ऽशुचिः । हर्षशोकान्वितः कर्त्ता राजसः परिकीर्त्तितः ॥ २७ ॥ अयुक्तः प्राकृ-

रहितत्वात्सङ्गरहितम्फलेप्सारहितत्वेन कृतञ्चेत्कर्म यत्तत्सर्वेष्टफलप्रदत्वात्सात्त्विकमुच्यतइत्यर्थः॥२३॥ इदानीन्तु कर्मण्येव राजसभेदमप्याह । यत्त्विति । तत्रैवंसति यत्कर्मकामेप्सुना साहंकारेण वा पुनर्बहुलायासं यथा स्यात्तथा क्रियेत तद्राजसमुदाहृतमित्यर्थः॥२४॥एवन्तत्र तामसमप्याह। अनुबन्धमिति। तथा चेहानुबन्धं पश्चाद्भाव्यशुभं क्षयं च शरीरादर्शनं तथा हिंसां पीडां पौरुषञ्चानपेक्ष्य कृतां प्राणिपीडां तथा केवलमोहाद्दविवेकतो यदारभ्यते कर्म तत्तामसमुच्यतइत्यर्थः॥२५॥ तत्र तावदिह ज्ञानकर्मणोस्त्रैविध्यमुक्त्वा कर्तर्यपि त्रैविध्यमाह। मुक्तसङ्ग इति। तत्रैवंसत्यहंकारशून्येनाहंवादी धृत्युत्साहसमान्वितश्च फलाभिसन्धिरहितत्वेन सिद्ध्यसिद्ध्योश्च समं वीक्षमाणः कर्ता सात्विक उच्यते कथ्यतइत्यर्थः ॥ २६ ॥ एवमिह प्रकारान्तरेण पुनः कर्तुर्भेदमाह । रागीति । तत्रैवंसति कर्मफलेच्छुः कामाद्याकुलितत्वेन रागी

---

भेदेन पूज्यत्वमवधार्यम् ॥ २२ ॥ २३ ॥ २४ ॥ पौरुषञ्चानपेक्ष्येति । तद्यथा, विद्याविवादाय धनं मदाय शक्तिः परेषां परपीडनाय । खलस्य साधोर्विपरीतमेतद् ज्ञानाय दानाय च रक्षणायेत्यादिस्मृत्युक्तरीत्या कर्त्तव्यं तदनपेक्ष्य कृतमित्याशयः ॥ २५ ॥ अहङ्कारशून्यत्वेनेति । तथाहङ्कारशून्यत्वञ्चेत्थं शुभं त्वीश्वरकृतमशुभं दग्धमत्वात्मना कृतमित्येवं न्यायेनाहङ्कृतिं भक्तियोगेन त्यजे-

तः स्तब्धः शठो नैष्कृतिको ऽलसः । वि-
षादी दीर्घसूत्री च कर्त्ता तामस उच्य-
ते ॥ २८ ॥ बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिवि-
धं शृणु । प्रोच्यमानमशेषेण पृथक्त्वेन धन-
ञ्जय ॥ २९ ॥ प्रवृत्तिञ्च निवृत्तिञ्च कार्य्या-
कार्य्ये भयाभये । बन्धं मोक्षञ्च या वेत्ति

लुब्धत्वेन हिंसात्मको ऽशुचिर्हर्षशोकान्वितश्च कर्ता राजसः परिकीर्तित इत्यर्थः॥२७॥
एवमेवेह तामसत्वेनापि तृतीयं कर्तारमाह । अयुक्त इति । एवं सति सर्वदा वि-
षयापहृतचित्तत्वेनायुक्तस्तथा शास्त्रासंस्कृतबुद्धित्वेन प्राकृतो गुरुदेवतादिष्वनम्र-
त्वेन स्तब्धः शठश्च तथैवानुपकारित्वेन नैष्कृतिको ऽलसो विषादी च एवमिह
यद्दिवसैः कर्तव्यन्तन्मासेन करोतीति दीर्घसूत्री चेत्येवंरूपः कर्ता तामस एवो-
च्यतइत्यर्थः ॥ २८ ॥ एवमिदानीमध्यवसायरूपाया बुद्धेश्शुभसहकारित्वेन तत्र
धृतेश्च त्रैविध्यमाह । बुद्धेरिति । तत्र तावदन्तःकरणस्य मनोबुद्धिचित्ताहंकाररू-
पत्वेन चतुर्विधत्वमुक्तन्तथापीह बुद्धेस्सर्वव्यवहारनिश्चायकत्वेन धृतेश्च तत्सहका-
रित्वेनावश्यकत्वाद् बुद्धेर्धृतेश्च भेदकथनेनैवाशेषेण पृथक्त्वेन वा गुणतस्त्रिविधं भेदं
हे धनञ्जय शृण्वित्यर्थः ॥ २९ ॥ तदिदानीन्तावद् बुद्धेस्त्रैविध्यमाह । प्रवृत्ति-
मिति । तत्र तावत्कर्मणैवान्तःकरणशुद्धिद्वारा ज्ञानसिद्धिरिति प्रवृत्तिपूर्विकैव
स्वतो निवृत्तिरिति स्थिते तत्र तयोः प्रवृत्त्योर्ज्ञात्री तत्र स्वस्वजात्यनुसारेण का-

दिति भावः ॥ २६ ॥ २७ ॥ प्राकृत इति । तत्र तावदिहामुत्र फलं लोके केव-
लमपि च ध्रुवं, गुरुदेवतभक्तानां सर्वेषां सुलभम्भवेदित्यादिस्मृत्या गुर्वादीनां
भक्तेरावश्यकत्वे स्थिते तद्विमुखानाम्प्राकृतत्वमेव स्फुटीकृतम् । एवमात्मनाम
गुरोर्नाम नामातिकृपणस्य च, श्रेयस्कामो न गृह्णीयात् ज्येष्ठापत्यकलत्रयोरि-
त्यादिस्मृत्या ऽऽत्मप्रभृतीनां नामग्रहणे स्फुटतरं निश्शठस्यातिकृपणस्य नामग्रहणे
ऽवतिपातकोत्पत्तिरिति तदपि नोचितमित्याशयः॥२८॥ अध्यवसायरूपेति । तत्र
तावदध्यवसायश्चिदहामुत्रादिविवेकशालिनी बुद्धिरध्यवसायरूपेत्यर्थः ॥२९॥ प्रवृ-
त्तिपूर्विकैवेति । अन्यथा तु तत्र कर्तृत्वाभिमानयुक्तत्वे नाशुद्धचित्तत्वादात्मदर्शित्वाभावेन

बुद्धिस्सा पार्थ सात्त्विकी ॥ ३० ॥ यया ध-
र्म्ममधर्म्मञ्च कार्य्यञ्चाकार्य्यमेव च । अय-
थावत्प्रजानाति बुद्धिस्सा पार्थ राजसी ॥३१॥
अधर्म्मं धर्म्ममिति या मन्यते तमसावृता ।
सर्व्वार्थान्विपरीतांश्च बुद्धिस्सा पार्थ ताम-
सी ॥ ३२ ॥ धृत्या यया धारयते मनः प्रा-
णेन्द्रियक्रियाः । योगेनाव्यभिचारिण्या धृ-

र्याकार्ये व्यवसायिका च कपूयचरणाः कपूयां योनिमापद्यन्तइत्यादिश्रुत्यनुसारेण भयाभये च विचारशालिनीत्यर्थः । एवं प्रवृत्तिमार्गे मिथ्याज्ञानकृतं कर्तृत्वाभिमानयुक्तं बन्धं निवृत्तिमार्गे तु तत्वज्ञानकृतं मोक्षञ्च या वेत्ति हे पार्थ सा सात्त्विकीत्यर्थः ॥ ३० ॥ एवं यथोक्तां बुद्धिं राजसीमप्याह । ययेति । तत्र तावद्धर्ममधर्मञ्च कार्याकार्यञ्च व्यावहारिकमेव विजानाति न तु कैवल्यप्रदं तात्त्विकं ज्ञानमित्ययथावद्ज्ञानाद्बुद्धिस्सा राजसीत्यर्थः ॥ ३१ ॥ एवमेव तामसीमप्याह । अधर्ममिति । तत्रैवंसत्यन्यथा विद्यते शास्त्रं जनाः क्लिश्यन्ति चान्यथेत्यादिस्मृतिन्यायेनाधर्ममेव धर्मं मन्यमाना मुद्राजटारचनमौण्ड्यव्रतान्यथैवेत्याद्युक्तान्सर्वानर्थमूलाञ्छ्रुतिस्मृतिविपरीतान्या तमसावृताबुद्धिर्मन्यते सा तामसीत्यर्थः ॥ ३२ ॥ तदिदानीं धृतेरपि त्रैविध्यमाह । धृत्येति । तत्रैवंसति योगेन समाधिना निरन्तरसमाधिव्याप्तत्वेनाव्यभिचारिण्या यया धृत्या प्रयत्नेन मनसः प्राणस्येन्द्रियाणाञ्च -

---

मुक्तिरेव न स्यादिति भावः । मिथ्याज्ञानकृतमिति । किन्तु न प्राणो नो शरीरं हि नो मनो बुद्धिरेव च नाहङ्कारो भवेदात्मा प्रतिमात्रः परश्शिव इत्यादिस्मृत्या यस्त्वयि तिष्ठन्त्वं त्वं न विजानासि यस्य त्वमेव शरीरमित्यादिश्रुतिवेद्यस्य तमात्मानं या वेत्तीत्याशयः ॥ ३० ॥ ३१ ॥ मुद्राजटेति । ननु कथमेषां निरयगामित्वमिति चेच्छृणु । गृहस्थो हि तजन्मादिगृहस्थस्यानुसेवकः, गृहस्थो हि तमत्रादिगृहस्थो हतभूमिकः गृहस्थदारसेवी च गृहस्थस्यानुनिन्दकः गृहस्थात्सङ्ग्रही सोयञ्चाधमो हि निदण्डभागित्यादिना गृहस्थेष्वपि तप्तमुद्राङ्किता निरयगामिन एवेत्यधिकमन्यत्र विस्तरः ॥ ३२ ॥ अव्यभिचारिण्येति । तद्यथा, स-

तिस्सा पार्थ सात्विकी ॥ ३३ ॥ यया तु ध-
र्मकामार्थान्धृत्या धारयते ऽर्जुन । प्रसङ्गे-
न फलाकाङ्क्षी धृतिस्सा पार्थ राजसी ॥३४॥
यया स्वप्नं भयं शोकं विषादं मदमेव च ।
न विमुञ्चति दुर्म्मेधा धृतिस्सा पार्थ ताम-
सी ॥ ३५ ॥ सुखं त्विदानीं त्रिविधं शृणु
मे भरतर्षभ । अभ्यासाद्रमते यत्र दुःखान्त-

क्रियाश्रेष्टा धारयते स बाह्याभ्यन्तरयोगाभ्यां निरुणद्धि यस्याञ्च सत्यामवश्यं स-
-माधिर्भवति यया च धार्यमाणा मनआदिक्रियाश्शास्त्रमनतिक्रम्य नार्थान्तरमव-
गाहन्ते धृतिस्सापार्थ सात्विकीत्यर्थः ॥ ३३ ॥ एवम्प्रकारान्तरेणापि तामाह । यया
त्विति । तदिह यया धृत्या मोक्षं धारयन्नपि तत्प्रसङ्गेन धर्मं काममर्थञ्च धार-
यते नित्यं कर्तव्यतयावधारयति न तु कैवल्यं कदा चिदपीति धृतिस्सा पार्थ
राजसीत्यर्थः ॥ ३४ ॥ एवमिह तामसीमप्याह । ययेति । एवंसति स्वप्नं निद्रां
भयं त्रासं शोकमिष्टवियोगनिमित्तं संतापं विषादमिन्द्रियावसादं मदञ्चाशास्त्रीय-
त्वेन सेवोन्मुखत्वञ्च यया धृत्या विवेकासमर्थो दुर्मेधा न विमुञ्चति हे पार्थ धृ-
तिस्सा तामसीत्यर्थः ॥ ३५ ॥ एवं क्रियाकारणं तत्करणस्य च त्रैविध्यमुक्त्वा
तत्फलस्यापि त्रैविध्यम्वक्तुम्प्रतिजानीते । सुखमिति । तत्र तावद्धर्मस्मृत्या प्रतिज्ञा
तदर्द्धरूपया च यत्र समाधिसुखे ऽभ्यासादतिपरिचयाद्रमते ऽतितृप्तो भवति ननु

---

व्यासनस्थो थ परिव्रजत्वा मुक्तः परिक्षीणवितर्कजालः, संसारबीजक्षयभीक्षमा-
णस्याधिव्यमुक्तो ऽमृतभागभोगीत्यादिस्मृत्युक्तरीत्या अव्यभिचारिण्या यया धृ-
त्येत्यर्थः ॥ ३३ ॥ कदाचिदपीति । तदुक्तं स्मृतिसारे, तद्यथा, धर्मादर्थश्च काम-
श्चेत्येवं येषां विनिश्चयः कैवल्यं नाभिजानन्ति राजसा लौकिका जना इत्या-
द्युक्तरीत्या मोक्षपर्य्यन्तं नाभिजानन्तीत्यर्थः ॥ ३४ ॥ ३५ ॥ ननु विषयसुखमि-
वेति । तथयोक्तम् पुराणान्ते श्मशानान्ते मैथुनान्ते च या मतिस्सा मतिस्थि-
रतामिति को न मुच्येत सङ्कटादित्यवधार्य्यम् । तदिदमिति । एवंसति तदिदमन्न-
न्नसुखं न तादृशमित्यर्थः । किन्तु सर्व्वा एव कला जन्तोरनभ्यासेन नश्यति इयं

**च निगच्छति ॥ ३६ ॥ यत्तदग्रे विषमिव परिणामे ऽमृतोपमम् । तत्सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥ ३७ ॥ विषयेन्द्रियसंयोगाद्यत्तदग्रे ऽमृतोपमम् । परिणामे विषमिव तत्सुखं राजसं स्मृतम् ॥ ३८ ॥ यदग्रे चानुबन्धे च सुखं मोहनमात्मनः । निद्रालस्यप्रमादोत्थन्तत्तामसमुदाहृतम् ॥ ३९ ॥ न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः । सत्त्वं प्रकृतिजैर्मुक्तं यदेभिस्स्यात्त्रिभिर्गुणैः ॥ ४० ॥ ब्राह्मणक्षत्रियविशां शूद्राणां च**

विषयसुखमिव दुःखान्तं निगच्छतीति तदिदमित्यर्थः ॥ ३६ ॥ एतदेव पुनर्विशेषेण विवृणोति । यत्तदग्र इति । तत्रैवं सत्यादौ यमनियमाद्यभ्यासारम्भे विघ्नबाहुल्याद्विषमिवोपशमविशेषावहं भवति परिणामे तु योगसिद्धावमृतोपमं प्रीत्यतिशयास्पदं भवतीति तत्सुखं बुद्धिप्रसादजत्वात्सात्त्विकम्भवतीति भावः ॥ ३७ ॥ तथैवेदानीं राजसमप्याह । विषय इति । तत्र तावद्विषयेन्द्रियसंयोगात्स्रक्चन्दनवनितासङ्गादिजातं सुखमग्रे प्रथमारम्भे ऽमृतोपमं भवति परिणामे तु तद्विषमिवेति तद्राजसं सुखमित्यर्थः ॥ ३८ ॥ एवं तृतीयं तामसमप्याह । यदग्रइति । तत्र तावदग्रे प्रथमारम्भे तथानुबन्धे परिणामे च यज्जीवात्मनो मोहकरं सुखन्तन्निद्रालस्यप्रमादोत्थं तत्तामसं सुखमुदाहृतमित्यर्थः ॥ ३९ ॥ तदिदानीमनात्मजातं त्रिगुणत्वेन संगृह्णाति । न तदस्तीति । तत्रैवंसति प्रकृतिर्माया तत्प्रकृतिजैस्त्रिभिरेभिर्गुणैर्बन्धनहेतुभिर्मुक्तं हीनं सत्वं प्राणिजातमप्राणि वा यत्स्यात्तत्पुनः पृथिव्यां मनुष्यादिषु देवेषु वा नास्ति क्वापि गुणत्रयरहितमित्यर्थः ॥ ४० ॥

---

ज्ञानकलावन्तस्संकल्पजातापि वर्द्धत इत्यादियोगवाशिष्ठेऽपि द्रष्टव्यम् ॥ ३६ ॥ ॥ ३७ ॥ ३८ ॥ नास्ति क्वापीति । तद्यथा, तदेतत्सकलम्विश्वञ्च पञ्चयमयं किल निस्त्रैगुण्यं भवेत्तदै यन्नु यैर्नो विचार्यतद्ध्वति ज्ञानस्वरोदयेपि द्रष्टव्यम् ॥ ३९ ॥ ४० ॥

परन्तप । कर्माणि प्रविभक्तानि स्वभाव-
प्रभवैर्गुणैः ॥ ४१ ॥ शमो दमस्तपः शौचं
क्षान्तिरार्ज्जवमेव च । ज्ञानं विज्ञानमास्तिक्यं
ब्रह्मकर्म्म स्वभावजम् ॥ ४२ ॥ शौर्य्यं तेजो
धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् । दानमी-

ननु सर्वस्य त्रिगुणात्मकत्वे स्थिते ब्राह्मणादिषु कथं तत्त्वम्वर्णनीयमित्याह । ब्राह्मणेति । तत्र तावद्ब्राह्मणस्वभावस्य प्रशान्तत्वेन सत्वगुणप्रभवत्वं क्षत्रियस्वभावस्य प्रवृत्तिविषयत्वेन सत्वोपसर्जनरजःप्रभवत्वं वैश्यस्वभावस्य चलाचलवृत्तित्वेन रजस्त्वोपसर्जनतमःप्रभवत्वं शूद्रस्वभावस्य च मूढवृत्तित्वेन केवलतमःप्रभवत्वमिति ब्राह्मणादीनां स्वभावप्रभवैर्गुणैः कर्माणि प्रविभक्तानीत्यर्थः ॥ ४१ ॥ ननु तावद्ब्राह्मणस्य स्वाभाविकानि कानि तर्हि गुणकृतानि कर्माणीत्याह । शम इति । तत्र तावच्छमो नामान्तःकरणस्य विषयेभ्यस्तूपरमो दमो नाम बाह्येन्द्रियोपरमः तपस्तु देवद्विजगुरुप्राज्ञेत्यादावुक्तन्तथा शौचमपि बाह्याभ्यन्तरभेदेनोक्तम्, एवं क्षान्तिः क्षमा तथार्जवमकौटिल्यमप्युक्तमेव एवं ज्ञानं साङ्गवेदाध्ययनन्तत्कौशल्यञ्च विज्ञानम्ब्रह्मात्मैक्यानुभवः सात्विकी श्रद्धा चास्तिक्यमित्यादि नवकम्ब्रह्म ब्राह्मणजातेः कर्म स्वभावजमित्यर्थः ॥ ४२ ॥ एवं क्षत्रियस्यापि स्वगुणकर्माणि स्वभावजान्याह । शौर्यमिति । तत्र तावच्छौर्यम्पराक्रमो ऽधर्मनिरतशत्रुर्भाग्येनैव तु लभ्यतइत्यादिस्मृतिन्यायेन बलवत्तरानपि प्रहर्तुं सामर्थ्यम् । एवन्तेजःप्रागल्भ्यं धृतिर्धैर्यं दाक्ष्यं दक्षता युद्धे चाप्यपलायनमपराङ्मुखीभाव इत्यर्थः । एवं

---

नन्वेवं सत्वगुणास्यापि तदन्तर्गतत्वमेवेति कथन्तस्य प्राशस्त्यमित्यतो विवेचयन्नाशङ्कते ॥ नन्विति ॥ तत्र तावद्यद्यपि सत्वगुणस्यापि तत्वमेव तथापि तत्र विमलसत्वस्य ब्रह्मविद्योपयोगित्वेन निस्त्रैगुण्यसम्पादकत्वमेवेति ब्राह्मणादीनान्तस्य गरिष्ठत्वमवधार्य्यम् ॥ ४१ ॥ स्वाभाविकानीति । तदेतच्छ्रुतिरप्याह, तद्यथा, तमेव धीरो विज्ञाय प्रज्ञाङ्कुर्वीत ब्राह्मणो नानुध्यायेद्बहूं्छब्दान्वाचो विग्लापनं हि तदित्यादि बृहदारण्यकेऽपि द्रष्टव्यम् ॥ ४२ ॥ प्रजापालनसामर्थ्यमिति । तद्यथा । प्रजाकरं ददात्यद्दा पुत्रो भीत्ता प्रसिद्धितः । पुत्रेभ्यस्त्वधिकस्तस्मात्प्रजा नैवात्र संशय इत्यादिस्मृत्यापि क्षत्रियापाल्लदन्ये पाश्च राजधर्मर्षताश्विप्राज्ञ्या प्रजापा-

स्वभावश्च क्षात्रं कर्म्म स्वभावजम् ॥ ४३ ॥
कृषिगोरक्ष्यवाणिज्यं वैश्यकर्म्म स्वभावज-
म् । परिचर्य्यात्मकं कर्म्म शूद्रस्यापि स्वभा-
वजम् ॥ ४४ ॥ स्वे स्वे कर्म्मण्यभिरतस्सं-
सिद्धिं लभते नरः । स्वकर्म्मनिरतस्सिद्धिं यथा
विन्दति तच्छृणु ॥ ४५ ॥ यतः प्रवृत्ति-

दानं स्ववित्तानुसारेण देवपरत्वन्तथेश्वरभावः प्रजापालनसामर्थ्यमित्यादि क्षात्रं कर्म क्षत्रियजातेस्स्वभावजं सत्वोपसर्जनरजोगुणस्वभावजमित्यर्थः ॥ ४३ ॥ एवम्वैश्यस्यापि वृत्तमाह । कृषीति । तत्र तावत्कृषिर्नामान्नोत्पत्त्यर्थं भूमेर्विलेखनम्, एवं गोरक्ष्यं पशुपालनं वाणिज्यन्तु क्रयविक्रयादिलक्षणमित्यादि रजस्त्वोपसर्जनतमस्स्वभावजमित्यर्थः । एवमिह शूद्रस्याप्याह । परिचर्येति । तदिह तावत्परिचर्यात्मकं द्विजातिशुश्रूषात्मकं कर्म शूद्रस्यापि स्वभावजं केवलतमस्स्वभावजमित्यर्थः ॥ ४४ ॥ ननु स्वस्वजात्यनुसारेणैतावन्ति कर्माणि कुर्वतः किम्फलमित्याह । स्वेस्वेति । तत्रैवं सति सर्वएते पुण्यलोका भवन्ति ब्रह्मसंस्थोऽमृतत्वं यान्तीत्यादिश्रुत्या कुटीचको गृहस्थस्स्याद्ब्रह्मचारी बहूदकः, वानप्रस्थोथ हंसस्स्यात्परहंसस्तु ज्ञानवानित्यादिस्मृत्या चतुर्विधवर्णधर्मेष्वेवाश्रमधर्मोपि ब्रह्मर्षिराजर्षिगणसेवितस्तेन च कथमिहामुत्रकैवल्यान्तसिद्धिरिति तामपि सिद्धिं यथा विन्दति तत्तस्माच्छृण्वित्यर्थः ॥ ४५ ॥ नन्विह स्वीयधर्मपूर्विकैव प्रवृत्तिरुक्ता

---

लनमवश्यमेव युक्तम् । एतदुक्तं भारते, श्रुतिस्मृतिपुराणानि सेतिहासादिकान्यपि । द्विजस्य शूद्रमुखाच्छ्रुत्वा सचैलं स्नानमाचरेदित्यवधार्य्यम् ॥ ४३ ॥ परिचर्य्यात्मकमिति । तद्यथा, परिचर्यास्विच्छायाथ यश्शूद्रो विजितेन्द्रियस्तपश्चर्य्यापरो मूढो निरयं यात्यसंशयमित्यादिशास्त्रसारेपि द्रष्टव्यम् ॥ ४४ ॥ सर्व्व एतद्दति । तद्यथोक्तमनुस्मृतिसारेपि । योयद्धर्मैरनुष्ठेयस्तत्तद्धर्मानुगागतिः । ब्रह्मचर्याद्यनुक्रान्त्याद्वैर्योगादिवत्खल्वित्युक्तो तथोत्तमाधमजातीनां सर्व्वासामिह सुखलोकेषु नैकैव गतिः किन्तु यथा ज्योतिषि ब्राह्मणेषु राजयोगसम्भवत्वाधिक्याद्राजमान्यत्वं स्वतो वा राजत्वं तथा क्षत्रियेषु तद्योगात्सुतरां राजत्वम्वैश्येषु तु ध-

भूतानां येन सर्व्वमिदं ततम्। स्वक-
र्म्मणा तमभ्यर्च्य सिद्धिम्विन्दति मान-
वः॥ ४६॥श्रेयान्स्वधर्म्मो विगुणः परधर्म्मा-
त्स्वनुष्ठितात्। स्वभावनियतं कर्म्म कुर्व्वन्ना-
प्नोति किल्बिषम्॥ ४७॥ सहजं कर्म्म कौ-
न्तेय सदोषमपि न त्यजेत्। सर्व्वारम्भा हि-

तया च कथं कैवल्यात्तस्य सिद्धिरित्याह। यत इति। तथा चेह संसारे यतो भूतानाम्प्रवृत्तिर्येन चेश्वरेण साक्षिणा सर्वमिदन्ततं तमिह सकलेष्टसिद्धिप्रदं परमशिवं ज्ञातुमिच्छा चेत्तदा स्वस्वधर्ममार्गेण समर्च्योर्वारुकमिवेतिश्रुतिन्यायेन सिद्धिं विन्दति नान्यथेत्याशयः॥ ४६॥ नन्वज्ञानाज्जानतोपि वा केनाप्यपूर्वेण जात्यन्तरधर्मेण संचरन् किं सिद्धिं यास्यति, नैवमित्याह। श्रेयानिति। तत्रैवं सति परधर्मात्स्वनुष्ठितादपि स्वधर्मो विगुणः किञ्चिन्न्यूनोपि श्रेयानित्यर्थः यतस्स्वभावनियतन्तपश्शौचादिकं कर्म शास्त्रोक्तञ्च कुर्वन्किल्बिषं नाप्नोतीत्यर्थः॥ ४७॥ अथ यथोक्तमेवावश्यकत्वादवधारयन्नाह। सहजमिति। तत्रैवं सति हे कौन्तेय सहजं स्वभावजं यथोक्तं कर्म सदोषमपि किञ्चिन्न्यूनमपि न त्यजेत्स्वधर्मस्यान्तःकरणशुद्ध्युपयोगित्वादिति भावः। नन्वेतावतापि हिंसादियुक्तमपि न त्यजेदित्यत्र

---

नाव्यत्वं शूद्रेषु राजसेवकत्वं शूद्रेष्वाधिपत्यादि विवेक्तव्यम्॥४५॥ सकलेष्टसिद्धिप्रदमिति। तद्यथा, अत्याश्रमोयमाख्यातो यतस्सर्वाश्रमी गृही, त्रयोप्यत्रैव बोद्धव्या ब्रह्मचर्यादयोप्यमीति पर्यवसितं कुटीचको गृहस्थः स्याद्ब्रह्मचारी बहूदको, वानप्रस्थोऽथहंसः स्यात्परहंसस्तु ज्ञानवानित्याद्युक्त्या गार्हस्थ्याश्रमस्यैव वेदप्रणीतत्वेन सकलेष्टसाधकत्वं स्फुटीकृतम्। अत एव देवोपासनया दैवं पैत्रन्तु पुत्रतो जयेद्व्रतोपासनया त्वार्षं त्रिभिस्तु परमं जयेदित्यादिना मनुनाप्युक्तमवधार्यम्॥४६॥किञ्चिन्न्यूनोपीति। तत्तज्जातिविशेषेण किञ्चिन्न्यूनोपि यो धर्मः स एव कार्यो न तद्विपरीतङ्कुर्य्यादित्यर्थः। तद्यथा पुराणसमुच्चये। असतां प्रग्रहो यत्र सतां चैवावमानता। दण्डो देवकृतस्तत्र सद्यः पतति दारुण इत्यादिना दक्षयज्ञप्रमथनवृत्तान्तेनापि द्रष्टव्यम्॥ ४७॥ नन्विह सर्व्वस्य प्रपञ्चजातस्य त्रिगुणात्मक-

दोषेण धूमेनाग्निरिवावृताः ॥ ४८ ॥ अस-
क्तबुद्धिस्सर्व्वत्र जितात्मा विगतस्पृहः । नै-
ष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छ-
ति ॥ ४९ ॥ सिद्धिं प्राप्तो यथा ब्रह्म तथा-
प्नोति निबोध मे । समासेनैव कौन्तेय

को हेतुरित्याह । सर्वेति । तथा चेह त्यजेदेवेति तवाग्रहस्तर्हि सत्वादित्रिविध-स्यापि गुणस्य प्रकृतिजन्यत्वेन मूलप्रकृतिमेव त्यजेदिति धूमेनाग्निरिव सर्वकर्मणां त्रैगुण्येन प्रकृतिजदोषेणावृतत्वात्किमपि त्वया न कार्यन्तस्य चाशक्यत्वादिति सिद्धान्तः ॥ ४८ ॥ नन्वेवं सर्वकर्मणां त्यागासमर्थस्तथा कामनया कुर्वतस्तु फ-लाभिसन्धिना बन्ध एवेति किं कुर्यादित्याह । असक्तेति । तत्रैवंसति श्रुतिस्मृ-तिविहितं कर्म कुर्वाणश्शुद्धान्तःकरणस्सन् शान्तोदान्तास्तितिक्षुस्समाहितो भूत्वात्म-न्येवात्मानं पश्येदित्यादिश्रुत्या शब्दस्पर्शादिषु सर्वत्रासक्तबुद्धिस्सन्जितात्मा वि-गतस्पृहश्च भूत्वा नैष्कर्म्यसिद्धिं ब्रह्मसाक्षात्कारयोग्यतां निस्त्रैगुण्यलक्षणां परमां संन्यासेन यथोक्तरीत्या फलाभिसन्धिरहितेन कर्मणाधिगच्छतीत्यर्थः ॥ ४९ ॥ ननु कथन्तर्हि नैष्कर्म्यसिद्ध्युत्तरम्ब्रह्म प्राप्नोतीत्याह । सिद्धिमिति । एवं सति हे कौ-न्तेय नैष्कर्म्यसिद्धिं प्राप्तो यथा शिवमद्वैतम्भूमात्मानम्प्राप्नोति तथा तत्प्रकारं मे वच-नात्समासेनैवावधारय या च ज्ञानस्य ज्ञातव्यस्य निष्ठा परा यदन्तरं ज्ञातव्यं नास्तीति

---

त्वेऽस्थिते तत्वेन किमपि न कार्य्यमित्याग्रहश्चेत्तर्हि तस्याशक्यत्वेनाह । सिद्धा-न्त इति । एवन्तर्हि तामसाद्राजसं श्रेष्ठं राजसात्सात्विकं मतं सात्विकाच्च प-रं किं छिद्यतः कैवल्यभाग्भवेदित्यादिस्मृत्या तावत्कैवल्याद्युपयोगित्वेन सात्वि-कमेव कार्य्यं तच्चाशक्यश्चेद्दिव्यसुखसाधकं राजसन्तत्राप्यशक्तश्चेत्कामहेतुकं-त्तामसमपीति मातृवच्छ्रुतिःश्रोतृहितैषिणीति न्यायेन किमपि कार्य्यञ्चे-च्छास्त्रोक्तमेव कार्य्यमित्याशयः ॥४८॥४९॥ नैष्कर्म्यसिद्धीति । ननु का तर्हि नै-ष्कर्म्यसिद्धिरिति चेच्छृणु । यस्मिन् कृते न कर्मास्ति कर्त्तव्यन्तत्कृतं यतः । नैष्कर्म्यं तत्समाख्यातं यदुक्तं शास्त्रकोटिभिरित्यादिस्मृत्या यस्मिन् कृते न कि-ञ्चित्कर्म क्रियते तन्मे मनः शिवसङ्कल्पमस्त्वित्यादिश्रुत्या च श्रुतेरिवार्थं स्मृतिर-

तिष्ठा ज्ञानस्य या परा ॥ ५० ॥ बुद्ध्या विशु-
द्धया युक्तो धृत्यात्मानं नियम्य च । शब्दा-
दीन्विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥ ५१ ॥
विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ।
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रि-
तः ॥ ५२ ॥ अहंकारं बलं दर्पं कामं क्रोधं

तामप्यवधारयेत्याशयः ॥ ५० ॥ अथ च सेयं ज्ञाननिष्ठा सव्यवस्थयोच्यते । बुद्धेति । तत्र तावद्बुद्ध्यान्तःकरणवृत्तिविशेषरूपया तया पुनर्विशुद्धया संशयविपर्ययासम्भवशून्यया युक्तस्तथा धृत्या धैर्यरूपयात्मानं शरीरेन्द्रियसंघातं नियम्य शब्दादीन्विषयान् रागद्वेषौ च व्युदस्येत्यर्थः ॥ ५१ ॥ एवमपरमपि तत्प्रकारमाह । विविक्तेति । तथा च विविक्तं जनसंसर्गरहितं शुद्धं देशं सेवितुं शीलं यस्येति स विविक्तसेवीत्यर्थः तथा लघ्वाशीनिद्रालस्यादिरहितत्वाच्च यतवाक्कायमानसो यमनियमादिना ध्यानयोगपरो वैराग्यञ्च नित्यमुपाश्रित इत्यर्थः ॥ ५२ ॥ एवमिहापरमपि तत्प्रकारमाह । अहंकारमिति । तत्रैवंसत्यहं महतां शिष्यः पण्डितो विरक्तश्च नास्ति द्वितीयो मत्सम इत्याद्यभिमानमोऽहंकारो बलञ्चासदाग्रहरूपं तत्र शारीरञ्च दर्पं हर्षजन्यञ्च मदं धर्मातिक्रमणञ्च कामन्तथा योगप्रतिबन्धकञ्च विषयाभिलाषन्तदलाभेन क्रोधं परिग्रहञ्च मनश्चालकं धनादिसञ्चयञ्च

---

न्यगच्छदिति न्यायेन च नैष्कर्म्यलक्षणसिद्धिरित्याशयः ॥ ५० ॥ वृत्तिविशेषरूपयेति। तद्यथा, सङ्घातसहमाधत्ते बुद्धिस्थैर्यं व्रजत्यतः। मनश्चाञ्चल्यवृत्ति स्यात्त्रस्तं स्वानुभवात्मकमिति स्मृत्वा चित्तावस्थापनया विशेषरूपयेत्यर्थः॥ ५१ ॥ लघ्वाशीति। तद्यथा। सुस्निग्धमधुराहारश्चतुर्थांशविवर्जितः। भुज्यते शिवसम्प्रीत्यै मिताहारः स उच्यत इत्यादि द्रष्टव्यम् ॥ ५२ ॥ काममिति। ननु कीदृशी सा कामस्य किमर्थञ्च सा त्याज्येति चेच्छृणु। उन्मीलन्त्रिवलीतरङ्गवलया प्रोत्तुङ्गपीनस्तनद्वन्द्वेनोद्यतचक्रवाकमिथुना वक्त्राम्बुजोद्भासिनी। कन्याकारधरा नदीयमभितः क्रूराशया नेष्यते संसारार्णवमज्जनं यदि ततो दूरेण सन्त्यज्यतामित्यभिप्रायम्। सर्वाभिनिवेशेति। तद्यथा, दूरे मुञ्चति बन्धुमन्धुमिव यः स-

परिग्रहम् । विमुच्य निर्म्ममश्शान्तो ब्रह्म-
भूयाय कल्पते ॥ ५३ ॥ ब्रह्मभूतः प्रसन्ना-
त्मा न शोचति न काङ्क्षति । समस्सर्व्वेषु भूते-
षु मद्भक्तिं लभते पराम् ॥ ५४ ॥ भक्त्या
मामभिजानाति यावान्यश्चास्मि तत्त्वतः ।

विमुच्य सशरीरमिदं विश्वं न किञ्चिदिति निश्चयीत्यादिसिद्धान्तस्मृतिन्यायेना- हं ममेत्यादिसर्वाभिनिवेशवर्जितत्वेन शान्तस्समरसीभूतो ब्रह्मभूयाय कल्पते सम- र्थो भवतीत्यर्थः ॥ ९३ ॥ ननु च स कथंभूतो भवतीति संक्षेपतो वक्तव्यमि- त्याह । ब्रह्मभूत इति । तत्रैवं सति सर्वं सर्वत्र सर्वदेति ब्रह्मभूतस्सन्किमहं नाकरवमित्यादिश्रुत्या न शोचति पूर्णोऽद्वैतसतत्वायेत्यादिस्मृत्यात्मकामत्वान्न काङ्क्षतीति कृत्वा शास्त्रसज्जनसम्पर्को विचारो ऽसङ्गभावनेत्यत्रोक्तसप्तमभूमिका- प्राप्तत्वेन समस्सर्वेषु भूतेष्विति मम परस्पदाख्यां परमशिवैकनिष्ठालक्षणां भक्तिं लभतइत्यर्थः ॥ ९४ ॥ ननु वसत्यद्धा तु सर्वत्रेत्युक्तस्मृतिन्यायेन मम वासुदेवस्य भक्तिं शिरोव्रतेतिनाम्नीम्पाशुपतव्रताख्यां परां लभतइत्याद्युक्तन्तत्रैवं सति तया भक्त्या कथं मां विजानीयादित्याशङ्क्य पुनरुपसंहरति । भक्त्येति । तत्रैवं सती ह सर्वेषामेव भक्तानां शम्भोर्लिङ्गमनुत्तममित्यादिस्मृत्या माम्पाशुपतं यच्च किञ्च जगत्यत्रेत्यादिश्रुत्या यावान्यश्चस्मीति तत्त्वतो वस्तुतो मूलप्रकृतिरूपत्वेन स- र्वात्मना योभिजानाति स एवोन्तत्सदितिनिर्देशोक्त्या तस्यापि मायात्मनो भावो वाच्यं लक्ष्यम्वा ब्रह्मयाथात्म्यं यो वेदादावित्यादिश्रुतिवेद्यन्तद्रूपेणैवाहाङ्गिरोपास-

---

ङ्गाङ्गजन्नादिन्यासं योविदधाति वेत्ति सहस्रं भोगञ्च रोगंच यः,स्त्रैणो यस्तु गव- द्घृणां प्रकुरुते मित्रेष्वमित्रेष्वपि स्वान्तं यस्य समं समङ्गलमिहामुत्रापि मर्त्यो- ऽमुत इत्यादि द्रष्टव्यम् ॥ ५३ ॥ ५४ ॥ अथेद्वाग्निरित्यादिमन्त्रेण भस्मावधारणं रुद्रजपश्चेति शिरोव्रतनाम्नी पाशुपतव्रताख्या भक्तिस्तामेव वक्तुमाशङ्कते। नन्वि- ति। स्मृतिश्च। अशेषोपनिषत्सारो रुद्राध्यायस्समुद्धृतः। तथा पाशुपतं दिव्यं व्रतम्पाशविमोचनम्। तदेतन्मुनिभिः सर्वैर्मरीच्यत्रिपुरोगमैः। सहदेवैर्धृतं ते- भ्यः सद्विद्यां जगृहुश्च ते इत्यादि द्रष्टव्यम्। मूलप्रकृतिरूपत्वेनेति। एतच्च सत्वं

तत्वतो मां ततो ज्ञात्वा विशते तदनन्तरम् ॥ ५५ ॥ सर्व्वकर्म्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः । मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥ ५६ ॥ चेतसा सर्व्वकर्म्माणि मयि संन्यस्य मत्परः । बुद्धियोगमुपाश्रित्य मच्चित्तस्सततं भव ॥ ५७ ॥ मच्चित्तस्सर्व्वदुर्गाणि मत्प्रसादात्तरिष्यसि । अथ चेत्त्वमह-

नया तत्त्वतो मां ज्ञात्वा ततश्च महेश्वरे परे ब्रह्मणि शिवे विशते समरसीभूतो भवतीति भावः ॥ ९९ ॥ ननु च कथं कर्माणि कुर्वाणस्तत्पदाम्विशतइत्याह । सर्वेति । तत्रैवं सति तद्दै मनश्शम्भुपदारविन्दयोरित्यादिस्मृत्युक्तरीत्या सर्वाण्यपि कर्माणि सदा निरन्तरेण कुर्वाणो मत्प्रसादादेव बुद्धिर्मनोहङ्चित्तञ्चेति पञ्चविंशतितत्त्वात्मकात्प्रवृत्तिलक्षणान्मत्तो विशेषेण यतः पृथग्भूत एव जन्ममरणाश्रयो यस्य स मद्व्यपाश्रयस्सन् शाश्वतं निरन्तरमव्ययमविनाशिनम्वैष्णवम्पदमवाप्नोतीत्यर्थः ९६॥ एतदेव पदम्प्राप्तुम्पुनरवधारयन्नाह । चेतसेति । तत्रैवं सति चेतसा सर्वकर्माणि पञ्चविंशतितत्त्वात्मके मयि संन्यस्य बुद्धेः परमात्मानम्विजानन्बुद्धियोगञ्चापाश्रित्य पृथक्कृत्य परम्पदन्तुरीयमवाप्नोतीत्यहमेव हस्तपादादिप्रदत्वेन परं साधनं यस्य स मत्परस्तथा मदुपदेशे शिवैकतत्त्वे चित्तं यस्य स मच्चित्तस्सन्सततं भवेति स्वस्य गुरुत्वमवधारितम् ॥ ९७ ॥ तदेवं न स्वयं ध्यानतः कश्चित्सर्वज्ञस्सिद्धिपारग इत्यादिस्मृतेस्ते तव शिवज्ञानोपदेष्टुर्गुरोरावश्यकत्वमिति निश्चिनोति ।

---

रजस्तमो विष्णो जगदण्डं जनार्द्दन । तस्य कारणमाहुस्त्वां साङ्ख्यास्तत्त्वविदो हरइत्यादिना पूर्वमेव तद्रूपत्वेनोक्तत्वादिति भावः ॥ ५५ ॥ पृथग्भूतइति । प्रवृत्तिलक्षणो धर्मो वासुदेवात्समीरित इत्याद्यप्युक्तत्वादित्यवधार्यम् ॥ ५६ ॥ अहमेवेति । तत्रैवं सति सृजत्येतज्जगत्सर्वं विष्णुस्तत्पश्यतीश्वरः । इत्थं जगत् सर्वमिदं रुद्रनारायणोद्भवमित्यादि कूर्मस्मृत्या विष्णोर्ज्जगत्कर्तृत्वेन प्राणिनां हस्तपादादिप्रदत्वेन शिवज्ञानेन मोक्षोपकारित्वमिति प्रवृत्तिपूर्विकैव निवृत्तिरप्यत्रगतेति भावः ॥ ५७ ॥ पुरुषार्थाद् भ्रष्ट इति । यतो न स्वयं ध्यानतः कश्चि-

ङ्कारान्न श्रोष्यसि विनङ्क्ष्यसि ॥ ५८ ॥ यदहङ्कारमाश्रित्य न योत्स्यइति मन्यसे । मिथ्यैव व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ॥ ५९ ॥ स्वभावजेन कौन्तेय निबद्धस्स्वेन कर्म्मणा । कर्त्तुं नेच्छसि यन्मोहात्करिष्यस्यवशोपि तत् ॥ ६० ॥ ईश्वरस्सर्व्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन्सर्व्व-

मच्चित्त इति । तत्रैवं सति मच्चित्तस्सन्सर्वदुर्गाणि दुस्तराणि संसारदुःखानि यदुपदेशप्रसादात्तरिष्यसीत्यर्थः । अथ चेद्यदि तु त्वं मदुक्ते विश्वासमकृत्वा ऽहंकारात्पण्डितोहमिति गर्वान्न श्रोष्यसि ततो विनङ्क्ष्यसि सदाशिवमप्यजानन्पुरुषार्थाद् भ्रष्टो भविष्यसीत्यर्थः ॥ ५८ ॥ अथेदानीं धार्मिकोहं क्रूरं कर्म कथं करिष्यामीति, तत्राह । यदहङ्कारमिति । तत्रैवं सति यदहङ्कारमाश्रित्य क्रौर्यं युद्धं कर्म न करिष्यामीति मन्यसे चेन्मिथ्यैव व्यवसायो निश्चयो यतस्ते प्रकृतिः क्षत्रजात्यारम्भको रजोगुणस्वभावरूपस्त्वां तैर्युद्ध्यमाने सति युद्धे स्वयमेव नियोक्ष्यतीति मद्भावः ॥ ५९ ॥ ननु का तर्हि प्रकृतिस्तामेव विवृणोति । स्वभावजेनेति । तथा सति स्वभावजेन पूर्वोक्तेन क्षत्रियधर्मेण शौर्यादिना निबद्धो वशीकृतस्त्वं स्वेन कर्मणा हे कौन्तेय यन्मोहात्स्वाज्ञानात्कर्तुं नेच्छसि तत्त्वमीश्वरपारतन्त्र्यादप्यवशस्सन्करिष्यस्येवेति भावः ॥ ६० ॥ ननु क्व तर्हीश्वरस्तिष्ठतीत्याह । ईश्वर इति । एवन्तर्हि भर्गः शूली तथेशानश्चेश्वरस्सर्वदेहिनामित्या-

सर्वज्ञः सिद्धिपारगस्तस्माद्गुरोः प्रसादेन वेदितव्यः परः शिव इत्यादिद्रष्टव्यम् ॥५८ युद्ध्यमाने सतीति । तत्रैवं यदि तैः सह बलात्कारेण युद्ध्यमाने त्वम्पलायितश्चेत्तदा ते धर्मविपर्ययः यदि चावशः सँस्तैर्युद्ध्यमानश्चेत्तदा त्वावश्यकत्वात्तर्हि तत्कर्तव्यतैवास्तीति कृत्वा मदुपदेशेनैव तत्कृतो न क्रियतइति मदाशयः ॥५९॥ पारतन्त्र्यादिति । तद्यथा । ब्रह्मा विष्णुस्तथान्येपि देवाः सन्तीह ते्ष्वथ । स्वतन्त्रः शिव एवास्ति नाथ कार्या विचारणेत्यादिस्मृत्या त्वमप्यवशः सन्करिष्यसीत्यर्थः ॥ ६० ॥ हृद्देशइति । तद्यथा । शिवस्थाने शरीरेस्मिन्संस्थितस्स्वात्ममायया ।

भूतानि यन्त्रारूढानि मायया ॥ ६१ ॥ तमे-
व शरणं गच्छ सर्व्वभावेन भारत । तत्प्र-
सादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वत-
म् ॥६२॥ इति ते ज्ञानमाख्यातं गुह्यात् गुह्यतरं
मया । विमृश्यैतदशेषेण यथेच्छसि तथा कु-
रु ॥ ६३ ॥ सर्व्वगुह्यतमं भूयश्शृणु मे परमं

दिस्मृत्या गायत्र्यादौ दर्शित ईश्वरो हे ऽर्जुन सर्वभूतानां हृद्देशे ऽन्तःकरणे तिष्ठतीत्यर्थः, एवमिह विना शिवप्रसादं हि भ्रान्तिः क्वापि न नश्यतीत्यादिस्मृत्या यन्त्रारूढानीव मायया सर्वभूतानि भ्रामयन्नीश्वरस्तिष्ठतीत्यर्थः ॥ ६१ ॥ ननु च त्वं तु मया प्राप्तोसीति ततः परं किम्प्राप्तव्यमस्तीत्याह । तमेवेति । तत्रेत्थं सति तमेव सदाशिवं शरणङ्गच्छ न तु मां मायामयं देवकीसुतं किन्तु मत्तः परन्तमेवेश्वरं शिवस्यार्द्धे स्थिता गौरी तदर्द्धो हरिरिष्यतइत्यादिस्मृत्या शिवशक्त्या-त्मकं जगदिति सर्वभावेन विजानन्हे भारत तं शरणङ्गच्छेत्यर्थः तथा सति तस्य शम्भोः प्रसादेन यो वैष्णवस्सोपि च योगकाले शक्तिस्वरूपेण विचिन्त्य विष्णु-मित्यादिश्रुत्यावधारितां परां शान्तिं सप्तमभूमिकान्तच्छभ्यं शाश्वतं शिवमद्वैतं स्थानञ्च प्राप्स्यसीति परमार्थः ॥ ६२ ॥ अथेदानीन्तु प्रकृतग्रन्थमुपसंहरन्नाह । इतीति । तत्रैवं सति ते तुभ्यमत्यन्तप्रियाय ज्ञानं शास्त्रीयं मोक्षसाधनं गुह्याद् गुह्यतरं मयाख्यातं कथितमिति तदशेषेण विमृश्य नामोपक्रमोपसंहारादिषड्विधशास्त्रार्थ-निश्चायकलिङ्गैः पर्यालोच्य यथेच्छसि तथा कुर्वित्यर्थः ॥ ६३ ॥ तदेवं श्रुतौ

---

दुःखान्टमागरे घोरे मुह्यमानश्च शोचतीत्यादि द्रष्टव्यम् ॥६१॥ ननु समष्टिभावेन यच्च किञ्च जगत्यच इत्यादि श्रुत्या त्वमेव सर्वात्मना प्रत्यक्षोस्येव एवं व्यष्टिभावे-नापि त्वं श्रीकृष्णरूपतया मया प्राप्त एव त्वमसीत्यधिकं किं मामुपदेशङ्करोषी-त्यत आह्वानमाशङ्कते । नन्विति । एवं सतीह ते प्राप्तव्यन्तु यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठित इत्यादिश्रुतिसिद्धान्तवेद्यः परश्शिवो मत्तोधिको वेद्य इति तमेव सर्वभावेन सर्वाधिष्ठानत्वेन जानीहीत्यर्थः॥६२॥६३॥ शिवे भक्तिरिति। तथा च श्रुतिः,यदा चर्मवदाकाशम्वेष्टयिष्यन्ति मानवास्तदा शिवमविज्ञाय दुःखस्यान्तो

वचः। इष्टोसि मे दृढमतिस्ततो वक्ष्यामि ते हितम् ॥ ६४ ॥ मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु। मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोसि मे ॥ ६५ ॥ सर्व्वधर्मान्परित्यज्य मामेकं शरणम्व्रज। अहं त्वां सर्व-

भक्तिश्शिवे भक्तिर्गुरौ भक्तिश्च केवला, साधनम्ब्रह्मविद्याया नान्यथा सुरपुङ्गव इत्यादिब्रह्मगीतोक्तेर्ब्रह्मविद्योपदेशे गुरोर्गरीयस्त्वम्वक्तुम्प्रतिजानीते। सर्वेति। तत्रैवंसतीष्टोसि दृढमतिरिति मत्वा भूयः सर्वगुह्यतमं परम्वचश्शृणु ते तुभ्यं हितं मत्वा वक्ष्यामीत्यर्थः॥६४॥ ननु किन्तर्हि गुह्यतमं यद्वक्तुं स्वस्मिन्गुरुत्वं दर्शयसीत्याह। मन्मना भवेति। तथा च यस्य देवे परा भक्तिर्यथा देवे तथा गुराविस्यादिश्रुत्या मन्मना भव मद्भक्तेत्यादिना गुरुशिष्यभावनियमेन मन्ये त्वां कालमीशानमिति स्मृतिन्यायेन च मां सदाशिवमेवैष्यसि प्राप्नोषि यतो मे प्रियोस्यतः सत्यं ते प्रतिजाने प्रतिज्ञां करोमीत्यर्थः ॥ ६५ ॥ नन्वेवं गुरुश्चेद्भवांस्तर्हि शमदमादिषट्सम्पत्तियुक्ताय मह्यं किम्ब्रवीषीत्येकेनैव वचसा तत्वम्वक्तव्यमित्याह। सर्वेति। तत्रेत्थंसति त्यज धर्ममधर्मञ्चेति स्मृतिन्यायेनेन्द्रियाणि पराण्याहुरित्यादिपूर्वोक्तपरामर्शेन सर्वेन्द्रियधर्मान्स्पर्शादीन्परित्यज्याहंगिरोपासनया वेदैरनेकैरहमेव वेद्य इ-

---

भविष्यतीति पर्यवसिते यथा चर्मणावाद्यमुखवेष्टनवन्महाकाशवेष्टनं मनुष्याणां न सम्भवति तथा शिवमविज्ञाय मुक्तिरपि न सम्भवतीति हि तदर्थादिति भावः ॥ ६४ ॥ ननु त्रिविधोऽहम्भावो देहे जीवे तथेश्वरे चेति विवेचयन्नाह। तथा चेति। एवंसति इष्टापातं हरेर्देहमित्यतो देहे ऽहम्भावः पूर्वमेव बहुशो निरस्तो जीवेश्वरयोस्तु व्यष्टिसमष्ट्यविनाभासकं शिवमद्वैतन्तुरीयमेव प्रतिफलितमित्याह। मन्ये त्वामिति। एवन्तर्ह्यविनाशित्वात्स एवावशिष्यतइत्यहङ्गिरोपासनया सर्वदाहंशब्देन शिवमद्वैतम्परब्रह्मैव वस्तुतो गृह्यतइत्यवधेयम् ॥ ६५ ॥ नन्वात्मानन्त्वं विजानीयात्सर्वभूतगुहाशयं, श्लोकेन यदि वार्द्धेन चीर्णन्तस्य प्रयोजनमित्येवंरीत्या बहुशो दर्शितत्वात्तत् कुतो नोच्यतइत्याह। एकेनैवेति। तत्रैवंतीह सिद्धान्ते वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादिभिः वृक्षान्तरात्सजातीयो विजातीयश्शिलादित इत्यादिस्मृत्या त्रिविधभेदप्रयोजकं धर्मंसुतस्त्यज्यैकमेवाद्वि-

पापेभ्यो मोक्षयिष्यामि मा शुचः ॥ ६६ ॥
इदन्ते नातपस्काय नाभक्ताय कदा चन ।
न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूय-
ति ॥ ६७ ॥ य इदं परमं गुह्यं मद्भक्तेष्व-
भिधास्यति । भक्तिं मयि परां कृत्वा मा-

त्यादिश्रुतिसिद्धया सजातीयादित्रिविधभेदरहितं मामेकं शिवमद्वैतं शरणम्व्रजेत्यर्थः। एवं सत्यहं सर्वपापेभ्यो जन्ममरणादिसंकटप्रदेभ्यो बन्धुवर्गादिनाशजन्येभ्यश्च मोक्षयिष्यामीति मा शुचश्शोकं मा कार्षीरिति कीलकमित्यर्थः ॥ ६६ ॥ अथे-न्द्राय दध्यङ्ङाथर्वोपदेशवद्विनङ्क्ष्यतीत्यतो नाधिकारशून्यायेदम्पूर्वोक्तन्तत्वमुप-देष्टव्यमित्याह । इदन्तइति । एवंसतीदङ्गीतार्थसारन्तुरीयं तत्त्वं संसारविच्छित्त्यै मयोक्तन्तदेतत्तत्वं नातपस्काय नाभक्ताय न चाशुश्रूषवे गुरुभक्तिविमुखाय कदा च कदापि न वाच्यमित्यर्थः एवं न च मां वसत्यह्वाविवितिस्मृतिन्यायेन वासुदेव-म्पाशुपतं योऽभ्यसूयति तस्मै वाच्यमित्यर्थः किन्तु कृष्ण एव हि यष्टव्यो यज्ञैश्चैष सनातनः, सर्वरूपं भवं ज्ञात्वा लिङ्गे योऽर्चयति प्रभुमित्यादिस्मृत्युक्तया शैवं शा-न्तम्प्रणमत गोविन्दं परमानन्दमित्यादिगोविन्दाष्टकोक्तया च शैवं पाशुपतं मां योऽभिजानाति तस्मै वाच्यमिति परमार्थः ॥ ६७ ॥ एवमेव शिवैकतत्त्वोपदेश-कर्तुरपि गुरोः फलमाह । य इदमिति । तत्रैवंसति य इदम्परमङ्गुह्यङ्गीतार्थसारं

---

तीयम्ब्रह्म वेदितव्यं शिवमद्वैतम्विशिष्टातिरिक्तं शरणम्व्रजेत्यवधेयम् । कीलक-मिति । तत्रैवंसति परमशिवज्ञानाख्यमिदं कीलकमित्यर्थः, तद्यथा, स्थाणु-स्तम्भे शिवे कीले स्थाणुरस्त्रीक्रमूर्द्धनीति कोशादिति भावः ॥ ६६ ॥ यो-ऽभ्यसूयतीति। अत एव पाद्मे, सदाशिवम्प्रति विष्णुनोक्तम्। तद्यथा, तव निन्दाम्प्र-कुर्वाणो मद्भक्तिं कुरुते यदि, स मे द्वेष्यो न सन्देहस्सत्यं सत्यम्वदाम्यहमित्या-दिना तत्रैव विस्तरः ॥ ६७ ॥ शिवरूपिणमिति । ननु कथं सर्वभावेन गरिष्ठत्वं सर्वदेवेभ्यः परमशिवस्यैव प्रतिपाद्यते यतस्तद्रूपेणैव तदङ्गत्वेन वा सर्वथा शिव एव सर्वैराराध्यो भवतीति चेच्छृणु । तद्यथा, घोषलम्बषभतुमर्चैकवपुर्भार्यो स्वभार्यापतिर्वा बलं सखिता मदङ्गवहता इत्यादिरूपं दधौ, तत्पादे नयनार्प-

मेवैष्यत्यसंशयः ॥ ६८ ॥ न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः। भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥६९॥ अध्येष्यते च य इमं धर्म्यं सम्वादमावयोः। ज्ञानयज्ञेन तेनाहमिष्टस्स्यामिति मे मतिः ॥ ७० ॥ श्रद्धावाननसूयश्च शृणुयादपि यो नरः। सोऽपि मुक्तश्शुभाँल्लोकान्प्राप्नुयात्पुण्यकर्म्म-

मद्भक्तेष्वभिधास्यति स च मयि परां भक्तिं कृत्वा मामेव शिवरूपिणं यो वैष्णवस्सोपि च योगकाले शक्तिस्वरूपेण विचिन्त्य विष्णुं, शिवात्मके धामनि योजयेत्स्यादतश्चिदानन्दमयो हि भक्त इति श्रुतिन्यायेनैष्यति प्राप्नोतीत्यसंशय इत्यर्थः॥६८॥ तस्मादर्जुनस्य स्वस्मिन्नपि यस्य देवे परा भक्तिर्यथा देवे तथा गुराविति श्रुतिन्यायेन परांभक्तिं मन्वानो ऽवधारयति। न चेति। तत्रेत्थंसति न च तस्मान्मनुष्येषु मध्ये मे मम कश्चित्प्रियकृत्तमः प्रियकारी भवितेति मत्वा न च मे तस्माद्भवतोन्यः प्रियतरो भुवि भविष्यत्यपीति बोध्यम् ॥ ६९ ॥ तदिदानीमस्य गीताशास्त्राध्ययनस्य फलमाह। अध्येष्यतइति। एवन्तह्यावयोश्श्रीकृष्णार्जुनयोस्सम्वादं य इमं धर्माय हितं धर्म्यं ज्ञानयज्ञेनाध्येष्यते तेनाहङ्गुरुरूपेणेष्टस्स्यामिति मे मतिरित्यर्थः ॥ ७० ॥ तदेवमिहाध्ययनफलमुक्त्वा शृण्वतोप्यपूर्वम्फलमाह। श्रद्धावानिति। तत्रैवंसति गुरुत्वेन मयि श्रद्धावानपि म्लेच्छे ध्यानं जिने ऽहिंसा वैष्णवे

---

यच्च ज्ञातवांस्त्वद्देह भागो हरिः पूज्यात्पूज्यतरस्त्वमेव नहि चेत्को वा त्वदन्योधिक इति स्कान्दे मुनिवर्यैरुक्तत्वादित्यधिकं मत्कृते निर्द्वन्द्वे ऽद्वैताञ्जने च द्रष्टव्यम् ॥ ६८ ॥ ६९ ॥ ननु विना शिवप्रसादं हि भ्रान्तिः क्वापि न नश्यति, अत एव भ्रमन्त्यं ते भ्रमराः शिववर्जिता इत्यनेन शिवज्ञानस्यावश्यकत्वे स्थिते तत्र शिवेतरानपि दर्शयितुमाह। म्लेच्छ इति। तत्र तावन्म्लेच्छे ध्यानाधिक्यमिति गुणः परन्तु तत्र गोवधादिहिंसास्तीत्यनर्थः एवं जिने जैनमतवादिन्यहिंसास्तीति गुणः तथा वेदवाह्याचारत्वेन तत्रानर्थोस्तीति दोषः एवमेव वैष्णवे त्वर्चनाधिक्यमस्तीति गुणस्सोपि शिवभक्तिपरत्वविमुखत्वेनानर्थमूल एवेत्यर्थं

णाम् ॥ ७१ ॥ कच्चिदेतच्छ्रुतम्पार्थ त्वयैकाग्रे-
ण चेतसा । कच्चिदज्ञानसंमोहः प्रनष्टस्ते
धनञ्जय ॥ ७२ ॥ अर्ज्जुन उवाच ॥ नष्टो मो-
हस्स्मृतिर्ल्लब्धा त्वत्प्रसादान्मयाच्युत ।
स्थितोस्मि गतसन्देहः करिष्ये वचनन्त-
व ॥ ७३ ॥ सञ्जय उवाच ॥ इत्यहम्वासुदेव-
स्य पार्थस्य च महात्मनः । सम्वादमिमम-

भक्तिरुत्तमा, त्रीनेतान्नोद्धरिष्यामि हिंसाशुचिशिवेतरानित्युक्तरीत्या शिवैकानिष्ठ-त्वेनानसूयकश्च यो नरश्शृणुयात्सोपीह लोकाद्विमुक्तस्सन्पुण्यकर्मणा शुभान् लोका-न्प्राप्नुयादित्यर्थः ॥ ७१ ॥ तदेवं शिष्यस्य ज्ञानोत्पत्तिपर्यन्तं गुरुणा प्रयासः कार्य इत्यतोर्ज्जुनम्प्रति पृच्छति । कच्चिदिति । तत्रैवंसति हे पार्थ काच्चित्किं तदेत-न्मया पूर्वोक्तं ज्ञानं त्वयैकाग्रेण चेतसा श्रुतं न वा, अथ च कच्चित्किमज्ञानस-म्मोहो हे धनञ्जय प्रनष्टस्ते तव न वेति वक्तव्यमिति प्रश्नाशयः ॥ ७२ ॥ एव-मिह पृष्टोपि पुनरुपदेशानपेक्ष्यत्वं स्वस्येत्यर्ज्जुनोप्याह । नष्ट इति । तत्रैवंसति हे अच्युताज्ञानकृतो मोहस्संशयो विपर्ययो ऽसम्भवश्चेति त्रिविधोपि मे नष्टस्स्मृ-तिश्च त्वत्प्रसादान्मया लब्धेत्यर्थः । तदिदानीं तवोपदेशे स्थितोस्मि यतो गतसन्देह इति तवोपदेशवचनम्वाक्यं करिष्यइति नात्र संशय इत्याशयः ॥ ७३ ॥ तादि-मम्व सम्वादं सञ्जयोपि धृतराष्ट्राय स्मारयन्नाह । इत्यहमिति । तादित्थं सति वासुदेवस्य पाशुपतस्य धर्मस्य यो दक्षदुहितर्यजनिष्ट मूर्त्यां नारायणो नरऋषिः प्र-बलः प्रशान्तः । नैष्कर्म्यलक्षणमुवाच चकार कर्म योद्यापि चास्तऋषिवर्यनिषेविता-ङ्घ्रिरित्यादिस्मृत्युक्तया पार्थस्य पृथिव्यां प्रथितस्य महात्मनस्सम्वादमिमम-

---

इति बृहन्नारदीये विष्णुवाक्यादेवावगन्तव्यम् ॥ ७० ॥७१॥७२॥ त्रिविधोपीति । तत्र तावदन्तस्सत्वमयश्शम्भुः कर्पूराभस्तुरीयकः, दृष्ट्वा संहारकत्वेन भ्रान्त्या व-दन्ति तामसमित्यस्य वैष्णवस्य तु विज्ञेयश्शिवभक्तिपरायण इत्यस्य चाज्ञानाज्ञ-ज्ञो संशयः एवमिह गीताया गायत्र्यर्थपरत्वाज्ञानाद्विपर्ययः तथेहाम्रतशब्दा-भिधेयस्य भगवतश्शिवस्य गीतेत्यर्थज्ञानासम्भवश्चेति त्रिविधोप्यनेनोपदेशेन मे

श्रौषमद्भुतं रोमहर्षणम् ॥ ७४ ॥ व्यासप्रसा-
दाच्छ्रुतवानिमं गुह्यतमं परम् । योगं यो-
गेश्वरात्कृष्णात्साक्षात्कथयतस्स्वयम् ॥ ७५ ॥
राजन्संस्मृत्यसंस्मृत्य सम्वादमिममद्भुत-
म् । केशवार्जुनयोः पुण्यं हृष्यामि च मु-
हुर्मुहुः ॥ ७६ ॥ तच्च संस्मृत्य संस्मृत्य
रूपमत्यद्भुतं हरेः । विस्मयो मे महाराज
हृष्यामि च पुनः पुनः ॥ ७७ ॥ यत्र योगे-
श्वरः कृष्णो यत्र पार्थो धनुर्द्धरः । तत्र

द्भुतं यद्रोमहर्षणमश्रौषन्तद्भवते वृद्धाय धृतराष्ट्राय प्रज्ञाचक्षुषे स्मारितामित्यवधा-र्यम् ॥ ७४ ॥ तदिह सञ्जयोपि स्वजन्मनस्साफल्यं मन्वानः पुनराह । व्या-सेति । एवंसति व्यासप्रसादादेवाहमपि दिव्यज्ञानचक्षुष्मं शिवज्ञानसम्वादममृता-ख्यं परं गुह्यतमं श्रुतवांस्तथा योगं योगाख्यानञ्च योगेश्वरात्कृष्णात्स्वयं कथयत-श्श्रुतवानिति धन्योहमपीत्याशयः ॥ ७५ ॥ तदेवमतिहर्षेण पुनरप्याह । राज-न्निति । तत्रेत्थंसति हे राजन्केशवार्जुनयोस्सम्वादमद्भुतं न केवलं श्रुतवानेव किन्तु तत्पुण्यं संस्मृत्य संस्मृत्य मुहुर्मुहुराश्चर्यं मत्वा हृष्याम्यपीत्यर्थः ॥७६॥ अथा-परमप्याह । तदिति । तत्रैवंसतीह तदिदं हरेर्विश्वरूपमत्यद्भुतं संस्मृत्य संस्मृत्य मे मम महान्विस्मयो जात इति हे राजंस्तद्रूपञ्चाश्चर्यं दृष्ट्वा पुनः पुनर्हृष्यामीत्य-र्थः ॥ ७७ ॥ नन्वेतावतापि जयाजये कस्य विजयस्ते प्रतिभातीत्याह । यत्रे-

---

मम मोहो नष्ट इत्यर्थः ॥ ७३ ॥ ७४ ॥ योगमिति । तत्र तावदिह योगाख्या-नञ्च यमो नाम संसाराच्मनसो निवृत्तिः नियमो नाम तत्प्रयोगानुष्ठानन्तथा-सनन्तु स्वस्तिकसिद्धकमलासनादीन्यनेकशः एवम्प्राणायामः कुम्भकादिस्तथा प्र-त्याहारस्त्विन्द्रियाणामात्मनि निरोधः एवं धारणात्वात्मनि मनस्स्थितिः तथा ध्यानन्तु जीवात्मनोरेकतानत्वम्, एवं समाधिस्तु सर्वात्मना शिवत्वेन संस्थि-तिरिति विवेकः ॥ ७५ ॥ ७६ ॥ ७७ ॥ नन्वेतावन्तं महिमानं श्रीकृष्णोर्जुन-

**श्रीर्विजयो भूतिर्ध्रुवा नीतिर्म्मतिर्मम ॥७८॥**

**इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्ज्जुनसम्वादे संन्यासयोगो नामाष्टादशोध्यायः ॥ * ॥**

ति । तथा च यत्र योगेश्वरो योगाभ्यासबलेन शिवैकनिष्ठया लब्धवरः श्रीकृ-
ष्णो यत्र च पार्थोर्ज्जुनस्तद्द्वारेणैव च धनुर्द्धरस्तत्रैव श्रिया सहितो विजयो नीति-
र्भूतिश्चेति ध्रुवा मति र्ममेत्यतिविस्तराद्दुपरम्यते ॥ काण्डत्रयात्मकं स्मार्तं श्रुतितत्त्वै-
कदर्शनम् । वि[illegible]ताम्नोद्धरिष्या[illegible]न्निर्मितं भाष्यमद्भुतम् ॥ ७८ ॥ इति श्रीमत्पद-
वाक्यप्रम[illegible]यो नरश्शृण[illegible]राजेन्द्रविरचिते तत्त्वैकदर्शनभाष्ये संन्यासयोगनिरूपणं
[illegible]यादित्यर्थः [illegible]ायः ॥ * ॥

इत्यतोर्ज्ज[illegible]ानित्याह । लब्धवर इति । तदेतदुक्तं स्कान्दे, नरो नारायणश्चैव साम्बमिष्ट्वा पुरा खलु, सर्वस्ववरमाकांच्य लब्धवांस्तत्र मादनइति, एवं नरो नारायणश्चैव तावौ धर्मनिसन्ततावित्यादिना शान्तिपर्वण्यप्युक्तत्वादित्युपरम्यते ॥ दुग्धाम्बुवत्स्वच्छमिदं निरूपितं गुरोः प्रसादात्पितुरात्मदर्शिनः । विदन्तु विप्राः श्रुतिसारदर्शिनो सुह्यन्त्वविप्रा निगमार्थवर्जिताः ॥ ७८ ॥ इति श्रीमद्योगिवर्यविप्रराजेन्द्रात्मजविरचिते भाष्यप्रदीपे ऽष्टादशोध्यायः ॥ * ॥



